University of Mysore
Oriental Library Publications
SANSKRIT SERIES No 67

(मुहूर्तदर्शनम्)

# विद्यामाधवीयम्

विद्यामाधवविरचितम्

विष्णुशर्मविरचित मुहूर्तदीपिकायुतम्

द्वितीयसंपुटम् ६-१० अध्यायाः.

THE

# VIDYAMADHAVIYAM

OF

VIDYA MADHAVA

WITH

VISHNUSARMA'S MUHURTHADIPIKA

**PART II—CHAPTERS 6-10**

EDITED BY

DR. R. SHAMA SASTRY, B.A., PH.D., M.R.A.S.,

*Curator, Government Oriental Library, Mysore ; Director of Archæological Researches in Mysore, Periodical Lecturer to the Post-Graduates' Classes of the Calcutta University, and B.B.R.A S Campbell Memorial Medalist*

MYSORE
PRINTED AT THE GOVERNMENT BRANCH PRESS
1925

University of Mysore
Oriental Library Publications
SANSKRIT SERIES No 67

(मुहूर्तदर्शनम्)

# विद्यामाधवीयम्

विद्यामाधवविरचितम्

विष्णुशर्मविरचित मुहूर्तदीपिकायुतम्

द्वितीयसंपुटम् ६-१० अध्यायाः.

THE

# VIDYAMADHAVIYAM

OF

VIDYA MADHAVA

WITH

VISHNUSARMA'S MUHURTHADIPIKA

**PART II—CHAPTERS 6-10**

EDITED BY

DR. R. SHAMA SASTRY, B.A., PH.D., M.R.A.S.,

*Curator, Government Oriental Library, Mysore ; Director of Archæological Researches in Mysore, Periodical Lecturer to the Post-Graduates' Classes of the Calcutta University, and B.B.R.A S Campbell Memorial Medalist*

MYSORE

PRINTED AT THE GOVERNMENT BRANCH PRESS

1925

# विद्यामाधवीयस्य सव्याख्यस्य द्वितीयसंपुट-

# विषयसूचनी.

## सव्याख्यस्य विद्यामाधवीयस्य शोधनपत्रिका.

| पृ. | पं. | अशुद्धं. | | शुद्धं. |
|---|---|---|---|---|
| 6 | 5 | मध्थमेति | ... | मध्यमेति |
| ,, | 23 | क्रयां | .... | क्रियां |
| 7 | 18 | पत्रु | .... | पुत्र |
| 7 | 23 | भवति | .... | भवन्ति |
| 8 | 10 | शुक्रा | .... | शुक्रे |
| ,, | 18 | वीर्यवन्तो | .... | वीर्यवन्तौ |
| 9 | 14 | स्त्रिय: | .... | स्त्रियः |
| ,, | 22 | विषमो | .... | विषमौ |
| ,, | 23 | युगळौ | .... | युगळं |
| 10 | 2 | निरीक्षिते | .... | निरीक्षते |
| ,, | 3 | द्वयङ्गां | .... | द्वयंशां |
| ,, | 4 | ज्ञकां | ... | ज्ञगां |
| ,, | 5 | सौम्यावपि | .... | सौम्योऽथवा |
| 12 | 5 | त्रिकोण | .... | त्रिकोण |
| 26 | 15-16 | अन्यत्रोक्तं —धात्री कं — मस्त्रिगुरुस्त्रिलघुश्च नकारो | | |

भादिलघुश्च तथाऽऽदि लघुर्यः ।
जो गुरुमध्यगतो रलमध्यः
सोऽन्त्यगुरुः कथितोऽन्त्यलघुस्तः ॥
मः भूमिश्श्रियमातनोति यजलं वृद्धिं रवह्नीमृतिं ।
सो वायुः परदूरदेशगमनं तव्योम शून्यास्पदम् ॥
जस्सूर्यो रुजमातनोति च तथा भेन्दुर्यशो निर्मलम् ।
नोनाकश्चिरमायुरष्टकमिदं प्रोक्तं गणानां फलम् ॥
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्चय: ।
एतान् वर्णान् गुरून् विद्यात् अन्ये च लघवः स्मृताः॥ इति

| 28 | 3 | 12 | .... | 11 |
|---|---|---|---|---|

| पृ. | पं. | अशुद्ध | | शुद्ध |
|---|---|---|---|---|
| 36 | 3 | 16 | .... | 15 |
| 39 | 9 | 18 | .... | 17 |
| 44 | 4 | 19 | .... | 18 |
| 67 | 9 | ध्य्रु | .... | ध्यु |
| 71 | 14 | र्द | .... | र्दु |
| 72 | 16 | पूजाभि | .... | पूजाभिः |
| ,, | 19 | स स्ति | .... | समस्ति |
| 156 | 20 | हस्तेन्दु | .... | हस्तेन्द्र |
| 232 | 20 | नृ(म्राम्या) | .... | (नृग्रम्या) |
| 233 | 24 | नाट्य | .... | नाढ्य |
| 243 | 4 | ई(हृ)त्वा | .... | र्हत्वा |
| ,, | 6 | धनाया | .... | धनाख्या |
| ,, | 9 | युतः | .... | युतं |
| ,, | 10 | पादाख्ये | .... | पदाख्ये |
| ,, | 12 | पाद | .... | पदे |
| ,, | 14 | अष्टमे | .... | अष्टघ्ने |
| ,, | 15 | पादाखे | ... | पदाख्ये |
| ,, | 20 | पर्यन्ते | .... | नागघ्ने |
| 244 | 6 | शिष्टास्तस्करा | .... | शिष्टाभास्करा |
| ,, | 5 | र्हत्रा | .... | र्हत्वा |
| ,, | ,, | श्वादयो | .... | अश्वादयो |
| ,, | 11 | धनंधना | .... | धनाधना |
| ,, | 17 | मायदि | .... | मायादि |
| ,, | 20 | तन्मानं सप्ताभिर्हत्वा | | तन्मानमष्टाभिर्हत्वा |
| 245 | 3 | लब्धाब्द्र | .... | लब्धाब्द |
| ,, | 5 | भोज्य | ... | भाज्य |
| 245 | 13 | ध्यजो | .... | ध्वजो |
| 265 | अत्र त्रयोदश्यां पङ्क्तौ अर्थेत्याद्यन्तभागः नवमपङ्क्तेः परं पाठ्यः | | | |
| 270 | 17 | सकला | .... | सखला |

| पृ. | प. | अशुद्ध. | | शुद्ध. |
|---|---|---|---|---|
| 272 | 12 | वारुण | .... | वारुणे |
| 274 | 20 | दिग्नशौ | .... | दिग्राशौ |
| 275 | 20 | वज्रयेत्कुह्य | .... | वर्जयेत्कुड्य |
| 276 | 12 | कर्तुवं | ... | कर्तुवे |
| ,, | 22 | स्तम्भाद्यै | .... | स्तम्भाद्यैः |
| ,, | टिप्पणे | पदस्थिरं | .... | पदास्थिरं |
| 277 | 19 | चषुर्ष्व | .... | चतुर्ष्व |
| 278 | | शिशल्पनां | .... | शिशल्पिनां |
| ,, | 11 | देवता | .... | द्वैवता |
| 280 | 17 | करुते | .... | कुरुते |
| ,, | 18 | नांम | .... | नाम |
| 283 | 7 | द्धक्षिणे | .... | दक्षिणे |
| 285 | 1 | त्वे | .... | त्वेतु |
| ,, | 20 | चरोभयेतु | .... | चरोभयेषु |
| 286 | 3 | राजन्योवा | .... | राजान्योऽन्योवा |
| ,, | 9 | प्रजार्स्सिहे | .... | प्रजर्सिहे |
| 288 | 5 | दिवेव | .... | दिवैव |
| 289 | 20 | निस्वता | .... | निस्स्वता |
| 291 | 19 | पुन्नर्लग्न | .... | पुनर्लग्न |
| 292 | 5 | असद्ग्रहेस्तिपरो | ... | असद्ग्रहैस्स्थरो |
| ,, | 12 | प्रवेशयात्रा | .... | प्रवेशेयात्रा |
| 295 | 14 | हन्तै | .... | हान्तै |
| 297 | 10 | द्वात्रिंश | .... | द्वात्रिंश |
| ,, | 12 | स्फुठ | .... | स्फुट |
| ,, | 24 | समचर्नीयः | .... | समर्चनीयः |
| 314 | 13 | वीणधरः | .... | वीणाधरः |
| 316 | 5 | त्रीणि | .... | त्रीणि |
| 317 | 3 | वैष्णवान्नयांश | .... | वैष्णवान्त्यांश |
| ,, | 5 | आप्यक्ष्यद्यिन्त | | आप्यर्क्षाद्यन्त |

| पृ. | पं. | अशुद्धं | | शुद्धं |
|---|---|---|---|---|
| 318 | 3 | गार्गेण | .... | गार्ग्येण |
| 319 | 17 | 6 | .... | 5 |
| 320 | 17 | 7 | .... | 7 |
| 321 | 17 | 8 | .... | 7 |
| 322 | 7 | सिंह्म | .... | सिंह |
| ,, | 13 | त्युक्ता | .... | त्युक्ता |
| 326 | 10 | 9 | .... | 8 |
| ,, | 13 | कुळत्थ | .... | कुळुत्थ |
| 328 | 4 | मेषारन्त्य | .... | मेषान्त्य |
| 330 | 19 | 12 | .... | 13 |
| 331 | 13 | 13 | .... | 14 |
| 332 | 7 | 14 | .... | 15 |
| 336 | 1 | ज्ञ | .... | ज्ञः |
| ,, | 4 | गुरुव | .... | गुरव |
| ,, | 21 | तिथिर्मुहूर्त | .... | तिथिं मुहू |
| 339 | 3 | बिषीग | .... | मिषगि |
| ,, | 7 | तिमै | .... | तिमे |
| ,, | 16 | 22 | ... | 23 |
| 340 | 7 | वृध्यर्थं | .... | वृद्ध्यर्थं |
| ,, | 19 | 23 | .... | 24 |
| 341 | 9 | खदिरादा | .... | खदिरादिः |
| ,, | 18 | 25 | ... | 26 |
| ,, | 19 | दन्यि | .... | दीन्य |
| 342 | 3 | र्घाधी | .... | र्घादी |
| ,, | 10 | वृक्षा | .... | विष्ठिवृक्षा |
| ,, | 13 | 27 | .... | 28 |
| ,, | 14 | र्धदी | .... | र्धादी |
| ,, | 17 | 28 | .... | 29 |
| 343 | 13 | 29 | .... | 30 |

| पृ. | प. | अशुद्धं | | शुद्धं |
|---|---|---|---|---|
| 344 | 6 | आदिमम् | .... | आदिमं |
| ,, | 9 | सर्पेवु | .... | सर्पेषु |
| 345 | 1 | क क्षेत्रेषु | .... | लग्ने क्षेत्रेषु |
| ,, | 10 | श्रितैका | .... | श्रितैकां |
| ,, | 22 | प्रभृतं | .... | प्रभूतं |
| 346 | 12 | सङ्ग | .... | सङ्क्रू |
| 348 | 10 | मूलायप्पा | .... | मूलाप्यवा |
| ,, | 22 | 33 | .... | 34 |
| 349 | 14 | मन्देद्वो: | .... | मन्देन्द्वोः |
| ,, | 15 | 34 | .... | 35 |
| 350 | 8 | चन्दे | .... | चन्द्रे |
| 351 | 13 | 35 | .... | 36 |
| 352 | 3 | 36 | .... | 37 |
| ,, | 15 | निगुण्ढी | .... | निर्गुण्डी |

# विद्यामाधवीयम्

## अथ षष्ठोऽध्यायः.

### अथ गर्भाधानम्.

एवं मुहूर्तस्य दोषगुणबलाबलानि सामान्येनाभिधाय सांप्रतं प्रतिकर्म मुहूर्तमभिधातुमुपक्रमते—

**गर्भाधानं पूर्वमारभ्य पुंसां वेदोक्तं यत् प्रेतकार्यवसानम् । कर्मानेकं विद्यते तस्य पूर्वैरुक्तं युक्तं कीर्तयामो मुहूर्तम् ॥ १ ॥**

स्त्रीणां गर्भे तद्योनिद्वारा पुंरेतोगतस्यात्मन आधानं गर्भाधानं । प्रेतस्य पञ्चत्वमापन्नस्य तस्य पितृभिः सह संयोगः प्रेतकार्यं । गर्भाधानमारभ्य प्रेतकार्यान्तं पूर्वमादौ सृष्टिकाले विप्रादीनां वेदोक्तं स्वाचारतया श्रुतिस्मृत्याद्युक्तं [1] अनेकं संस्कारात्मकं व्यवहारात्मकं यत् कर्म—क्रियाजातं विद्यते तस्य क्रियाजातस्य युक्तं विधानयोग्यं पूर्वैर्मुनिभिरुक्तं मुहूर्तं वयं ब्रूमः । इतः परमिति शेषः ।

सर्वमुहूर्तेषु पूर्वोक्ताः सामान्यविहिता दोषगुणा वक्ष्यमाणमुहूर्तविधिना बाध्येरन्नित्याशङ्क्य तत्परिहारायाह—

**दोषाध्यायनिरूपितान् बलयुतान् दोषानशेषांस्त्यजेत् अध्याये कथिता निजे शुभगुणा ग्राह्या**

[1] अनेकं व्यवहारात्मकमेव कर्म ॥ पा ॥

**यथासंभवम् । अत्याज्योऽत्र गणश्शुभो निगदितस्सर्वत्र सामान्यतः तं तत्राभिदधे पुरा यदि पुनः कश्चिद्विशेषः क्वचित् ॥ २ ॥**

प्राक् दोषाध्यायोक्तान् प्रबलानशेषान् सामान्यविहितान् स्वविशेषविहितांश्च त्यजेत् । निजे गुणाध्याये कथिताः शुभगुणाः यथासंभवं ग्राह्याः उपादेयाः । [1]अत्र शास्त्रे उक्तः अत्याज्यः— अग्रचन्तकेत्यादिकः त्याज्यः तदन्योऽत्याज्यः । एष गणस्सर्वशुभकर्मणि शुभः इति सामान्यतः—एष सामान्यविधिः । क्वचित् पुनः कर्मणि कश्चिद्विशेषो यद्यस्ति तं तं विशेषविधिं तत्रैव पुराऽभिदधे—अभिधास्यामि । एतदुक्तं भवति—क्वचित्कर्मणि त्याज्यं तारात्मकं ग्राह्यमस्ति, यथा विवाहे मघामूले । अत्याज्यमपि त्याज्यमस्ति, यथा चौळे मैत्रप्रतिपच्चापापराह्णादिकम्, एवं यत्र यत्र विशेषोऽस्ति तत्तत्प्रकरण एव तमभिधास्य इति । गर्भाधानकालमाह—

**विभावरीः षोडश भामिनीनां ऋतूद्गमाद्या ऋतुकालमाहुः । नाद्याश्चतस्रोऽत्र निषेकयोग्याः पराश्च युग्माः सुतदाः प्रशस्ताः ॥ ३ ॥**

ऋतो—रजसः—योनिगतास्रस्य उद्गमो दर्शनं, स यस्मिन् दिने तद्दिनसंबन्धिरात्र्यादिषोडशरात्रीः स्त्रीणामृतुकालमाहुः । रात्रौ तु रजोदर्शनेऽर्धरात्रात् प्राक् पूर्वं दिनं, परं परदिनमिति एके । प्राक्सूर्योदयात्प्राग्दिनमेवेत्यन्ये । आदशममुहूर्तान्तात् पूर्वं, ततः परं परादिनमित्यन्ये तथा च स्मृतिः—

[1] अत्याज्यश्चात्र गणः प्रागुक्तः अग्रचन्तकेत्यादि ॥ पा ॥

अर्धरात्रावधिः काल [1]इष्यते ऋतुसूतके ।

अन्यत्र—

रात्रावेव समुत्पन्ने मृते रजसि सूतके ॥
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ।

स्मृत्यन्तरे—

रात्रिं कृत्वा त्रिभागां तु द्वौ भागौ [2]पूर्वमेव तु ।
उत्तरांशः प्रभातेन युज्यते ह्यृतुसूतके ॥

इति । मुनिमतेष्वेष्विदं श्रेयो नेदं श्रेय इत्यभिधातुमनुचितमतो यथादेशाचारं ग्राह्यम् । अत्र ऋतुकाले आद्यरजोदर्शनसंबन्धिरात्रिप्रभृतयश्चतस्रो रात्रयः स्त्रीणां पुंभिः निषेकस्य गर्भाधानस्य योग्या न स्युः । पराः पञ्चम्याद्याः आषोडशाद्द्वादश रात्रयश्च निषेकस्य सुप्रशस्ताः । तासु युग्माः षष्ठ्यष्टमीदशम्याद्याः षड्रात्रयः शुभाः । अन्ये पञ्चम्याद्याः षट् स्त्रीप्रजोत्पत्तिप्रदाः इति शेषः । अत्र गुरुः—

अस्रं यद्योनिसंभूतं तदार्तवमिति स्मृतम् ।
ततस्सर्तुमती नारी नाम्नाऽपि च भवेत् स्वयम् ॥
निशाषोडशकं नारी संज्ञितर्तुमतीति सा ।
तावद्योग्यः प्रजास्थाने नैवाद्याह्चतुष्टयम् ॥
शेषेष्वोजे स्त्रिया जन्म युग्मे पुंसः प्रकीर्तितम् ।

इति । आद्यरात्रिचतुष्टये निषेके फलमुक्तं वसिष्ठेन—

प्रथमेऽहन्यृतुप्राप्ते निषेकं यः करिष्यति ।
शीघ्रं स मृत्युमाप्नोति द्वितीये स्त्री मरिष्यति ॥

---

[1] सूतकादौ विधीयते । इति मिताक्षरा पाठः ॥ [2] पूर्व एव तु ॥ पा ॥

तृतीये यन्निषिक्तः स्यात् गर्भस्य मरणं भवेत् ।
ऋत्वन्तेऽल्पायुषो जाताः तस्मादेतानि वर्जयेत् ॥

इति । ऋत्वन्ते—चतुर्थदिन इत्यर्थः । ऋतुफलयोगकालं निषेककालं चाह—

**शीतज्योतिषि योषितोऽनुपचयस्थाने कुजेनेक्षिते जातं गर्भफलप्रदं खलु रजस्स्यादन्यथा निष्फलम् । दृष्टेऽस्मिन् गुरुणा निजोपचयगे कुर्यान्निषेकं पुमान् अत्याज्ये च समूलभे शुभगणे पर्वादिकालोज्झिते ॥ ४ ॥**

प्रतिमासं स्त्रीणां यदार्तवमुत्पद्यते तत्तासां जन्मभाच्चन्द्रेऽनुपचयस्थाने पीडर्क्षाख्ये त्रिषडेकादशजन्मजामित्रेभ्योऽन्यत्र अनिष्टस्थाने स्थितेन कुजेन ईक्षिते दृष्टे युक्ते वा जातं दृष्टमार्तवं गर्भफलप्रदं खलु स्यात् । पुंरेतोनिषेके सतीति शेषः । अन्यथा चन्द्रे स्त्रीजन्मभादुपचये शुभप्रदे त्रिषडेकादशजन्मजामित्रभे कुजेन दृष्टयुक्ते जातमार्तवं निष्फलं निषेके कृतेऽपि गर्भफलं न ददातीत्यर्थः । तथा च वसिष्ठः—

स्त्रीजन्मराशेश्चन्द्रस्तु धनबन्धुसुतेषु च ।
व्ययाष्टधर्मस्थानेषु गतः पीडर्क्षगो भवेत् ॥
तदारयुक्ते दृष्टे वा आर्तवं स्त्री प्रपद्यते ।
[1]यदा काले तथाभूतमाधानक्षममार्तवम् ॥
न भवत्यन्यथा चात्र गर्भाधानक्षमं त्वृतु ।
तदा जीवेन दृष्टश्चेदिति स्त्रीपुरुषागमम् ॥

---

[1] यथा ॥ पा ॥

इति । गुरुश्च—

अङ्गनाजन्मनक्षत्रपीडातारां गते विधौ ।
भौमेक्षिते तदा योगे मासिमास्यृतुधारणम् ।
यदि कुर्यान्निषेकं तत्प्रजा भवति नान्यथा ॥

इति । अत्र पीडातारां गते विधाविति वचनाच्चन्द्रस्य दौर्बल्ये विपत्प्रत्यरवधर्क्षगते वेत्यर्थः । पुमानस्मिन्निन्दौ निजोपचयगे स्वजन्मराशेरिष्टस्थानगते गुरुणा दृष्टे युक्ते वा निषेकं सफलर्तुमत्यां योषिति गर्भाधानं कुर्यात् । तथा च बादरायणः—

पुरुषोपचयगृहस्थो गुरुणा यदि दृश्यते हिममयूखः ।
स्त्रीपुरुषसंप्रयोगं तदा वदेदन्यथा नैव ॥

इति । अन्ये तु एवं व्याचक्षते—चन्द्रे योषितः स्वजन्मराशेरुपचयगते गुरुणा दृष्टे सति तस्या निषेकं पुमान् कुर्यात् इति । तथा च वराहमिहिरः—

कुजेन्दुहेतुः प्रतिमासमार्तवं
गते तु पीडर्क्षमनुष्णदीधितौ ।
अतोऽन्यथास्थे शुभपुंग्रहेक्षिते
नरेण संयोगमुपैति कामिनी ॥

केचिदविशेषेणाहुः । तथा च सारावल्याम्—

उपचयभवने शशभृद्दृष्टो गुरुणा सुहृद्भिरथ वाऽसौ ।
पुंसा करोति योगं विशेषतः शुक्रसंदृष्टः ॥

इति । कस्मिन् दिन इत्यत्राह—अत्याज्ये शुभाख्ये गणे ममूलभे पर्वादिकालोज्झिते निषेकं कुर्यात् इति । अत्र गुरुः—

हरिहस्तानुराधा च स्वाती वारुणरेवती ।
त्रीण्युत्तराणि मूलं च रोहिणी चोत्तमाः स्मृताः ॥
चित्रादित्यैन्द्रवास्तिष्यस्तुरगश्चेति मध्यमाः ।
शेषाणि चाधमान्याहुर्वर्ज्यानीह निषेधतः ॥

श्रविष्ठा मध्यमेति वसिष्ठगार्ग्यादयः । तथा च वसिष्ठः—

मित्रतिष्यौ श्रविष्ठा च सौम्यादित्याश्वयुक्तथा ।
एतानि मध्यमर्क्षाणि बुद्धिमान् परिवर्जयेत् ॥

इति—

अष्टमी पर्वरिक्ताश्च तिथयो दश वर्जिताः ।
शेषास्तु तिथयः श्रेष्ठाः [1]कृष्णोन्त्यांशकं त्रिकम् ॥

षष्ठ्यपि वर्ज्या । तथा चात्रिः;—

रिक्ताषष्ठ्यष्टमीपर्ववर्ज्याः स्युस्तिथयश्शुभाः ।

इति—

सोमज्ञगुरुशुक्राणां वारवर्गोदयश्शुभाः ।
तेषां दृष्ट्युदयाश्चैव नेतरेषां सराहुणाम् ॥

इति । राशयो मीनवर्ज्यास्स्युरोजाः पुंजनने शुभाः ।

इति । गार्ग्यः—

राशयश्चरस्थिरग्राह्या अपि पतियुतवीक्षिता द्विशरीराश्च ।

इति । पर्वणस्त्याज्यगणत्वेन वर्जने सिद्धे पुनः पर्वादिकालोज्झित इति पर्युदासः पूर्णिमाया अत्याज्यगणत्वेऽपि वर्जनार्थः । दर्शस्य विशेषतो वर्ज्यत्वाभिधानार्थो वा । यस्माच्छ्रीपतिः—

षष्ठीषु तैलं फलमष्टमीषु
क्षुरक्रियां चैव चतुर्दशीषु ।

[1] कृष्णेनान्त्यांशक ॥ पा ॥

स्त्रीसेवनं नष्टकलासु पुंसा-
मायुःक्षयार्थं मुनयो वदन्ति ॥

पर्वादिकालोज्झित इत्यत्रादिशब्देन जन्मसंक्रमव्यतीपातवैधृत-नष्टदिनश्राद्धदिनानि गृह्यन्ते । योऽन्यः कश्चन पुण्यकालः स च गृह्यते । अत्र सर्वसिन्धौ—

संक्रान्त्यादौ दिने पुण्ये श्राद्धे सूतकशावयोः ।
पञ्चम्युत्तरफल्गुन्योर्वर्जयेन्मैथुनं बुधः ॥

इति । स्मृतिश्च—

मृतजन्मर्क्षदिवसे प्रतिपन्नवमीषु च ।
श्राद्धकर्ता चान्यदिने संक्रान्तौ ग्रहणे तथा ॥
आरार्कवारे सप्तम्यां चतुर्दश्यष्टमीषु च ।
एकादश्यां पौर्णमास्यां दर्शषष्ठ्योर्विशेषतः ॥
तैलाभ्यङ्गं रतिं मांसं दन्तकाष्ठं च वर्जयेत् ।

इति—

**वीर्याढ्यौ स्वनवांशगावुपचये पुंसोऽर्कशुक्रौ यदा योषायाश्च तथा निशाकरकुजौ गर्भस्तदोत्पद्यते । वायौ दक्षिणभागगे सुरगुरौ लग्नत्रिकोणाश्रिते पुन्तारासु नरांशके पुरुषभे तत्कर्म पत्रुप्रदम् ॥ ५ ॥**

स्थानादिबलयुक्तौ स्वराशिनवांशगतौ सूर्यशुक्रौ पुंस उपचये स्वजन्मराशेरुपचयस्थाने स्थितौ ; तथा तादृशौ वीर्याढ्यौ स्वर्क्षांशगौ चन्द्रकुजौ योषायाश्च जन्मराशेरुपचये स्थितौ यदा द्वावेको वा भवति तदा निषिक्ते गर्भ उत्पद्यते । तथा च स्वल्पजातके—

बलयुक्तौ स्वगृहांशेष्वर्कसितावुपचयर्क्षगौ पुंसाम् ।
स्त्रीणां वा कुजचन्द्रौ यदा तदा संभवति गर्भः ॥

इति । एवं गर्भोत्पादनयोगे विद्यमाने वायौ प्राणवायौ पुंसो दक्षिणनासापुटगते तथा सुरगुरौ निषेकलग्नत्रिकोणस्थानाश्रिते पुंनक्षत्रेषु अश्विनीतिष्यादिषु नवसु नरांशके—पुंग्रहांशके पुरुषभे पुंराशौ मेषमिथुनादिविषमराशौ यन्निषेककर्म क्रियते तत्कालकृतं निषेककर्म पुत्रप्रदं भवति । वायौ वामस्थानाश्रिते स्त्रीग्रहे लग्न-त्रिकोणस्थे स्त्रीतारासु स्त्रीग्रहांशके वृषकन्यादिसमराशौ यदि निषेकः स्यात् स्त्रीप्रजा भवति । अत्र गुरुः—

शुक्राधिके बलैर्युक्ते पुमान् वायौ च दक्षिणे ।
रक्ते सिते बलैर्युक्ते नरि वायौ च वामगे ॥
लग्नधर्मसुतराशिमुपेते वाक्पतौ दनुजराजगुरौ वा ।
पुत्रकाम उदयेऽथ निजे वा प्रेयसीं प्रमुदितः समुपेयात् ॥

इति । निषेके पुत्रप्रदयोगानाह—

**भास्वज्जीवौ वीर्यवन्तौ विलग्नादोजे राशावो-जराश्यंशके वा । जीवेन्दू वा पुत्रदौ लग्नसंस्थौ अन्ये चास्मिन्नीदृशास्सन्ति योगाः ॥ ६ ॥**

वीर्यवन्तौ स्थानादिबलयुक्तौ सूर्यगुरू निषेकलग्नादोजराशा-वोजराश्यंशके वा यत्रतत्र राशौ स्थितौ पुत्रप्रदौ । तथा वीर्यवन्तौ जीवचन्द्रौ लग्नसंस्थौ च पुत्रप्रदौ स्तः । अत्र गुरुः—

गुर्वर्कावोजराशिस्थावोजांशे वाऽपि लग्नतः ।
जीवेन्दू वा विलग्नस्थौ स्थानादिबलसंयुतौ ॥

एवं योगेष्वमीषु स्युः पुत्रास्स्वतौ निषेकतः
निर्बीजिनामिमे न स्युरुलूकस्यार्करश्मिवत् ॥

इति । अस्मिन् गर्भाधान ईदृशाः पुंजन्मदाः योगाः अन्ये शास्त्रोक्ताः सन्ति । ते ग्रन्थविस्तरभयान्नोक्तः इति शेषः । ते यथा—

अत्र श्रीपतिः—

वीर्यभाजि सगुरौ भृगुपुत्रे
दुर्बलेषु च परेषु नितान्तम् ॥
पुंप्रसूतिकथितेऽपि च काले
कामयेत् प्रियतमां तनयार्थी ॥

सर्वसिन्धौ—

केन्द्रे चन्द्रात्त्रिकोणेऽच्छजीवौ स्त्रीधर्मगो बुधः ।
त्रिषडायेषु पापाश्च योगोऽसौ पुत्रजन्मदः ॥
स्त्रीधर्माङ्के ज्ञजीवाच्छा आर्यचन्द्रौ स्वधीशौ ।
धीधर्माङ्के सितेन्द्वार्या योगाः पुंजन्मदास्त्रियः ॥
अर्केन्दुशुक्रभूपुत्रास्स्वांशे वोपचयस्थिताः।
कुर्वन्ति निश्चयात्पुत्रं वाक्पतिश्चेत्त्रिकोणगः ॥

वराहमिहिरः—

बलयुक्तौ स्वगृहांशेष्वर्कसितावुपचयर्क्षगौ पुंसाम् ।
स्त्रीणां वा कुजचन्द्रौ यदा तदा संभवति गर्भः ॥

इति—

ओजर्क्षे पुरुषांशकेषु बलिभिः लग्नार्कगुर्विन्दुभिः
पुंजन्म प्रवदेत् समांशकगतैः युग्मेषु तद्योषितः ॥
गुर्वर्कौ विषमो नरं शशिसुतौ वक्रश्च युग्मे स्त्रियं
द्व्यंशस्था बुधवीक्षणाच्च युगलौ कुर्वन्ति पक्षे स्वके ॥

युग्मे चन्द्रसितावथौजभवने स्युर्ज्ञारजीवोदया
लग्नेन्दू नृनिरीक्षितौ च समगौ युग्मेषु वा प्राणिनः ॥
कुर्युस्ते मिथुनं ग्रहोदयगता द्व्यङ्गांशकान् पश्यति
स्वांशे ज्ञे त्रितयं ज्ञकांशकवशात् युग्मं त्वमिश्रैस्समम् ॥
अन्योन्यं यदि पश्यतश्शशिरवी यद्वाऽऽर्किसौम्यावपि
वक्रो वा समगं दिनेशमसमे चन्द्रोदयौ चेत् स्थितौ ॥
युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ
पुंभागे सितलग्नशीतकिरणाः स्युः क्लीबयोगाः स्मृताः ॥

अन्यत्र—

पुंग्रहाः पुंग्रहारूढाः षष्ठा? येधिपतौ पुमान् ।
धीखात्मसु स्ववर्गस्थौ शुक्रेन्दू स्त्रीप्रसूतिदौ ॥

एवामाद्या इमे पुंस्त्रीक्लीबयोगाः शास्त्रान्तरेषूक्ताः सन्ति ते अन्ये च मातापितृघातका योगाः प्रयत्नेन परिहर्तव्यास्सन्ति । ते यथा—

अत्र वसिष्ठः—

अर्काद्यमारौ सप्तस्थौ पुंस एव गदप्रदौ ।
व्ययास्तगौ प्रदौ मृत्योस्तौ च चन्द्रात् त्रयस्तथा ॥
एकैनकेन [1]दृष्टे चेत् चन्द्रार्कौ मृत्युदौ तयोः ।
चन्द्रार्कलग्नयुक्ते वा ताभ्यां यदि च संयुते ॥
तयोः क्षेत्रस्थितश्चन्द्रः ताभ्यां दृष्टोऽथ वा यदि ।
पापाभिलाषलग्ने वा शुभैर्यदि न वीक्षिते ॥
योगेष्वेतेषु कालेषु निषेको गर्भनाशकृत् ।
लग्नराशिगतं मन्दं क्षीणेन्दुसहितः कुजः ॥
यदि पश्यति चेन्नारी गर्भिणी मरणं व्रजेत् ।

[1] दृष्टश्चेत्.

पापान्तरस्थलग्नेन्दू सौम्यैर्यदि न वीक्षितौ ॥
गर्भेण तौ विनश्येतां युगपत्पृथगेव वा ॥
तथैव कुरुते चन्द्रो बन्ध्वन्त्यगकुजार्कयोः ।
चन्द्राच्चतुर्थगाः क्रूराः निधनस्थः कुजो यदि ॥
गर्भेण तौ विनश्येतां लग्नाद्वाऽपि तथैव च ।
लग्नास्तगतभौमार्कौ गर्भं (?) शस्त्रेण नाशकृत् ॥

इति । अत्र गर्भनाशयोगे मासाधिपतिग्रहनिपीडनकाले तत्स्राव-पातादि वदेत् । तथा च वसिष्ठः—

यदि गर्भस्य मासेशाः स्वमासे कलुषाश्रिताः ।
स्रावस्य कारकास्स्युस्ते तथा सौम्यास्सुखीकराः ॥

मासाधिपतयश्च तेनैवोक्ताः—

शुक्रारगुरुसूर्येन्दुमन्दज्ञोदयपास्तथा ।
मासानामष्टमानां तु क्रमेणेशाः प्रकीर्तिताः ॥

गर्भवृद्धिकृद्योगश्च तेनैवोक्तः—

शुभग्रहयुते लग्ने चन्द्रे वा शुभसंयुते ।
तस्मिन् काले निषिक्तस्य वर्धनं स्यात् सुखान्वितम् ॥
लग्नाद्वाऽथ शशाङ्काद्वा विना पापाच्छुभग्रहाः ।
पुत्रस्त्रीसुखकर्मार्थनवमस्थानमाश्रिताः ॥
कुर्युर्गर्भविवृद्धिं च पापाश्च त्रिषडायगाः ।

इति । निषेकयोगवशात् गर्भस्य मूकपङ्गुबधिरविकृताङ्गत्वादयो भवि-ष्यन्ति । तथा च वसिष्ठः—

पापा भसन्धिगाश्चन्द्रं यदि पश्यन्ति चेदवाक् ।
कुर्वन्ति शुभयुक्ताश्च चिराद्यतेन तद्गिदम् ॥

कुब्जं चन्द्रोदये कुर्यात् कर्क्यां भौमादिवीक्षिते ।
मीनलग्ने यमेन्द्वाराः स्थिरां कुर्वन्ति पङ्गुताम् ॥
धर्मार्थभ्रातृपुत्रस्थाः पापास्सौम्यैर्न वीक्षिताः ।
गर्भस्य श्रोत्रनाशं च कुर्युस्सप्तमगादिताम् ॥
निषेकसमये लग्नात्त्रिकोणस्थो बली बुधः ।
अन्ये च बलहीनाश्चेत् (?) हस्ताद्विगुणं भवेत् ॥
लग्ने मृगान्त्यद्रेक्काणे दृष्टे मन्देन्दुभानुभिः ।
तत्र वामनके योगे शुभदृष्टे न दुष्यति ॥
चन्द्रार्कसहिते लग्ने सिंहे मन्दारवीक्षिते ।
अन्धो भवत्यसौ गर्भो बुद्बुदाक्षश्शुभाशुभैः ॥
सौम्यर्क्षांशस्थमन्दारौ सदन्तं कुरुतः प्रजाः ।
द्वादशस्थो हिनस्त्यक्षि वामं चन्द्रो रविः परम् ॥
चक्रसान्धिस्थिते पापे युक्तश्चन्द्रो जडङ्करः ।
त्रिकोणराशिद्रेक्काणैः पापयुक्तैर्यदा भवेत् ॥
बलहीनाश्शुभास्तत्र विशिरा विभुजाङ्घ्रिकः ॥
बलयुक्तैश्शुभैर्दृष्टे युक्ते योगा न दोषदाः ।

इति । एवं जातकोक्तशुभाशुभयोगाः भूपालचमूपवसुमत्सुखचिरायुरुन्मत्तचण्डालभिक्षाशनसरोगाल्पायुराद्याः यथासंभवमाधानकाले योज्याः । ते च ग्रन्थविस्तरभयात् नेहाभिधीयन्ते । एवं विचार्य अशुभकालं परिहृत्य शुभकाले ऋतुमत्यां स्त्रियां निषेकं कुर्यात् । तथा च गुरुः—

एवं कालं परिज्ञाय बुद्धिमान् दैवचिन्तकः ।
निषेचयेत्सुतोत्पत्त्यै नरो बीजान्वितस्सुखी ॥

इति । एवमाहितस्य गर्भस्य स्त्रीपुंजन्मप्रश्ने तत्कालजातपुंस्त्रीसंज्ञ-निषेकयोगैस्तत्प्रसूतिर्वक्तव्या । अन्ये त्वाहुः ।

गर्भप्रश्ने तु नारीणामारूढे विषमर्क्षभे ।
पुंग्रहेण युते दृष्टे गर्भस्थः पुरुषो भवेत् ॥
पुंराशिस्पर्शने देहे पुमान् भवति निश्चयः ।
देहस्य दक्षिणे भागे स्पर्शनेन पुमान् भवेत् ॥
अन्यथा स्त्रीप्रसूतिस्स्यात् स्त्रीग्रहस्य युतीक्षणात् ।
प्रश्नाक्षरे मुनिहते स्वनवांशसमन्विते ॥
तिथियुक्ते स्वरैर्लब्धे समे स्त्री विषमे नरः ।
नामर्क्षे वा तथा वाच्यम् ॥
तद्दृक्षं च तिथिं वारं प्रश्नवर्णसमन्वितम् ।
एकीकृत्याचलैर्लब्धे समे स्त्री विषमेऽन्यथा ॥
वर्णत्रयं तु संगृह्य पृच्छकस्य मुखाच्च्युतम् ।
वर्गक्रमेण संस्थाप्य पुंस्त्रीजन्म समासमैः ॥
वर्गक्रमेण विज्ञेयास्ततो माससनिरूपणम् ।
द्विगुणान्नन्दसंभक्ताच्छेषान् मासान् विनिर्दिशेत् ॥
शेषे वाऽस्तं च संयोज्य पुनर्नन्दैर्विभाजयेत् ।
एवं पुनः पुनः कुर्यात् यावत् भ . . . . . ॥
ते मासाः सुस्फुटा ज्ञेया गर्भस्य वरवर्णिनि ।
प्रश्ने ये विषमा वर्णास्ते गर्भे पुत्रजन्मदाः ॥
द्विचतुर्थाः स्त्रीजनकाः षण्डजन्मानुनासिकैः ।
विहाय लग्नं विषमर्क्षसंस्थः
सौरोऽपि पुंजन्मकरो विलग्नात् ।

प्रोक्तग्रहाणामवलोक्य वीर्यं
वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥

गर्भस्य प्रसवमासराशिवेलाश्च तत्कालराशिद्वादशांशात्रिंशांशैर्वदेत् । तथा चाहुः—

गर्भप्रश्ने चरे राशौ दशमे मासि सूयते ।
स्थिरेणैकादशे मासि द्विदेहे द्वादशे भवेत् ॥
निषेकस्फुटचन्द्रं तु लिप्तीकृत्य क्रमेण तु ।
शून्यभूतैः कुभृल्लब्धान सैकान् संशोध्य मण्डलम् ॥
शेषं चन्द्रस्थितर्क्षादि सूतिकाले भवेत्तदा ।
तत्कालेन्दुनवांशात् जामित्रे शीतगौ स्थिते प्रसवः ॥
उदयनवांशाधिपतेः क्षेत्रे तस्मिन् यदा तदा प्रसवः ।
यावानुदेति दिनरात्रिसमानभागः
तावद्गतं दिननिशोः प्रवदन्ति जन्म ॥

इति—

## . अथ पुंसवनम्.

एवं गर्भाधानकालमुक्त्वा अथ—

"गर्भाधानमृतौ पुंसः सवनं [1]स्पन्दनात्पुरा"

इति स्मृत्युक्तस्य पुंसवनाख्यगर्भसंस्कारस्य कालमाह—

**कुर्यात्पुंसवनं रमारमणभे पुष्येऽपि वा सद्गृहे**
**लग्नस्थे निधने ग्रहेण रहिते मासे तृतीये बुधः ।**
**शस्तौ दृष्ट्युदयौ सितामृतरुचोर्नात्र क्रमात्की-**

[1] स्यन्दनात्पुरा.

**तितौ वीणाकर्कटकन्यका न शुभदाः पुंराशयोऽन्ये शुभाः ॥ ७ ॥**

पुंसवनं नाम गर्भसंस्कारमाधानदिनात्प्रभृति तृतीयमासे श्रवणे पुष्ये वा नक्षत्रे सद्ग्रहे—शुभग्रहे लग्नस्थे लग्नान्निधने—अष्टमस्थाने ग्रहेण शुभाशुभेन च रहिते कुर्यात् । अत्र कर्मणि शुक्रचन्द्रयोः दृष्टयुदयौ शस्तौ । यद्यपि शुक्रदृष्टिचन्द्रोदयावन्यकर्मसु दोषदौ ताविह शुभप्रदौ स्त इत्यर्थः । शुभाशुभग्रहभावदृष्टयादयः क्रमात् न कीर्तिताः । अपि तु ये असाधारणाः ते अभिहिता इत्यर्थः । राशिषु मिथुनकर्कटकन्याराशयो न शुभदाः । उक्तेभ्यो अन्ये पुंराशयः मेषसिंहतुलाचापकुम्भराशयः शुभाः । अत्र गुरुः—

गर्भे सुस्थापिते चास्य वक्ष्ये पुंसवनस्य तु ।
कालं यस्मिन् कृते गर्भः पुमान् भवति यस्य तत् ।
गर्भस्य स्थापनात् कालात् तृतीये मासि चोदितः ॥

गार्ग्येणात्र विशेष उक्तः—

"प्रथमगर्भस्य प्रथमे मासि पुंसवनं कार्यं, अन्यत्र तृतीये मासि" ॥

इति—

तिष्ये वा श्रवणे वाऽपि नक्षत्रे ज्ञसितांशके ।
चन्द्रादित्यांशगौ केचित् वदन्ति बलिनौ यदि ॥

अत्रिणा तु—

मित्रार्कादित्यमूलेन्दुबुध्नचभान्यष्टमे शुचौ ।
पापांशादान् कर्कियुग्मे त्यजेन्नारीं शुभामपि ॥

इत्युक्तम् ॥ वसिष्ठः—

गुरुशुक्रबुधेन्दूनां द्रेक्काणदिवसांशगाः ।
तेषां चोदयहोराश्च प्रशंसन्ति मनीषिणः ॥

श्रीपतिना कुजार्किवारावपि शुभावुक्तौ—

श्रवणं सकरं पुनर्वसू
निरृतेर्भं च सपुष्यको मृगः ।
रविभूसुतजीववासरे
कथितं पुंसवनादिकर्मसु ॥

इति—

कुळीरो मिथुनं कन्या वर्ज्यांश्शेषास्तु शोभनाः ।
चन्द्रोदयं प्रशंसन्ति शुक्रस्येक्षणमेव च ॥
नैधनस्था ग्रहास्सर्वे नेष्टाश्चान्ते शुभग्रहाः ॥

इति । गुरुश्च—

षड्वर्गे शोभनाख्यानमुदये च विशेषतः ।
पुंभागे शोभने लग्ने सुगुणे दोषवर्जिते ॥

इति । अनुक्ता राशयोऽपि शुभेक्षिता ग्राह्या इति ।

अनुक्तेऽपि च राशौ च शुभं स्याच्छुभवीक्षिते ।
कन्यायां न प्रशंसन्ति शुभदृष्टियुतेऽपि वा ॥

## अथ सीमन्तम्.

इति अथ सीमन्तकालमाह—

**चित्राश्विवायुवसुवारुणमैत्रयुक्तं त्याज्यं गणं च परिहृत्य गणश्शुभोऽन्यः । सीमन्तकर्माणि न की-**

**टहरी प्रशस्तौ कालोऽपि नामकरणेऽथ निषेक-तुल्यः ॥ ८ ॥**

सीमन्ताख्यगर्भसंस्कारकर्मणि मित्रादिषण्णक्षत्रयुक्तं त्याज्य-मृक्षगणं परिहृत्य अन्यः अत्याज्यगणः रोहिणीमृगशिरपुनर्वसुपुष्य-हस्तश्रवणरेवत्युत्तरात्रयात्मकः शुभः । तथा च वसिष्ठः—

रोहिण्यां चैव तिष्ये च हस्तादित्युत्तरासु च ।
श्रवणे चैव रेवत्यां मृगशीर्षे तथैव च ॥
सीमन्तोन्नयनं कुर्यात् शुभांशे शुभलग्नगे ।
शुभद्रेक्काणभागेषु दिवसेषु प्रशस्यते ॥

इति । चशब्दोऽनुक्तसमुच्चयार्थः; तेन चतुर्थादिसममासाः श्रेष्ठा इत्युक्तम् । तथा च अत्रिः—

चतुर्थे चाद्यगर्भाया मासि सीमन्तमुन्नयेत् ।
षष्ठेऽष्टमे वा सौरेण रिक्तां दर्शं च वर्जयेत् ॥

अत्र अन्यत्र च मासप्रोक्तकर्मणि सर्वत्र सौरेण व्यवहारः । यस्मात् गुरुः—

मासप्रोक्तक्रिया ये स्युः ते सर्वे सौरमासतः ।

इति । अत्र पञ्चदशी चेन्न शुभा । अत्र गुरुः—

तिथीनां विंशतिः प्रोक्ता रिक्ताविष्टिविवर्जिताः ।
पक्षच्छिद्राश्च रिक्ताश्च विना पञ्चदशीं शुभाः ॥
चतुर्दशीं चतुर्थीं च कदाचिच्छुभमाह कः ।
पञ्चदश्यां च संप्रोक्तं चन्द्रे तु शुभकर्मणि ॥

इति । राशिषु कीटहरी—वृश्चिकसिंहौ द्वौ न शस्तौ । तथा च अत्रिः—

शुभांशे नैधने शुद्धे सिंहाळिपरिवर्जिते ।

इति । श्रीपतिः—

षष्ठे मास्यथ वाऽष्टमे तदधिके वीर्योपपन्ने विधौ
चेष्टैर्दृष्टतनौ नृनामभगते पुंलग्नभागेषु च ।
धीधर्माख्यचतुष्टयेषु च शुभैः पापैश्च तद्व्यगैः
मृत्युद्वादशवर्जितैश्च मुनिभिः सीमन्तकर्म स्मृतम् ॥

इति । तथोक्तकालासंभवे सर्वकर्माणि योगे कर्तव्यानीति गुरुणा तद्योगा उक्ताः—

असंभवे यथोक्तस्य कालस्योक्ते च मासि च ।
दृष्टेरेव तदाख्यातमन्यत्रास्मिन् विना भवेत् ॥
ओजराश्युदये जीवे पुत्रर्क्षे चौजराशिगे ।
चन्द्रे शुभाक्रियायोगे योगस्सीमन्तकर्मणः ॥

अयं कालस्सर्वत्र समः—

महाबलिनि केन्द्रस्थे जीवे शुक्रेऽथ वा यदा ।
चन्द्रस्सत्कर्मकर्ता चेत् योगस्सीमन्तकर्मणः ॥
त्रिषडेकादशे पापेष्वेको यदि बलान्वितः ।
शुभांशकगते चन्द्रे योगस्सीमन्तकर्मणः ॥

अयं कालस्सर्वत्र गर्भे समः । तथा च गुरुः—

सीमन्तस्य य उद्दिष्टः कालो नक्षत्रपूर्वकः ।
गर्भं प्रति पृथक्कार्यं सर्वं पुंसवने समम् ॥

इति । अपिशब्दः समुच्चयार्थः । तेनेहानुक्तविष्णुबलिकर्म गृह्यते । तत्कालश्च अत्रिणोक्तः—

गर्भमासेऽष्टमे विष्णुबलिं पुष्याजविष्णुषु ।
द्वादश्यां वाऽथ सप्तम्यां स्नायाद्दुष्णोदकेन च ॥

इति—

जातकर्मक्रिया जातमात्रे पुत्रे विधीयते ॥

इति। तत्काल एव आचार्येणाभिहितः यतस्तु तारादि नापेक्षणीयम्। यथाऽऽहुः--

तिथिभिर्वारताराद्यैः फलं नेच्छन्ति सूरयः।

इति। तथाऽपि तदानीं तत्र पितुरसन्निधानादिना जातकर्मक्रिया यदि न क्रियते। ततः सूतकान्ते अन्यत्र शुभदिने वा कुर्यात् तथा च नारदः—

तस्मिन् जन्ममुहूर्ते वा सूतकान्तेऽपि वा शिशोः।
जातकर्म तु कर्तव्यं पितृपूजनपूर्वकम् ॥

श्रीपतिश्च—

मृदुध्रुवक्षिप्रचरेषु भेषु
सूनोर्विधेयं खलु जातकर्म ॥

इति। ज्योतिषार्णवे—

त्रिपूर्वाभरणी ज्येष्ठाकृत्तिकाऽहिमघास्तथा।
विशाखर्क्षं च निन्द्यास्स्युः शेषाः सर्वे शुभावहाः ॥

इति—

स्थिरर्क्षाणि विशेषेण दर्शने शुभदानि तु।
अन्योन्यं वश्यकाले च त्वनुकूले विशेषतः ॥

इति—

जातमात्रे पिता कुर्यात् पुत्रे स्नात्वाऽस्य दर्शनम्।
स्नानाशनात्पुरो वाऽपि नाभिच्छेदात्पुरोऽथ वा ॥
एष्वतीतेषु कालेषु शुभयोगे शुभोदये।
जातकर्मक्रियां कुर्यात् पुत्रायुश्श्रीविवृद्धये ॥

स्थिरलग्ने स्थिरांशे वा पुष्करांशेऽथ वोत्तमे ।
सत्क्रिये शुभदृष्टेन्दौ जातकर्म विधीयते ॥

इति ।

### अथ नामकरणम्.

नामकरणकालः अथ—साकल्येन निषेकतुल्यः-निषेकोक्ततिथिनक्षत्रराश्यादिसदृशः । नामकर्मणि ताराराश्यादि सर्वं निषेकवदित्यर्थः । यथा निषेके समूलभोऽत्याज्यगणः शुभ इत्युक्तं तथा नामकरणेऽपि समूलभोऽत्याज्यगणश्शुभः । अत्र वसिष्ठः—

उत्तरारेवतीहस्तमूलपुष्यास्सवारुणाः ।
श्रवणादित्यमैत्रं च स्वातीमृगशिरास्तथा ॥
प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि ॥

इति ।

नारदस्त्वाह चित्रायां नामकर्म सुशोभनम् ।
अश्विन्यां च मघायां च मूले सौम्ये च मध्यमम् ॥

गुरुः—

रिक्तर्क्षपञ्चदश्यौ च पक्षच्छिद्राश्च वर्जिताः ।
नामकर्मणि पूज्याश्च शेषितास्तिथयस्सदा ॥

इति—

राशयश्च स्थिराश्श्रेष्ठाः द्विस्वभावाश्शुभैर्युताः ।
श्रेष्ठा नेष्टास्तथा शेषाः यदि युक्ताश्शुभग्रहैः॥
स्थिरराशौ शुभं विद्यादधोमुख्यां न शोभनम् ।
उभये तिर्यङ्मुख्यां च मध्यमं नाम कीर्तितम् ॥
ऊर्ध्वमुख्यां चरे चैवमधमं परिकीर्तितम् ।
बुधभार्गवजीवानामशंके दिवसोदये ॥

भास्करार्कजभौमानां वर्जयेदंशकादिकम् ।
पूर्वाह्णश्श्रेष्ठ इत्युक्तो मध्याह्नस्तु विशेषतः ॥
अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ।
स्वामिनामनि रात्रौ च न दोषश्शुभदं च तत् ॥

इति । जन्मतो दशमादिदिनेषु सुलग्ने शिशोः खट्वारोहं कुर्वन्ति । तथाऽऽहुः—

खट्वारोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा ।
षोडशे दिवसे वाऽपि द्वाविंशे जन्मतश्शिशोः ॥

इति । अत्र अष्टमशुद्धिरिष्टेति प्रागेवोक्तम् । तथा च वसिष्ठः—

अष्टमस्था ग्रहास्सर्वे नेष्टास्ते नामकर्मणि ।

द्वादशशुद्धिश्चाभीष्टेति गार्ग्यः—द्वादशाष्टमं शुद्धं भवेदिति षष्ठशुद्धिरप्यन्यैरुक्ता ; यथोक्तं नारायणेन—

षष्ठं सर्वग्रहैर्हीनं नामकर्मणि शस्यते ॥

इति । सूर्यादीनां प्रतिभावं पृथक्फलमनेनोक्तम्—

बन्धुस्त्रीधर्मपुत्रस्थाः पापा हन्युः कुमारकम् ।
लग्नादिदिनतस्सूर्यादिफलं वक्ष्ये क्रमेण तु ॥
अन्धता जडता सौख्यं बन्धुद्वेषित्वमस्य तु ।
अमेधता मृतिः कान्तिर्व्याधिर्मेधा धृतिः क्षयः ॥
जडतां धनितां लक्ष्मीं बन्धुमत्वमपुत्रताम् ।
भयं श्रियं मृतिं क्षेमं पुष्टिं वृद्धिं सरोगताम् ॥

पञ्चमेऽपि चन्द्रः शुभः इति वसिष्ठः—

धनभ्रात्रायपुत्रस्त्रीनवमस्थः शुभः शशी ॥

इति । अत्रेयं व्यवस्था—शुक्ले शुभः कृष्णेऽशुभः ।

इति । कुजः—

मृत्युं नैस्स्वं यशो व्याधिं क्लैव्यं क्रौर्यं मृतिं सुखम् ।
धार्मिकत्वं सुमेधां च श्रियं व्याधिं प्रयच्छति ॥
पूजां पुष्टिं धृतिं लक्ष्मीं जयं रोगं मृतिं भयम् ।
अरोगतां जयं क्लेशं दद्याद्भृगुसुतः क्रमात् ॥
व्याधिं दुःखं श्रियं क्लेशं शोकं रोगं मृतिं सुखम् ।
शौर्यं नैस्स्वं धनं रोगं क्रमात् सौरिः प्रयच्छति ॥
उदये राहुकेतू च जामित्रे च विवर्जयेत् ।

इति । अथ नामकरणलग्ने स्वोच्चादिग्रहयुतिदृष्टिभ्यां फलविशेषमाह—

**उच्चस्थितेन विहगेन युतेऽथ दृष्टे लग्ने कृतं भवति नाम भुवि प्रशस्तम् । नीचस्थितेन विकलं सुहृदृक्षगेण लोकप्रियं वरमपीत्यवदद्वसिष्ठः ॥**

स्वोच्चराशिगतेन ग्रहेण शुभेनाशुभेन वा युते दृष्टे वा प्राग्लग्ने कृतं नाम भुवि प्रसिद्धं—प्रख्यातं भवति । नीचस्थितेन ग्रहेण युते दृष्टे वा प्राग्लग्ने कृतं नाम विकलमप्रसिद्धमफलं वा भवति । सुहृदां मित्रग्रहाणामृक्षगतेन युते दृष्टे वा कृतं नाम शृण्वतो लोकस्य प्रियमभिमतं श्रेष्ठमपि भवतीति वसिष्ठः स्वसंहितायामवदत् ।

तथा च तद्वाक्यं—

उच्चस्थग्रहलग्ने वा दृष्टश्चोच्चगतेन वा ।
यदा नाम तदा कुर्वन् स नाम्ना कीर्तितो भवेत् ॥
नीचस्थग्रहलग्ने वा दृष्टश्चेन्नीचनिष्फलम् ।
मित्रस्थग्रहलग्ने वा पश्येद्वा लग्नमाश्रितः ।
तदा नामानि कुर्वंश्चेन्नाम श्रुतजनप्रियम् ॥

इति । अपिशब्दः समुच्चयार्थः । तेन शत्रुराशिगतेन युते दृष्टे वा कृतं नाम लोकद्वेषकरं भवति । तथा च वसिष्ठः—

शत्रुस्थगृहलग्ने वा दृष्टश्चेद्वाऽरिराशिगैः ।
यस्मिन् काले तदा कृत्वा शत्रुद्वेषकरं भवेत् ॥

इति । इतिशब्दः प्रकारवचनः ; तेन स्ववर्गगतेन युतदृष्टे कृतं नाम ख्यातं—प्रख्यातं शुभं च भवति । तथा च गुरुः—

स्वोच्चस्थषड्वर्गगतग्रहाणां
लग्नेऽथ वा वीक्षणयुक्तराशौ ।
शुभग्रहाणां च विशेषतश्च
नामानि कीर्तिं शुभदां करोति ॥

इति । एवं सम्यग्विचार्य सुमुहूर्ते नाम कुर्यात् । तथा च गुरुः—

नामकर्मकृते काले सर्वसंपद्विवर्धते ।
यज्ञादिभिर्विशेषाख्यां धर्मतो राजभिस्तथा ॥
शुभाख्यां धारयेत्सौम्यां नामानि सुमुहूर्तधृत् ।
असन्मुहूर्ते यो नाम गृह्णीयादशुभान्यसौ ॥
नामानि बहु गृह्णीयादलक्ष्म्या श्रेय एव च ।
तस्माद्दैवैर्नरैर्वाऽपि कर्तव्यं नाम शोभने ॥
काले पित्रा सुतस्यास्य गुरुणा वाऽतिशोभनम् ।

इति । ननु च विप्रादीनां जन्मतो द्वादशादिदिनेषु नाम कर्म स्मर्यते । तथा च गुरुः—

दशमे द्वादशे वा तज्जन्मतो दिवसे शुभम् ।
षोडशे विंशके चैव द्वात्रिंशे वर्णतः क्रमात् ॥

इति । किमर्थोऽयं शुभर्क्षतिथ्यादिविधिः यस्माद्दिनोक्तकर्मसु तारातिथ्यादि न निरीक्ष्यते—

एतैर्दोषैर्युते वाऽपि प्राप्ते काले समाचरेत् ॥

इति । अत्रोच्यते—यदा देशकालोपघातादिना प्रोक्तदिने नाम कर्तुं न शक्यते तदा परतः शुभदिने नाम कर्तव्यमिति । अत्र ज्योतिषार्णवे—

एतैर्दोषैर्युते वाऽपि प्राप्ते काले तु कारयेत् ।
ततः ? विधाने तु वारतिथ्यृक्षराशिषु ।
शुभयोगेऽनुकूले च नामकर्म समाचरेत् ॥

इति । तथा च नारदः—

देशकालोपघाताद्यैः कालातिक्रमणं यदि ।
अनस्तगे भृगाविज्ये तत् कार्यं चोत्तरायणे ॥
चरस्थिरमृदुक्षिप्रनक्षत्रे शुभवासरे ।
चन्द्रताराबलोपेतादिवसेऽथ शिशोः पितुः ॥
शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते ।
काले नाम प्रयोक्तव्यं सद्भिर्स्वस्ति वाच्य च ॥
संपूज्य विधिवद्विप्रान् दैवज्ञं च विशेषतः ।

इति । वसिष्ठोऽपि—

जन्मभाद्द्वादशे वाऽह्नि दशाहे वा विशेषतः ।
कुर्याद्वा नामकरणं कुमारं तमिति श्रुतिः ।
तदलाभे सुनक्षत्रे शुभांशकरणान्विते ।
सुलग्ने तिथिसंयुक्ते नामकुर्यादिति श्रुतिः ॥

इति । अन्ये त्वाहुः । द्वादशाहादिसंप्राप्तादिनेषु नाम कृतं चेदशुभमेव भवतीति । तथा चाहुः—

संप्राप्तदिवसे नाम यदि कर्तुं न शक्यते ।
कुनामकथितो लोके चरति श्रीविवर्जितः ॥

इति । उक्तकालालाभे योगा उक्ता गुरुणा यथा—

अलाभे प्रोक्तकालस्य योगान् वक्ष्यामि नामनि ।
केन्द्रे त्रिकोणे वा जीवे पापेष्वन्यतरो भवेत् ॥
चन्द्रे शुभांशके सौम्ये योगो नामनि शोभनः ।
भवे शुक्रेऽथ वा क्रूरे केन्द्रे शतिकरो गुरौ ॥
सिते पक्षे शुभो योगः संपदे नामकर्मणि ।
विक्रमे क्रूरसंयुक्ते व्यये रिक्ते शुभोदये ॥
शुभकर्मरते चन्द्रे योगो नामनि शोभनः ।
रिक्तव्ययाष्टमे जीवे केन्द्रगे सति षष्ठगे ॥
पापे शुभांशगे चन्द्रे योगो नामनि संपदे ।

इति । श्रीपतिश्च—

गुरौ भृगौ वाऽपि चतुष्टयस्थे
सन्तः प्रशंसन्ति हि नामधेयम् ॥

इति । तच्च शिशोः स्वजन्मर्क्षलग्नर्क्षचतुर्थाष्टमव्ययर्क्षाक्षरे तदाद्यक्षरं सद्गुणं ग्राह्यं नाम कुर्यात् । तथा च गुरुः—

स्वजन्मलग्नराश्योर्ये व्ययादि चतुरो ग्रहाः ।
घातका ये परे चाष्टौ शोभनास्ते च नामनि ॥
त्रिकोणर्क्षाक्षरास्सर्वे बान्धवा नामपूर्वजाः ।
द्विषष्ठदशमे सेव्याः त्रिसप्ताये तु पोषकाः ॥

एवं नामाक्षराण्युक्तफलमालोच्य नाम तत् ।
नक्षत्रनाम गृह्णीयात् युग्माक्षरसमन्वितम् ॥
आदिघोषवदन्तस्थमन्तरङ्गं शुभप्रदम् ।
एवं नामास्य संवीक्ष्य योजयेद्दैवविद्बुदः ॥
कर्तव्यं श्लोकबन्धे च गुणश्लोकादिबन्धने ।

इति । अक्षराणि तेनैवोक्तानि । अत्र इति द्रौमेषात्—

इयमक्षरसंयोगं मन्त्रे भृत्यजनेऽथ वा ।
इई उकारासिंसहे स्युरंअःक्षः कन्यका भवेत् ॥
कवर्गात्पञ्चवर्गास्स्युः कालिकादिघटान्त्यगाः ।
मीने यरलवाश्चैव राशिष्वेषु लिपिस्थितिः ॥
राशिं चैवाक्षरैस्तुल्यमंशान् कृत्वा विचारयेत् ।
क्षितिचन्द्रार्कवायूनां गणानां स्थिरराशयः ॥
चराणां चैव राशीनां द्यौस्समुद्रानलाम्बराः ।
वृषान्मेषाद्यमास्सर्वे क्रमेणैते गणाह्वयाः ॥

गणस्वरूपं तत्फलं च अन्यत्रोक्तं—

धात्रीमस्त्रिगुरुश्श्रियं मुखलघुर्योवारिवृद्धिं परां ।
रोऽग्निर्मध्यलघुर्मृतिं सपवनो देशभ्रमं प्रान्तगुः ॥

इति ।

### अथोपनिष्क्रामणम्.

अथ निष्क्रामणकालमाह—

**गृहान्निष्क्रामणं पूर्वमुपनिष्क्रामणं शिशोः ।**
**चतुर्थे मासि कर्तव्यं कालः प्राशनवत् स्मृतः ॥**

अनालोकितबाह्यप्रकाशस्य शिशोः गृहात् गृहद्वारात् पूर्वं प्रथमं यन्निष्क्रामणं तदुपनिष्क्रामणकर्म । तत् शिशोः जन्मत आरभ्य

चतुर्थे मासि कर्तव्यम् । अत्र लग्नादिकः प्राशनवत्—वक्ष्यमाणान्नप्राशनवत्--वक्ष्यमाणान्नप्राशनकालतुल्यः पूर्वाचार्यैः (स्मर्यते) उक्तः—

उपनिष्क्रामणं नाम गृहात् प्रथमनिर्गमः ।
अकृतेऽस्यां क्रियायां स्याच्छीघ्रायुर्नाशनं शिशोः ॥
कृते संपद्विवृद्धिस्सद्यादायुष्यं धनमेव च ।

इति । चतुर्थे मासि बालस्योपनिष्क्रमणोऽन्नभुक्तिवदिति वसिष्ठः—

अन्नप्राशननक्षत्रदिवसोदयराशिषु ।
कुर्यान्निष्क्रमणं तत्र वक्ष्ये तेषां शुभाशुभम् ।
अलङ्कृत्य शिशुं सम्यगभ्यर्च्य द्विजदेवताः ॥
स्वस्ति वाच्य समारूढवाहनो निर्गमेत् गृहात् ।
शिशुना सह मित्राणि निर्ययुर्वाद्यघोषवत् ॥
चत्वरे सुशुभे देशे पुष्पाढ्ये बालमर्चयेत् ।
रक्षां कृत्वाऽथ बालस्य बलिं कृत्वा पुरारये ॥
शिशुमादाय सर्वे ते ययुर्गेहं यथा पुरा ।
अभ्यर्च्यान्नादिभिर्देवं दैवज्ञांश्च द्विजानपि ॥

एके जन्मतः एकत्रिंशद्दिने शङ्खेन क्षीरं पाययन्ति। यथाऽऽह वसिष्ठः—

एकत्रिंशद्दिने धात्री पयः शङ्खेन पाययेत् ।
अन्नप्राशननक्षत्रदिवसोदयराशिषु ॥

अथ अन्नप्राशनम्.

इति । अथ अन्नप्राशनस्य कालमाह—

**मासस्तज्जननादितोऽर्कगतिजः षष्ठोऽष्टमो वा समः कैश्चित्सावनसंज्ञितो निगदितस्साम्यं तयो-**

**रुत्तमम् । बालस्य प्रथमान्नभोजनविधावत्याज्य उक्तो गणस्त्याज्यर्क्षेष्वपि शूर्पनैरृक्रतमघाः शस्ता नवान्नाशने ॥ १२ ॥**

बालस्य—शिशोः—स्तनन्धयस्य प्रथमे अन्नप्राशनविधौ तज्जननादितः बालस्य भोक्तुर्जन्मादिनादितः षष्ठोऽष्टमो वा समो दशमद्वादशौ वा अर्कगतिजः सौरो मासः उक्तः । अथ कैश्चित्—बृहस्पत्यादिभिः मासप्रोक्तेषु कर्मसु सावनो मासो ग्राह्य इति मत्वा तैरन्नप्राशनकर्मणि सावनो मासो ग्राह्य इत्युक्तः । ननु कैश्चित्सौरो मासः कैश्चित्सावनो मासो ग्राह्य इत्युक्ते कतमो ग्राह्यः इत्यत्राह— साम्यं तयोरुत्तमं—तयोः सौरसावनयोः साम्यं सादृश्यमुत्तमं—युक्तमित्यभिप्रायः । अत्याज्यो गणश्चात्र ग्राह्यः । विषममासः त्याज्यगणश्च वर्जनीयः । अत्र नारदः—

अन्नेन वर्धते दैवमन्नेनायुर्विवर्धते ।
आरोग्यं वर्धतेऽन्नेन तस्मादन्नाशनं परम् ॥

प्रथमान्नाशकालस्य शुभत्वे सुशुभावहः ।
अशुभे त्वशुभं सर्वमायुरारोग्यपूर्वकम् ॥

इति । गुरुः—

तस्मात्परीक्ष्य कर्तव्या नवभुक्तिः शुभेप्सुभिः ।
मासि षष्ठेऽथ सौरेण अष्टमे दशमेऽपि वा ॥
द्वादशे वा परं विद्यात् युग्मेषु शिशुजन्मतः ।
यानि कार्याणि चोक्तानि मासि मासि शचीपते ॥
तेष्वेव स्यात्तु मासेषु मासः कालस्तु सावनात् ।

इति । यद्यप्यष्टमादिष्वपि अन्नाशनमभ्यधायि । तथाऽपि षष्ठे मासि कर्तव्यम् । तत्रैव मुख्यत्वेन विध्यवधारणात् ॥

अन्नाकाङ्क्षा यदि शिशोः पश्चादप्यन्नकाङ्क्षया ।
भिक्षार्थी पर्यटेद्देशाद्दरिद्रस्याद्यतस्ततः ॥
षष्ठे मास्येव कर्तव्यं नवान्नप्राशनं शिशोः ।

इति । तत्रालाभेऽष्टमे कार्यम् । यत् गुरुः—

पञ्चाशद्दिवसास्त्रिघ्नाः पश्चात्त्रिहतसप्तकैः ।
अर्वागेवोत्तमा भुक्तिर्मास्यन्येऽप्येवमूचिरे ॥

इति । यद्यप्यत्राप्यविशेषेण युग्ममासेऽप्यन्नप्राशनमुक्तं । तथाऽपि कन्यकादीनां पञ्चमादिष्वविषममासेषु कर्तव्यम् । यत आह नारदः—

षष्ठे मासेऽष्टमे वाऽथ पुंसां स्त्रीणां तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥

इति । अत्याज्यतारा अत्रिणोक्ताः—

तिष्यादित्यान्त्यचित्राश्विशताकश्रोत्तरानिले ।
मित्रविष्णिवन्दुवसुषु नवान्नं भोजयेच्छिशुम् ॥

इति । तत् भोक्तृनवत्वे विहितम् । अथ भोज्यनवत्वे विशेषमाह— त्याज्यर्क्षेष्विति । नवान्नाशने सुतभोज्याशने त्याज्यगणोक्तनक्षत्रेषु शूर्पनैर्ऋतमघास्तिस्रोऽप्यधिका ग्राह्याः । अपिशब्दादत्याज्याश्च । अत्र वसिष्ठः—

नवान्नभोजने शस्ताः मूलेन्द्राग्निमघास्तथा ।
आर्द्राग्न्यैन्द्रयमाश्लेषाः त्रीणि पूर्वा तथैव च ॥
सर्वान्नभोजने नेष्टाः शोकरोगभयप्रदाः ।
सौम्याश्वयुज आदित्यपौष्णवैष्णववासवाः ॥

सप्तानुराधावायव्यं त्वष्टा चित्रोत्तरात्रयम् ।
वारुणी रोहिणी चैव शस्ता सर्वान्नभोजने ॥

इति । तिथ्यादयोऽप्यत्याज्याश्शुभदाः अत्र गर्गः—

पक्षयोरुभयोरुक्तं कृष्णेनान्त्यांशकं त्रिकम् ।
नवमीं क्रमविष्टिं च पक्षच्छिद्रांस्तथैव च ॥
यत्नेन वर्जयेच्छेषास्तिथयो भोजने शुभाः ।

इति ।

याम एव विवर्ज्यस्स्यात्सार्पेष्वपि च विष्टिषु ॥

नन्दां च वर्जयेत् इत्यन्ये । तथा च नारदः—

रिक्तां दिनक्षयं नन्दां द्वादशीमष्टमीमिमाम् ।
त्यक्त्वाऽन्यतिथयश्श्रेष्ठाः नवान्नप्राशन ... ।

इति ।

शशिनि शुभांशस्थे शस्तास्समस्तास्तिथः ॥

इति । नारदः—

वर्जितेष्वपि भोक्तव्यं चन्द्रे मित्रशुभांशगे ।

इति ।

बुधशुक्रगुरूणां तु वाराश्शुभकरास्तथा ।
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ।
अर्काङ्गारकमन्दानां वाराश्चापि शुभप्रदाः ॥
यदा वाराधिपस्तिष्ठेत्स्वोच्चमित्रगृहे तदा ।
गुरुणा बलिना वाऽपि वीक्षितश्च च बलान्वितः ॥

इति । शुभाशुभराश्यादिकमाह—

**अष्टौ भुक्तिषु राशयोऽत्र शुभदा वीणाधरो मध्यमः मीनस्सद्ग्रहसङ्गमेक्षणयुतो ग्राह्योऽन्यथा निन्दितः। कीटाजौ न शुभान्वितावपि शुभौ शस्तास्शुभस्यांशका द्रेक्काणाभ्युदयादयो हिमरुचेर्मध्याः परस्याशुभाः ॥ १३ ॥**

सर्वास्वन्नभुक्तिष्वष्टौ—वृषकर्किसिंहकन्यातुलाधनुर्मृगकुम्भराशयश्शुभदाः। वीणाधरो मिथुनराशिर्मध्यमः। अन्ये—मेषालिमीनास्त्रयो नेष्टाः। तथा च गुरुः—

झषचापघटाः कन्यातुलासिंहमृगाश्च ये।
कर्की च शुभदा भुक्तिनवत्वे भोक्तृभोज्ययोः॥
कुजक्षेत्रं च मीनं च न कदाचिच्छुभप्रदम्।
मध्यमो मिथुनः प्रोक्तो राशीनां केवलं फलम्॥

इति। मिथुनराशिरपि शस्त इति वसिष्ठः—

गोऽश्विकुम्भतुलाकन्यासिंहकर्कियमा मृगः।
एते च राशयश्शस्ता न मेषझषवृश्चिकाः॥

इति। मीनराशिस्तु शुभेक्षणयुक्तो ग्राह्यः। अन्यथा—तद्राहित्ये शुद्धस्स निन्दित इत्यन्ये। तथा च गुरुः—

मीनश्शुभैर्युतो दृष्टो बालान्नप्राशने शुभः।

इति। कीटाजौ—वृश्चिकमेषौ द्वौ शुभान्वितावपि न शुभप्रदौ एतच्च परिशेषसिद्धमित्युक्तम्। यत्पुनरुक्तं गुरुणा—

शुभैर्दृष्टो युतो वर्क्षः सर्वशोभनदस्सदा।
तथैव पापैर्दृष्टो वा युक्तो वा न शुभप्रदः॥

इति । तदन्यविषयं कीटमेषाभ्यां । यस्मान्नारदः—

शुभैर्युक्तास्तु दृष्टा वा मीनाजालिगृहाह्वयाः ।
अप्रशस्तास्स्युरन्ये च प्रशस्ताश्शिशुभोजने ॥

इति । यद्यप्यत्र मीनो विप्रतिषिध्यते । तथाऽप्यन्यैः परिगृहीत इत्याचार्येण मध्यमतया ग्राह्य इत्युक्तः । अथ शुभस्यांशकद्रेक्काणाभ्युदयाश्शस्ताः । आदिशब्देन दृष्टिकालहोराद्या गृह्यन्ते । हिमरुचेश्चन्द्रस्यांशकादयो मध्याः । परस्य पापस्य अंशकादयश्शुभाः । अत्र गुरुः—

शुभग्रहाणां द्रेक्काणवारांशाद्यास्सुशोभनाः ।
पापानामपि ते नैव शुभाश्चन्द्रस्य मध्यमाः ॥

इति । मतान्तरेण चन्द्रस्य तेषां विशेषमाह—

**द्रेक्काणमिन्दोरुदयांशवारान् भुक्तावनिष्टानवदद्वसिष्ठः । मध्यान् गुरुश्श्रीपतिरप्रशस्तान् क्षीणस्य पूर्णस्य च तान् प्रशस्तान् ॥ १४ ॥**

सर्वस्यां भुक्तौ सर्वस्य द्रेक्काणोदयांशवारानिष्टानशुभान्वसिष्ठः प्राह । तथा च तद्वाक्यं—

जीवसौम्यसितानां तु द्रेक्काणदिवसांशकाः ।
शस्ताश्शुभावहा भुक्तौ न चन्द्रार्कार्कजासृजाम् ॥

इति । गुरुः चन्द्रस्य तान् मध्यमानाह । अत्र श्रीपतिर्व्यवस्थामाश्रित्य क्षीणस्य चन्द्रस्य तानुदयादीनप्रशस्तान् अवदत् । तथा च तद्वाक्यं—

रवौ लग्ने कुष्ठी धरणितनये पित्तगदभाक्
शनौ वातव्याधिः कृशशशिनि भिक्षादनपरः ।

बुधे ज्ञानी भोगी ह्युशनासि चिरायुस्सुरगुरौ
विधौ पूर्णे यज्वा भवति च नरस्सतन्त्रद इह ॥

इति । पूर्णस्यापि चन्द्रस्य द्रेक्काणो वर्ज्य एव । यस्मादुक्तं सर्वसिद्धौ—

कीटेऽन्त्यो घटगोवीणातुलामीनेषु मध्यमः ।
अन्त्योऽन्येषु दृगाणोऽसौ भोक्तुर्बालस्य मृत्युदः ॥

इति । भुक्तौ वर्ज्यग्रहस्थितिमाचष्टे—

**सौम्या व्यये चन्द्रबुधौ च धर्मे षष्ठे च शुक्रस्सहजे च जीवः । लग्ने च चन्द्रो गगने च सर्वे बालस्य नेष्टाः प्रथमान्नभुक्तौ ॥ १४ ॥**

तल्लग्नस्य व्ययस्थाने सौम्याः बालस्य नेष्टाः । तेषु चन्द्रबुधौ द्वौ धर्मे नेष्टौ । शुक्रस्तु षष्ठे नेष्टः । जीवस्तु तृतीये नेष्टः । चन्द्रो लग्ने नेष्टः । गगने च दशमस्थाने सर्वे ग्रहाश्शुभाः पापाश्च नेष्टाः । एतदुक्तं भवति—व्यये पापाश्च सौम्याश्च नेष्टाः । धर्मे पापाश्चन्द्रबुधौ च नेष्टाः । षष्ठे चन्द्रगुरुशुक्राश्च न शस्ताः । तृतीये गुरुरशुभः । लग्ने पापाः क्षीणचन्द्रश्च न शुभाः । दशमे सर्वेऽपि नेष्टाः । अनुक्तस्थानेषूक्तप्रसिद्ध्या शुभाशुभत्वं ग्रहाणां विज्ञेयम् । अत्र गुरुः—

त्रिषडायगतास्सूर्यराहुभौमयमास्सदा ।
भोक्तुश्शुभाकरस्सर्वे पापाश्शेषेष्वनर्थदाः ॥
वित्तत्रिसुतकामायगतस्सुशुभदश्शशी ।
व्ययादिमृत्युधर्मस्थः पीडां दद्याच्छिशोः शशी ॥
लग्नकर्मगतश्चन्द्रो भोजने मरणप्रदः ।
भोज्यभोक्तृनवत्वे च स्वषड्वर्गोच्चयोर्विना ॥

इति । वसिष्ठः—

केन्द्राष्टपञ्चधर्मस्थाः पापाः शोकभयप्रदाः ।
दशमस्था ग्रहास्सर्वे नेष्टास्सर्वभयप्रदाः ॥
अन्नभोजनकृत्येषु मृत्युक्लेशभयावहाः ।
अष्टमस्थं धरापुत्रं सप्तमस्थं च भार्गवम् ॥
नवमस्थं बुधं चैव यत्नतः परिवर्जयेत् ।

इति । गुरुः—

नवान्त्यकर्मगश्चान्द्रिर्मृत्युदश्शेषगश्शुभः ॥
अनिष्टस्थानगश्चान्द्रिरुदितश्चेन्न दोषकृत् ।
केन्द्रत्रिकोणगयोराये लग्ने शोभनदो गुरुः ॥
अशोभनस्तु षष्ठाष्टभ्रातृव्ययगतस्तदा ।
द्वितीये बलवान् जीवे स्वतुङ्गे वा स्ववर्गगः ॥
भुक्तौ शुभप्रदो ज्ञेयः प्रोक्तादन्योऽशुभप्रदः ।
भ्रातृगश्चार्थवज्जीवः करोति नवभोजने ॥

इति । तृतीये शुभः । चतुर्थे न शुभ इति ।

धर्मार्थभ्रातृदारायपुत्रलग्नगतो गुरुः ।
इष्टोऽथ नेष्टष्षष्ठाष्टबन्धुव्ययगतस्तथा ।

इति । तृतीयचतुर्थे द्वावपि परिहृत्य शुभ इत्याह गार्ग्यः

मूर्तिद्रविणपुत्रायधर्मदारेषु संस्थितः ।
भोक्तुरारोग्यमैश्वर्यं विदध्यादमरार्चितः ॥

इति । नारदोऽप्याह—

गुरुर्भ्रातरि रन्ध्रेषु दशद्वादशयोर्गतः ।
नवभुक्तौ न शं दद्याच्छेषेष्वतिशुभप्रदः ॥

इति । आचार्यस्तु गुरुनारदादिमतमाश्रित्य तृतीयगुरुर्न शुभ इत्य- वोचत् ।

लग्नार्थसहजात्मार्थबन्ध्वायाष्टनवस्थितः ।
शुक्रश्शुभकरो भुक्तौ स्मरायेन्ते न शोभनः ॥

इति ।

भुक्तौ कर्मगतश्शुक्रश्शिशोः प्राणविनाशनः ।
अनुक्तो वाऽपि तत्स्थाने स्थितोऽपि बलवान् ग्रहः ॥
मित्रदृष्टस्स्वतुङ्गे वा स्ववर्गे वाऽतिशोभनः ।

इति यदुक्तं गुरुणा तदन्यत्र दशमादिति ज्ञेयम् । यतस्तेनैवोक्तं सर्वशोभना अपि सर्वे ग्रहाः स्वतः कर्मगा न शुभा भुक्तौ; किं पुनश्शिशुभोजने ॥ इति.

पापास्सर्वे ग्रहा लग्नात्त्रिषष्ठायगताश्शुभाः ।
कर्मवर्ज्येषु शेषेषु स्वर्क्षमित्रोच्चगाश्शुभाः ॥

इति नारदवचनाच्च । अपि च—

अप्रकाशप्रकाशस्था ग्रहास्सर्वे न शोभनाः ।
लग्नाद्दशमराशिस्थाश्शिशोरायुः क्षयाय ते ॥

इति । भोक्तृनवत्वे एतद्वगन्तव्यम् । न भोज्यनवत्वे । यस्मान्ना- रदवचनं—

गुरुर्दशमराशिस्थश्शुभं दद्यान्महाबलः ।*
नवत्वे भोज्यवस्तूनामृते भोक्तुर्नवत्वतः ॥

इति । एवं प्रोक्तकालस्याचिरेण दुर्लभत्वादवश्यकर्तव्यस्यान्नप्राश- नस्य योगानाह—

**सौम्यांशे शशिनीष्टकर्मणि गुरौ केन्द्रत्रिको- णाश्रिते पापे वैरिभवानुजेषु बलिनि प्राप्ते च**

**केन्द्रे शुभे । भ्रात्रर्थात्मसु भास्करज्ञगुरवश्चन्द्रोऽपि सत्कर्मकृत् त्रिष्वात्मादिषु शुक्रचान्द्रिरवयो भौमेऽर्कजे वा भवेत् ॥ १६ ॥**

**केन्द्रे जीवोऽर्कज्ञशुक्रा भवादौ शुक्रः केन्द्रे सौरिरिन्दोस्त्रिकोणे । एते योगाश्श्लोकपादोदिताष्षट् भुक्तौ कुर्वन्त्यायुरारोग्यवृद्धिम् ॥ १७ ॥**

सत्कर्मणि शुभांशस्थिते चन्द्रे लग्नादिष्टस्थानगे गुरौ लग्नकेन्द्रात्रिकोणाश्रिते सति एको योगः । षडायतृतीयेष्वेकस्मिन् स्थाने स्थानादिबलयुते कस्मिंश्चित्पापे स्थिते तादृशे कस्मिंश्चिच्छुभे केन्द्रगे सति अन्यो–द्वितीयः । रविबुधजीवाः क्रमेण द्वितीयतृतीयलग्नेषु स्थिताः सत्कर्मकृच्चन्द्रः इष्टस्थानस्थश्चेत् तृतीयः । अपिशब्दः समुच्चयार्थः । तेन चतुर्थे शुक्रश्चेष्टः इति । आत्मादिषु त्रिषु स्थानेषु—लग्नद्वितीयतृतीयेषु क्रमेण शुक्रबुधार्काः स्थिताः । एकादशे कुजे अर्कजे वा स्थिते चतुर्थः । एकादशे स्थाने एकादशद्वादशलग्नेषु रविबुधशुक्राः स्थिताः केन्द्रे जीवश्च यदि तिष्ठति पञ्चमः । अत्रापि पूर्वश्लोकस्याद्यपादगतं सौम्यांशे शशिनीति पदद्वयं मण्डूकप्लुतिन्यायेन संबध्यते । तेन सौम्यांशगतस्येति स्यात् । सौम्यांशगतस्येन्दोस्त्रिकोणे सूरिर्गुरुर्लग्नस्य केन्द्रे शुक्रश्च यदि तिष्ठतः षष्ठो योगः । एते श्लोकपादोदिताष्षड्योगाश्शिशोर्भुक्तौ आयुरादि फलं कुर्वन्ति । अत्र गुरुः—

चन्द्रस्सत्कर्मकर्ता चेत् शुभांशे गुरुवीक्षितः ।
भुक्तौ शुभकरो योगो जीवे केन्द्रत्रिकोणगे ॥

त्रिषडायेष्वथैकस्मिन् क्रूरे बलसमन्विते ।
केन्द्रे बलिशुभैर्युक्ते योगे भोजनशोभनः ॥
लग्नार्थभ्रातृगेहस्था जीवज्ञार्कसिताः क्रमात् ।
चन्द्रे च शुभकार्यस्थे भुक्तौ योगस्सुधासमः ॥
भवद्यार्थभ्रातृस्था मन्दशुक्रज्ञभास्कराः ।
क्रमात् भवे कुजे वाऽपि योगोऽमृतसमोऽशने ॥
बुधशुक्रार्क जीवास्स्युर्व्ययलग्नायकेन्द्रगाः ।
शुभांशे शीतगुर्भोक्तुर्दद्यू राजश्रियं शुभाम् ॥
सिते पक्षे शुभांशस्थे चन्द्रे जीवत्रिकोणगे ।
शुक्रे च कण्टके लग्नाद्योगोऽयं नवभोजने ॥

इति । नन्वत्रोक्ताः कतिचिद्योगाः; असाकल्याभिधानेन बार्हस्पत्या-द्युक्तयोगसादृश्यं न श्रूयत इत्यनागमिकं किं न स्यात्? नैत-दस्ति, योगेष्वविरोधेन सदृशफलस्य ग्रहान्तरस्य संयोजनेन वियोजनेन वा व्यत्ययेन वा स्थानगुणस्य व्ययादिना वा योगा-न्तरत्वमेव सेत्स्यति । न तु न्यूनाधिकत्वं स्यादिति । तथा हि— इह पञ्चमे योगे केन्द्रे गुरुरुक्तो नारदेन; गुरुकेन्द्रादृते यो-ग उक्तः—

भवद्वादशलग्नस्थाः सूर्यसौम्यसिताः क्रमात् ।
न ग्रहः कर्मगः कश्चित् भुक्तियोगः प्रकीर्तितः ॥

तृतीययोगे चन्द्रस्य सत्कर्मगुणाभिधानं बुधशुक्रयोः स्थानव्यत्य-यश्च नारदेन स्वीकृतः । यथा—

लग्नार्थभ्रातृगेहस्थाः गुरुशुक्रार्यचान्द्रयः ।
अन्नप्राशनयोगोऽयं दशमे ग्रहवर्जिते ॥

द्वितीयेऽपि ग्रहस्थाननियमेन योगान्तरत्वमुक्तं—

लग्ने गुरौ रिपौ पापे केन्द्रगे बलवत्सिते ।
सिते पक्षे शुभांशस्थे चन्द्रे योगश्शुभोऽशने ॥

अन्ये च योगाः नारदेनोक्ता यथा—

गुरुशुक्रौ सुतान्त्यस्थौ सर्वे दशमवर्जिताः ।
चन्द्रे भवचतुर्थस्थे शुभं बालान्नभोजनम् ॥
बुधे लग्ने गुरौ धर्मे भवेऽर्के व्ययगेऽपि वा ।
दशमं सर्ववर्ज्यं चेच्छुभं बालान्नभोजनम् ॥
लग्नगेहस्मरे जीवे भवे कश्चिद्ग्रहो यदि ।
दशमं सर्ववर्ज्यं चेच्छुभं बालान्नभोजनम् ॥
चन्द्रे शुभांशगे केन्द्रे दशवर्ज्ये गुरूदये ।
भवगे कुजमन्दार्के शुभं बालस्य भोजनम् ॥
तोयात्मजारिदारस्थाः शुक्रजीवारिरात्रिपाः ।
दशमे न ग्रहः कश्चित् भुक्तियोगोऽयमुत्तमः ॥
सप्तमाष्टमधर्मस्थाः गुरुशुक्रदिवाकराः ।
दशमे न ग्रहः कश्चिद्भुक्तियोगोऽयमुत्तमः ॥

इति । नन्विह योगेऽभीष्टभावगतानां ग्रहाणां कथं शुभत्वमिति; योगवशादिति ब्रूमः । तथा च गुरुः—

एषु भावेषु योगेषु स्थितास्सर्वे ग्रहास्तदा ।
भावदोषान्न दद्युस्ते योगवल्लभतस्स्वयम् ॥

इति । एवमुक्तकाले योगकाले वा सन्ध्यादिवर्जिते योजयेत् । अत्रात्रिः—

शय्यावेत्रासनद्वारज्योत्स्नाकासु च धूसरे ।
सन्धौ मार्गे च सन्ध्यायां श्रीकामो नैव भोजयेत् ॥

इति । भोज्यनवत्वेऽप्ययमेव कालः । यस्मात् गुरुः-
इति । एवं भोज्यनवत्वेऽपि कथितं ब्रह्मणा स्वयम् ।

## अथ कर्णवेधः

अन्नप्राशनमुक्त्वा कर्णवेधस्य कालमाह—

**वस्वर्केन्दुचतुष्कपौष्णमुरभिच्चित्राः परैश्चोत्तराः प्रोक्ता नक्रयुताऽशुभाः शुभगृहास्त्याज्याः परे राशयः॥ तिथ्यृक्षाणि शुभानि सन्धिरहितान्यह्नीन्दुयुक्तांस्त्यजेत्पापानात्मनि कर्णवेधनविधौ सर्वान् ग्रहांश्चायुषि ॥ १८॥**

वसिष्ठात्रिभ्यां—

अतः परं प्रवक्ष्यामि कर्णवेधनमुत्तमम् ।
मुखस्य शोभनार्थाय मङ्गळार्थाय कारयेत् ।
द्वादशे षोडशे वाऽह्नि मासे वा सप्तमेऽष्टमे ।
कर्णस्य वेधनं कुर्यात् घटसिंहाळिवर्जिते ॥

इत्याद्युक्तकर्णवेधनमङ्गहीनताभयादङ्गहीनतया श्रियः क्षय इति मत्वा न कुर्वन्ति । तदसत् । यतः कर्णवेधने नाङ्गहानिं मुनयः स्मरन्ति । तथा च गुरुः—

येऽवदन् कर्णवेधेन स्वाङ्गहानिं तु तैरपि ।
नाभिच्छेदं न कर्तव्यं अङ्गहीनभयादिति ॥
मुखलक्ष्म्या विवृद्ध्यै तच्छोभनार्थं मुखस्य तत् ।
कर्तव्यं कर्णयोर्वेधमनया नाङ्गहीनता ॥

इति । तस्मात् कर्तव्यं कर्णवेधनं । तत्र कर्णवेधनकर्मणि धनिष्ठा हस्तमृगशीर्षार्द्रापुनर्वसुपुष्यरेवतीश्रवणाचित्रा नव अभिहिताः श्रेष्ठास्ताराः । परैर्मुनिभिस्तिस्रश्चोत्तरा उक्ताः । अत्र वसिष्ठः—

सौम्यादित्यं च पुष्यं च हस्तार्द्राश्रवणास्तथा ।
चित्राश्रविष्ठापौष्णं च प्रशस्ताः कर्णवेधने ॥

इति । सर्वसिन्धौ च—

शताजाश्विमरुन्मित्रमूलशाेका न शोभनाः ।
शस्ताऽऽर्द्रा मध्यमा राकाप्रतिपद्रुद्रवह्नयः ॥

इति । शततारादीनामेव पर्युदासादशोकगणपठितमुत्तरात्रयमप्युक्तं भवति । अन्यैरनूराधाऽऽश्विन्यावप्युक्ते । तथा च श्रीपतिः—

पौष्णवैष्णवकराश्विनिचित्रा-

सैन्दवे श्रवणवेधविधानं
निर्दिशन्ति मुनयो हि शिशूनाम् ॥

इति । आत्रिवारित्वं[1](?) शुभमाह चशब्दोऽनुक्तषष्ठीद्वादशी परिग्रहार्थः तथा च गुरुः—

पक्षयोरुभयोर्मुख्यं कृष्णेऽन्त्यांशं विना त्रिकम् ।

इत्युपक्रम्याह—

अष्टमी पर्वरिक्तास्तु वर्ज्याश्शेषास्तु शोभनाः
तिथयो विष्टिवर्ज्याश्च स्थिराश्च करणे शुभाः ॥

विधिरत्ने—

द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ।
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥

---

[1] वारिभं इति स्यात्.

इति । तिथिनक्षत्राण्यह्नि दिवासन्धिरहितानि शुभानि । तथा चात्रिः—

त्यजेदह्नि तिथिद्वन्द्वं वेधसन्धौ दिनद्वयम् ।

इति । तिथ्यृक्षाणि लग्नकालात्प्राक् सन्धिरहितानि मध्यानि । तथा च गुरुः—

यास्मिन् वारे तिथौ तारे द्वंद्वे युक्ते न शोभने ।
सन्धिर्द्वयोः पुरा [1] लग्नाद्यदि नाशुभता तयोः ॥

इति । वसिष्ठः —

वेधनं तु न कर्तव्यं रात्रौ सन्ध्यासु चैव च ।
पूर्वाह्णे तु प्रशंसन्ति मध्याह्नेऽत्र विशेषतः ॥

इति । सोमवारोऽपि शुभः । तथा च गुरुः—

मन्दारार्कांशवारास्स्युर्वर्ज्यास्शेषास्तु शोभनाः
गुरुशुक्रेन्दुजेन्दूनां पूज्या वारांशकादयः ॥

इति । शुभग्रहाः शुभग्रहराशयो मकरसहिता अष्टौ शुभाः । परे मेषसिंहकीटकुम्भाश्चत्वारस्त्याज्याः । तथा च वसिष्ठः—

गोमीनमिथुनं कन्याकर्किचापतुलास्तथा ।
वेधकर्मणि शस्यन्ते मृगाजौ मध्यमौ तथा ॥

इति । यद्यपि इह मेषोऽपि मध्यत्वेन ग्राह्य उक्तः । तथाऽप्याचार्येण "ग्राह्याणि ऋते धरणिनन्दनमन्दिराभ्यां" इति प्रतिज्ञातत्वान्नोक्तः । इह सिंहकीटकुम्भास्त्रय एव राशयस्त्याज्याः । यस्माद्वसिष्ठः—

सिंहवृश्चिककुम्भांश्च वर्जयेत्कर्णवेधने ।

इति । आत्मनि वेधलग्ने चन्द्रयुक्तान् पापांस्त्यजेत् । अत्राष्टमशुद्धिरिन्दूदयत्यागविशेषः । अन्यत् सर्वत्र साधारणं प्रसिद्धं प्रायेण भवति । तथा च गुरुः—

---

[1] लग्नाद्यदि तस्यात् शुभता तयोः । पा ॥

रन्ध्रारिव्ययगोनेष्टो गुरुश्शेषेषु शोभनः ।
सुतरन्ध्रगतस्सौम्यो नेष्टस्त्वन्यत्र शङ्करः ।
षट्सप्ताष्टमगश्शुक्रो न शुभोऽन्यत्र शोभनः ।
चन्द्रो द्वित्रिसुतस्त्रीषु धर्मकर्मायगश्शुभः ।
त्रिषडायगताः पापाश्शुभाः कर्णस्य वेधने ।
अनुक्तेष्वपि भावेषु स्ववर्गस्थास्स्वतुङ्गगाः ।
मित्रराशिगताश्चैव मित्रदृष्टाश्च शोभनाः ॥

इति । स्वोच्चगा अप्यष्टमे नेष्टाः । तथा च नारदः—

मृत्यौ सर्वे ग्रहा नेष्टा विशेषात्तु धरासुतः ।
स्ववर्गसहिता वाऽपि स्वतुङ्गादिगता अपि ॥

इति । चकारोऽनुक्तकर्णवेधनयोगसमुच्चयार्थः । ते च गुर्वाद्युक्ताः यथा-

वारनक्षत्रयोर्योगाः शुभा ये ते शुभप्रदाः ।
त एव न शुभाः ये ते दोषदाः कर्णवेधने ।
महाबलयुतो जीवः शुक्रस्योपचये स्थितः ।
शुक्रोऽपि तद्वदिन्दोश्चेत् सुयोगः कर्णवेधने ।
चन्द्रश्शुभांशके तिष्ठन् शुभकर्मरतो यदि ।
लग्नादुपचये यातो योगस्स्यात्कर्णवेधने ।
वक्री महाबली सौम्यः प्रत्यक्षं जगतो गतः ।
चन्द्रस्य कण्टकस्थाने योगस्स्यात्कर्णवेधने ।

अन्यत्र—

लग्नचन्द्रमसोस्सौम्याः केन्द्रोपचयसंस्थिताः ।
प्रबलास्तेष्वथैको वा योगस्स्यात्कर्णवेधने ॥

वराहमिहिरः—

लाभे तृतीये च शुभैस्समेते
पापैर्विहीनेष्वथ कण्टकेषु ॥

वेध्यौ तु कर्णावमरेड्यलग्ने ।

इति । एवमुक्तकाले कर्णवेधं कुर्यात् । अन्यथा दोषदर्शनात् । तथा चोक्तं नारदेन—

उक्तेष्वेवं बुधः कुर्यादनुक्ते चेत्करिष्यति ।
कर्णच्छेदं तथा रोगं प्रवासं वा तथाऽऽप्नुयात् ॥

इति । कर्णवेधनविधानं च गुरुणोक्तम्—

संपूज्य दैवं दैवज्ञं भिषजोऽम्बष्ठमेव च ।
विदुषो ब्राह्मणांश्चैव कर्मकारं तथैव च ॥
ब्राह्मणैराशिषः कृत्वा वन्दिभिश्च प्रियैर्जनैः ।
दासीभिश्चापि शङ्खैश्च भेरीदुन्दुभिपूर्वकैः ॥
सुभूमौ प्राङ्गणे रम्ये शुचौ देशेऽम्बरे रवेः ।
सन्निधौ वेधयेत्कर्णौ स्त्रीपुंसोर्वामदक्षिणौ ॥
क्रमेण पूर्वं वेध्यौ द्वौ शिशोरायुश्श्रियः प्रदौ ।
न कण्टकैस्तु विध्येत (?) । विधानोऽपि पुरन्दरः ॥
कृते तस्मिन् पुत्रवित्तरूपपश्वायुषां क्षयः ।
शातकुम्भमयी सूची वेधने शोभनप्रदा ॥
राजती वाऽऽयसी वाऽपि यथा श्शुभाविभवतः ।
(?) शुभा एव च छिन्ने च छित्वा योज्ये च योजयेत् ॥
स्वामिनो भृत्यकृत्यानामङ्कचिह्नादिनामपि ।
यान्यन्यानि शुभायाऽङ्के भक्त्या छेद्यानि तान्यपि ।
कर्णवेधोक्तकालेन कर्तव्यानि रुजं विना ॥

इति । नारदः —

शान्तिर्याऽतीव कर्तव्या त्रिविधोत्पातदर्शने ।
तत्र कालोऽप्यनेनैव व्याख्यातो दैवमन्त्रिणा ॥

---

[1] वेधने स्यात् .

अथ चूडाकर्माह—

**कुर्वीत चौळं विषमे तु वर्षे त्याज्यं समैत्रं च सपर्वनन्दम् । हित्वा गणं वेश्मसु सद्गृहाणां हयाङ्गहीनेषु मृगान्वितेषु ॥ ११ ॥**

जन्मतो गर्भतो वा तृतीयादौ विषमे वर्षे चौळं—चूडाकर्म कुर्वीत । तुशब्दात् स्त्रीणां समे वर्षे चूडाकर्म कुर्यादित्युक्तं अत्र गुरुः —

क्षौरेण ह्यायुषो वृद्धिः कृतेन समये शुभे ।
अशुभे समये चेत्तत्कृतमायुःक्षयावहम् ॥
तेजोबलयशोवीर्यवृद्धिनाशौ क्रमात्तथा ।
तस्मात्सम्यक् परीक्ष्यैव कर्तव्यं क्षौरमायुषे ॥
बुधैरायुष्यमित्युक्तं चूडाकर्मैव तेन हि ।
मनुजानां शताब्देभ्योऽधस्तात्तु जिघांसति ॥
मृत्युर्यै त्वशुभे काले चूडां कुर्वन्ति तनितः ।
तृतीयेऽब्दे शिशोर्गर्भात् जन्मतो वा विशेषतः ॥
सप्तमे पञ्चमे वाऽपि स्त्रियः पुंसोऽथ वा समः ।
द्वितीयजन्मना सार्धं कदाचिदभिधीयते ॥
त्रैवर्णिकानामेवैतत् नाऽन्येषां समयोऽस्त्यगात ।

इति । जन्मत एव विषमो वर्षो ग्राह्य इति नारदः—

पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत् ।
अधमं गर्भतस्स्यात्तन्नवमैकादशेऽपि तत् ॥

इति । आद्यवर्षेऽपि कार्यमित्यन्ये—

तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतोऽपि वा ।
बालानां जन्मतः कार्यं चौळमावत्सरान्तरात् ॥

इति । नारदः—

अनूराधाऽन्वितं त्याज्यनक्षत्रगणं पर्वनन्दान्विताल्याज्यतिथिश्च हित्वा धनुर्हीनेषु मकरान्वितेषु शुभग्रहाणां राशिष्वत्याज्यगणे चौळं कुर्यात् । चशब्दोऽनुक्तसमुच्चयार्थः । तेनैतत् गृह्यते—यदुक्तं गुरुणा—

उत्तरायणगे सूर्ये विशेषात्सौम्यगोळगे ।
मासदोषादिरहिते दर्शने गुरुशुक्रयोः ॥

इति । अत्रिः—

पुष्यमासादिषण्मासाः चौळे विप्रस्य चोदिताः ।
उत्तरायणतः केचिद्वदन्ति मुनिपुङ्गवाः ॥

नारदः—

चत्वारो ऋतवः पुष्यात् क्षत्रियस्य प्रकीर्तिताः ।
पञ्चर्तवस्तु वैश्यस्य शूद्रस्य ऋतुषट्कम् ॥
दिवा समाख्यं देवानामयनं चोत्तराह्वयः ।
दिवैव चूडा कर्तव्या विप्राश्चाऽपि सुरा भुवि ॥

इति । नक्षत्राण्यपि तेनैवोक्तानि—

अश्विनी सौम्यमादित्यतिष्यहस्तं च वैष्णवम् ।
चित्राश्रविष्ठारेवत्यो नव मुख्यानि भानि वै ॥
त्रीण्युत्तराणि रोहिण्या स्वातीशतभिषक्तथा ।
मध्यमानि षडेतानि शेषान् द्वादश वर्जयेत् ॥

इति । पुनश्चौळकर्मण्यार्द्राज्येष्ठाभ्यां सह एतानि शस्तानीति । गुरुः—

आर्द्रोत्तरपरे द्वे द्वे प्राजापत्यं च यत् परम् ।
ऐन्द्रवारुणवायव्याः प्रशस्ताः क्षुरकर्मणि ॥

एताश्चात्यष्टितारास्स्युः पुनश्चूडादिकर्मसु ।
श्मश्रुरोमनखादीनां शोधनेऽन्यत्समं द्वयोः ॥
नक्षत्राणां तथैतेषां अश्विन्याद्यं पृथक् पृथक् ।

गुरुणा अश्विन्यादीनां फलमुक्तम्—

अश्विनी कुरुते तुष्टिं भरणी मरणं तथा ।
कृत्तिका क्षयरोगित्वं रोहिणी रोगनाशनम् ॥
सौभाग्यं कुरुते सौम्यो रौद्रं वित्तविनाशनम् ।
पराक्रमं पुनर्वस्वोः पुष्ये मानार्थसिद्धयः ॥
सार्पे शरीरपीडा स्यात् द्रव्यनाशस्तु पैतृके ।
कुर्याद्रोगं तथा भाग्यं फाल्गुनं रोगवारणं ॥
हस्तस्तेजोविवृद्ध्यर्थं चित्रा सौभाग्यवर्धनम् ।
दुःखनाशो भवेत्स्वात्यां ऐन्द्राग्ने वित्तनाशनम् ॥
मैत्रे [1]मित्रविरोधस्स्यात् ज्येष्ठायां भूमिनाशनम् ।
समूलनाशनं मूले पूर्वाषाढे विनाशनम् ॥
सौख्यं मैत्र्युत्तराषाढे वैष्णवे [2]रूपशोभनम् ।
वासवे चायुषो वृद्धिर्वारुणे बलवर्धनम् ॥
पूर्वप्रोष्ठपदे मृत्युराहिर्बुध्न्ये सुखावहम् ।
पौष्णे स्यान्महती वृद्धिरेवं क्षौरफलं क्रमात् ॥

इति । कैश्चिदुत्तरारोहिण्यः निषिध्यन्ते । तथा च वराहमिहिरः-

हस्तत्रयं मृगशिरश्श्रवणत्रयं च
पूर्वाऽश्विशुक्रगुरुभानि पुनर्वसुश्च ।
क्षौरे तु कर्मणि हितान्युदयक्षणे च
युक्तानि चोडुपतिना यदि शस्ततारा: ॥

---

[1] चायुष्यभंगस्स्यात. [2] रूपनाशनम्.

इति । अत्र मुहूर्तान्यपि क्षौरविहितनक्षत्रदैवतानि ग्राह्याणि । अत्र नियमेनैकस्मिन्नेव नक्षत्रे क्षौरकर्मणि नक्षत्रविशेषात् फलविशेष उक्तो रत्नेन—

पञ्चमखत्रचनुराधं प्राजापत्याष्टकं षडाग्नेयः ।
चतुरुत्तरं नरोऽब्दं ब्रह्माऽपि न जीवति क्षौरी ॥

इति । सपर्वनन्दमित्यभिधानादत्याज्याः प्रतिपदेकादशीपञ्चदश्योऽपि छिद्राभिः सह त्याज्याः । अत्र गुरुः—

शुक्लपक्षे शुभं क्षौरं कृष्णपक्षे शुभेतरम् ।
अशुभोऽत्र त्रिभागस्स्यात् कृष्णे भागत्रये कृते ॥

इति ।

प्रतिपत्पर्वछिद्राश्च हित्वाऽन्यास्तिथयश्शुभाः ।

एकादशी शुभेति वसिष्ठः—

द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
दशम्येकादशी चैव पूजिता च त्रयोदशी ॥

चन्द्रप्राबल्याद्रिक्ता अपि ग्राह्या इति नारदः—

रिक्ताश्च केचित् शंसन्ति चन्द्रे बलसमन्विते ।

आहिताग्न्यादीनां पर्वण्यपि क्षौरमनिषिद्धम् । यस्मान्नारदः—

यद्याहिताग्निर्द्वादश्यां पर्वण्यपि वपेद्बुधः ।
वानप्रस्थयतीनां च नैष्ठिकानां च वापने ॥
आहिताग्निवदिच्छन्ति तिथिवारोडुपूर्वकान् ।

इति । अत्र वृषयुग्मकर्किकन्यातुलामकरमीनाः सप्त राशयः शुभाः । तथा च वसिष्ठः—

कर्किकन्यातुलामीनयमगोमकरास्तथा ।
एते तु पूज्याः क्षौरे तु वर्जनीयास्तथेतरे ॥

इति । मेषादिवर्ज्यराशीनां फलमाह—

**चौळविधौ व्यसनं मृगराजे रोगभयं क्रियकीटघटेषु । धन्विनि राजभयं शुभयुक्तौ चापहरी च शुभौ विदुरन्ये ॥ २० ॥**

चौळकर्मणि मृगराजे सिंहे व्यसनं इष्टशोकादिर्भवति । शेषमतिरोहितार्थम् । अत्र वसिष्ठः—

अजे दुःखं हरौ शोकं व्यसनं वृश्चिके तथा ।
चापे नृपभयं विद्यात् कुम्भे कुलविनाशनम् ॥

अन्ये मुनयः शुभग्रहयुक्तौ चापहरी—धनुस्सिंहराशी शुभावाहुः । गुरुस्तु शुभयुतिदृष्टिभ्यां कुम्भादृतेऽनुक्तराशीनां शुभत्वमाह;—

शुभैर्युक्ताश्शुभैर्दृष्टा यद्येतेऽपि शुभा ग्रहाः ।
शुभैर्युक्तोऽपि दृष्टोऽपि न शुभः कुम्भसंज्ञितः ॥
क्षौरे द्वितीयेऽप्याद्ये च श्मश्रुकर्मणि सर्वदा ।
सर्वत्र राशयस्सर्वे स्वभावकथितान् फलान् ॥
हित्वा ग्रहफलान् दद्युः युते दृष्टे शुभाशुभैः ॥

इति । अन्ये तु मिथुनमशुभं कुम्भं च शुभमाहुः । तथा च नारदः-

चित्तदुःखाय मेषस्स्यात् वृषभश्शुभवृद्धये ।
मिथुने केवलं मृत्युः कर्कटे तुष्टिमाप्नुयात् ॥
सिंहे मृत्युर्भवेत्पापे कन्यायामिष्टयस्तथा ।
तुलायामिष्टसंसिद्धिर्वपने प्रथमे नृणाम्॥
व्याधिः कौर्प्यां भवेत्पापे राजपीडा धनुष्यथ ।
इष्टसिद्धिर्मृगे पापे कुम्भे भोगकरं शुभम् ॥

मीने सन्तोषमाप्नोति ।

इति । इदं तु गार्ग्यवसिष्ठादीनां मतेन विरोधाच्चिन्त्यम् ।

अथ जन्माद्यनिष्टराशीनाह—

**चौळे कर्तुर्मध्यमे जन्मलग्ने जन्मानिष्टं मध्यमं लग्नमेके । प्राहुस्ताभ्यामष्टमे भे विवर्ज्ये ग्राह्यं लग्नाद्वाऽष्टमं स्वामिमैत्र्याम् ॥ २० ॥**

कर्तुः—कुमारादेः जन्मलग्ने—जन्मराशिलग्नभे चौळकर्मणि मध्यमे प्राहुः । एके मुनयः जन्मराशिमनिष्टं लग्नराशिं मध्यममाहुः । ताभ्यां जन्मलग्नाभ्यां अष्टमे भे विवर्ज्ये—त्याज्ये सर्वेऽपि प्राहुरिति-शेषः । तत्र कर्तुर्जननलग्नराशिरष्टमे स्वामिमैत्र्यां लग्नतदष्टमराशि-स्वामिनोर्मित्रत्वे सति ग्राह्यं वा भवति । सोऽष्टमराशिः शुभश्चेत् ग्राह्यः, अशुभश्चेत्त्याज्य इत्यभिप्रायः । तथा चाहुः—

जन्मलग्ने शुभे क्षौरं मध्ये वर्ज्योऽष्टमस्तयोः ।

जन्मर्क्षादि चात्र वर्ज्यम् । यथाऽऽह वसिष्ठः—

नैधने जन्मनक्षत्रे विनाशे चन्द्रमोऽष्टमे ।
विपत्तारवधे क्षौरे प्रत्यरे चैव वर्जयेत् ॥

गुरुः—

जन्माष्टमं विधौ याते क्षौरमायुःक्षयावहम् ।
तस्माच्चन्द्राष्टमं वर्ज्यं सर्वदा क्षुरकर्मणि ॥
चन्द्राष्टार्धफलं प्रोक्तं चतुर्थे तु विधौ स्थिते ।
तदर्धं द्वादशे प्रोक्तमित्याह कमलासनः ॥
जन्मर्क्षे कर्मनक्षत्रे स्वाधानर्क्षे च वर्जयेत् ।
सर्वथा क्षौरकर्मादि कृते तस्मिन् विनश्यति ॥

अन्तर्वत्न्यां पत्न्यां वर्ज्यानि क्षौरादिकर्माणि कानिचिदाह—

**पुंसो भार्या गर्भिणी यस्य नासौ सूनोश्चौळं क्षौरकर्मात्मनश्च । गेहारम्भं स्तम्भसंस्थापनं वा वार्धौ स्नानं दूरयात्रां च कुर्यात् ॥ २१ ॥**

यस्य पुंसो भार्या—सहधर्मचारिणी गर्भास्तित्वलक्षणसंपन्ना भवति असौ पुमान् सूनोस्तदीयस्य पुत्रस्य चौळं आत्मनः—स्वस्य क्षौरकर्म चशब्दात् श्मश्रुकर्मापि न कुर्यात् । तथा गेहस्यारम्भं गर्भशिलान्यासं तत्र प्रथमस्तम्भसंस्थापनं वा न कुर्यात् । वार्धौ समुद्रे स्नानं दूरयात्रां च—विदेशगमनं च न कुर्यात् । यथाऽऽहुः—

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
प्राक् पञ्चमाब्दादूर्ध्वं तु गर्भिण्यामपि कारयेत् ॥

तदूर्ध्वं केशधारणानायुष्यत्वादिति । यत आहुः—

केशानायतसंभूतान् स्त्रीपुंसोर्जीवितार्थिनोः ।
त्रिपञ्चवत्सरात्कालादुपरिष्टान्न धारयेत् ॥

इति । अत्रापि नैमित्तिकं चौळं कार्यमेव । तथा च अत्रिः—

पित्राचार्यपितृव्यानां मातुलाग्रजयोर्मृतौ ।
पित्रोः पितृणां पत्नीनां गर्भवानपि वापयेत् ॥

इति । कर्तुर्जन्ममासे चौळमनायुष्यमित्याह ;—

**स्वजन्ममासे बालानां चौळमायुःक्षयावहम् । तत्रापि केचित्कुर्वन्ति सहोपनयनेन तत् ॥ २२ ॥**

बालानां स्वजन्ममासे चौळमायुःक्षयावहम्—आयुषः क्षय-करमिति तत्र न कुर्यादित्यर्थः। अत्र मासग्रहणं दिनतिथ्यादीना-मुपलक्षणम्। तथा चाहुः—

स्वजन्ममासर्क्षतिथिक्षणेषु
चौळं तु यात्राव्रतबन्धनाद्यम्।
कार्यं न कार्यं प्रवदन्ति चैके
हित्वा समुद्वाहविधिं मुनीन्द्राः॥

इति। जन्ममासादिष्वामौञ्जीबन्धनात् शुभं—शुभकर्म न कुर्यात्। अन्यानि शुभकर्माणि न कुर्यादित्यन्ये।

जन्ममासे जन्मदिने जन्मर्क्षे जन्मलग्नगे।
जन्मत्रये न माङ्गल्यं यावद्दामौञ्जिबन्धनम्॥

इति। तत्र जन्ममासेऽपि केचित् चौळस्य उपनयनेन सह विधीय-मानस्योपसर्जन्यं मन्यमाना उपनयनेन सह तच्चौळं कुर्वन्ति। तथा च— . . . . . . . . . . ननु कथं सहोपनयनस्य जन्ममासे विहितवन्निर्देशः। सत्यं, अनित्यत्वात्प्रतिषेधस्येति, ब्रूमः कुतः पुनरनि-त्यत्वं प्रतिषेधस्यावसीयते, नारदेन जन्ममासे मौञ्ज्यादीनां पक्षे अनुज्ञानात्। अतः अत्रायमभिसन्धिः—यदि स मासोऽष्टकवर्गेण विशु-द्धस्तत्रोपनयनादिकं कर्तव्यम्। अथाविशुद्धस्तत्र न कार्यमिति। तिथिवारफलमाह;—

**चौळे भयं दिनकृतो दिवसांशकेषु चन्द्रस्य का-न्तिरवनीतनयस्य मृत्युः। चान्द्रेस्तु राज्यविभवो विजयो गुरोस्तु व्याधिश्शनेरुशनसो भुवनप्रिय-त्वम्॥२३॥**

दिनकृतस्सूर्यस्य दिवसे तदंशके तत्कालहोरायां च चौळे कृते कर्तुर्मनस्तापादिकं भवति । चन्द्रस्य देहकान्तिः, कुजस्य मृत्युः—नाशः आयुःक्षयः इत्यर्थः; चान्द्रेः राज्यविभवः—राज्य-सम्पत्–राजपूजेति यावत् । गुरोर्विजयो धनलाभादिः । उशनसः भुवन प्रियत्वं । शनेर्व्याधिः–रोगः । सर्वत्र दिवसांशकेषु–होरासु चौळे कृते कर्तुर्भवतीति योज्यम् । अत्र वसिष्ठः—

अर्कार्किभौमपुत्राणामंशके दिवसोदये ।
द्रेक्काणे कालहोरायां क्षुरकर्म विवर्जयेत् ॥

इत्युपक्रम्याह—

जीवेन जयमाप्नोति भृगुणा लोकसम्मतिम् ।
बुधेन राजपीडा स्यादिन्दुना कान्तिमाप्नुयात् ॥
सौरेण व्याधिमाप्नोति तापमाप्नोति भानुना ।
आयुःक्षयस्स्याद्भौमेन कृते चौळे न संशयः ॥

चान्द्रेस्त्वित्यत्र तुशब्दः पापयोगे अस्ते च बुधस्य तद्दिवसादिष्व-शुभं भवतीति द्योतनार्थः । तथा च गुरुः—

बुधवारेऽशुभः प्रोक्तः पापग्रहयुते बुधे ।
अस्तगेऽपि द्वयोर्योगे समीपस्थगुणान्वितः ॥

इति । कृष्णे चन्द्रस्याशुभमित्यन्ये । तथा च गुरुः—

सर्वेषां सर्ववाराद्याः शोभना वारपो यदि ।
शुभवर्गे स्वतुङ्गादौ लग्नादुपचये स्थितः ॥

इति । चौळे सूर्यादिग्रहजातगुणदोषैः कर्तुरायुर्वृद्धिहानी स्त इत्याह—

**नागेन्द्वद्रिमितान् कुजार्कशनिजा दोषास्तु वा-रादयो मासांश्चौळविधौ हरन्त्यथ नृणां तान् वर्ध-**

**यन्त्यायुषि। रुद्राद्रीषुहरिन्मितान् कविशशिज्ञाचार्यजाताः क्रमात् कुर्युर्द्वित्रिगुणं शुभाः पुनरिदं स्वर्क्षस्वतुङ्गस्थिताः ॥ २४ ॥**

कुजार्कशनिजाता वारांशहोरादयो दोषाः कुजार्कशनिसंबन्धिवारादिजाता दोषा इत्यर्थः। चौळविधौ—चूडाकर्मणि नृणां—चौळकर्तॄणां निजजन्मकालीनग्रहजनित आयुषि नागेन्द्वद्रिमितान्—अष्टैकसप्तसङ्ख्यान् मासान् हरन्ति। भौमजा अष्ट मासान् सूर्यजा मासमेकं मन्दजास्सप्त मासान् आयुः क्षपयन्तीत्यर्थः। अथ शुक्रशशिबुधगुरुवारादिजाता गुणा रुद्राद्रीषुहरिन्मितान् एकादशसप्तपञ्चदशसङ्ख्यान् मासान् वर्धयन्ति—शुक्रजा एकादश मासान् गुरुजा दश मासान् आयुर्वर्धयन्ति। तथा च श्रीपतिः—

भानुर्मासं क्षपयति तथा सप्त मार्तण्डसूनुः
भौमश्चाष्टौ वितरति पुनर्बोधनः पञ्च मासान्।
सप्तैवेन्दुर्दश सुरगुरुश्शुक्र एकादशेति
प्राहुर्गार्ग्यप्रभृतिमुनयः क्षौरकार्येषु नूनम् ॥

इति। शुभाः पुनश्शुक्रादयः स्वराशिस्वोच्चराशिस्थितास्सन्तः इदं स्वोक्तमायुरेकादशमासादिसम्मितं क्रमाद्द्वित्रिगुणं—स्वराशिस्था द्विगुणं स्वतुङ्गस्थाः त्रिगुणं कुर्युः। तथा च गुरुः—

स्वात्युच्चस्था ग्रहास्सर्वे शुभभावगता यदि।
आयुषस्त्रिगुणं दद्युर्द्विगुणं स्वगृहे स्थिताः ॥

इति। पापास्तु एवं स्थिताः स्वोक्तमायुर्न क्षपयन्तीत्यर्थसिद्धमिति नोक्तं।

लग्नादिषु ग्रहफलमाह ;—

**रोगं लग्नगतः करोति दिनकृत् शस्त्रान्मृतिं [1]भूमिजः तापं शीतकरो दिवाकरसुतश्चौळे विनाशं शिशोः । ते शुक्रेण युताः शशाङ्करहिता मृत्युप्रदास्सप्तमे सर्वेऽप्यष्टमगा न जातु शुभदाः शुक्रोऽत्र संपत्प्रदः ॥ २५ ॥**

चौळे लग्नगतस्सूर्यो रोगं करोति । भूमिजश्शस्त्रान्मरणं, शनिर्विनाशं—देहनाशं, चन्द्रो लग्नगतः कर्तुः शिशोः तापं—मनस्तापं करोति । तथा च गुरुः—

अर्कोदयेऽतिरोगस्स्यात् शस्त्रान्मृत्युः कुजोदये ।
यमोदये विनाशस्स्यात् तापश्चन्द्रोदये भवेत् ॥

अर्थादेवान्ये बुधगुरुशुक्राश्चौळलग्ने शुभाः । तथा च नारदः ;—

गुरुशुक्रबुधा लग्ने प्रशस्ताः क्षुरकर्मणि ।
स्वतुङ्गांशकद्रेक्काणगता यद्यतिशोभनाः ॥

इति । द्वितीयादिष्वपि तेनैवोक्तं ;—

द्वितीयस्थाश्शुभास्सर्वे सचन्द्राश्शोभनास्स्मृताः ।
पापा न शोभनाः पापे धनायुःक्षयदायकाः ॥
तृतीयगा ग्रहास्सर्वे शुभदाः पितृपुत्रयोः ।
शुभाश्चतुर्थे शं दद्युरशुभा नैव शोभनाः ॥

अत्र क्षीणचन्द्रो न शुभः । यस्मादाहात्रिः—

केन्द्रगोऽर्को ज्वरकरः शत्रुपीडां कुजश्शिशोः ।
वातव्याधिं करोत्यार्किः क्षीणेन्दुः प्राणहा क्षुरे ॥

---

[1] भूसुतः

इति ।

पञ्चमे शुभदास्सौम्याः सचन्द्राः पुत्रवृद्धिदाः ।
बुद्ध्युन्मादकराः पापाः पञ्चमे पुत्रनाशनाः ॥
षष्ठे सर्वे शुभं दद्युस्सप्तमे पापवर्जिताः ।

इति । सप्तमे शुभानां शुभत्वसामान्याभिधाने विशेषमाह—त इति । ते—रविकुजमन्दचन्द्राः, पूर्वोक्ताः शशाङ्करहिताश्चन्द्रवर्जिताः त्रयः सूर्यकुजमन्दाः शुक्रयुताः सप्तमे मृत्युप्रदाः स्युः कर्तुरिति । तथा च गुरुः—

क्षौरे स्मरस्थौ भौमार्कौ मृत्युदौ नियतं शिशोः ।
यमो भाग्यविनाशाय सर्वनाशाय भार्गवः ॥
स्मरे ज्ञजीवचन्द्रास्स्युः क्षौरे संपद्विवर्धनाः ।
राहुकेतू स्मरस्थाने सर्वकार्यविनाशनौ ॥

इति । चौळलग्नस्याष्टमस्थानगतास्सर्वे शुभा अशुभाश्च जातु—कदाचिदपि न शुभदाः, अत्राष्टमे गुरुस्सम्पत्प्रदः । तथा च गुरुः;—

अष्टमस्था ग्रहास्सर्वे नेष्टाश्शुक्रविवर्जिताः ।
शुक्रस्तु निधने क्षौरे सर्वसम्पत्प्रदश्शिशोः ॥

इति । नारदोऽपि ;—

अष्टमे दोषदास्सर्वे नवमे सेन्दवश्शुभाः ।
शुभं दद्युः परे दोषा दशमेऽपि तथा शुभाः ॥
एकादशे शुभास्सर्वे द्वादशे ज्ञसितौ शुभौ ।
शेषा न शोभनास्सर्वे लग्नाद्भावफलं क्रमात् ॥

इति । अत्रानिष्टस्थानस्था ग्रहाः स्वोच्चादिस्था जीवादिदृष्टा वा तुष्टा वा एवं प्रदिष्टाः ।

तथाचोक्तम् ;—

एषु भावफलेष्वेव यो दोषोऽवस्थिते ग्रहे ।
स यदि स्वांशके स्वोच्चे स्थितो दोषान्न दास्यति ।

गुरुश्च ;—

अनिष्टस्थानगो यस्स्यात् ग्रहो लग्नेशवीक्षितः ।
गुरुणा बलिना दृष्टो यदीष्टस्थानगो भवेत् ॥

ननु चौळे नवाष्टमयोर्ग्रहत्वमुक्तं कथं पुनस्तयोः शुभाशुभं दद्युरिति, उच्यते, नैषदोषः, भिन्नविषयत्वात् । प्राक् चौळे विहितमधुना क्षौर उक्तमिदमिति । यद्यपि क्षौरेऽपि चौलवत् कालमतिदिशति । तथाऽप्यतिदेशो अधिकमावेक्षत इति कोऽपि ग्रहस्थित्यादिकृतो विशेषोस्तीति गम्यते तथा हि;—चौळे सूर्यादिवारोदया न शुभा उक्ताः । क्षौरे तु त एव विप्रादीनां प्रशस्ता उच्यन्ते, तस्मात् क्षौरे स्वोच्चादिस्थानगतः शुभग्रहः नवमस्थोऽपि न दोषकृत् इति । अथ पुनश्चौलाद्यात्मके क्षौरे कालमाह ;—

**क्षौरेऽपि चौळविहितस्समयस्समानः श्रेष्ठा द्विजस्य च रवेरुदयांशवाराः । इन्दोस्स्त्रियः क्षितिपतेः क्षितिजस्य सौरेविट्छूद्रयोरुशनसो न शुभास्तु शावे ॥ २६ ॥**

क्षौरे—क्षुरक्रियायां पुंसां स्त्रीणां च चौळविहितः कालस्तिथिवारोदयादिः समानः चौले यास्तिथ्यादिकालः उक्तः क्षौरेऽपि स एवेत्यर्थः । अतिदेशे विशेषमाह—श्रेष्ठा इत्यादि । द्विजस्य—विप्रस्य क्षौरे रवेरुदयांशवाराः श्रेष्ठाः । स्त्रियः विप्रस्यान्यस्य वा चेच्चन्द्रस्य उदयादयः शस्ताः । क्षितिपतेः क्षत्रियस्य क्षुरकर्मणि कुजादयः

शुभाः। विट्छूद्रयोः—विशः शूद्रस्य च वपने सौरेः—मन्दस्य वारोदयाद्याः शुभदाः। तथा च गुरुः;—

अर्कोदयः प्रशस्तस्स्यात् विप्राणां क्षुरकर्माणि
भौमोदयः क्षत्रियाणां विट्छूद्राणां यमोदयः।
चन्द्रोदयोऽङ्गनानां च प्रशस्तः क्षुरकर्मणि
एवमेषां तु होरांशद्रेक्काणदिवसादयः॥

इति। सर्वेषां च शावे—गुर्वादिमरणनिमित्तके तत्कालादन्यत्र विधीयमाने क्षौरे उशनसः शुक्रस्य ते वारोदयाद्या न शुभदाः। तथा च नारदः—

द्रेक्काणोदयवारांशलग्नहोरादिकं भृगोः।
वर्ज्यानि शावे वा पैतृसूतकेऽतीव शोभनम्॥

इति। तथा आवश्यके क्षौरे तारादिशुभाशुभत्वं नावेक्षणीयमित्याहः—

**राजाज्ञायां प्रत्यये मूर्धरोगे प्रायश्चित्ते यज्ञदीक्षाव्रतान्ते। प्राप्तेऽन्यस्मिन् दुर्निमित्ते बलिष्ठे कुर्यात्सद्यः क्षौरमस्मिन् न दोषः॥ २७॥**

राजाज्ञायां—राजशासने प्रत्यये—तुलारोहणादौ तीर्थाभिगमने वा, मूर्धरोगे—शिरःक्षतस्फोटकादिरोगोत्पत्तौ, प्रायश्चित्ते—पातकादिदोषाणामपनोदाय क्रियमाणे कर्मणि, यज्ञशब्देन तदङ्गभूतमग्न्याधानादिकमपि गृह्यते। यज्ञार्थं दीक्षा—यज्ञदीक्षा। व्रतानि—गोदानादीनि तेषामन्तस्समाप्तिः यज्ञदीक्षा च व्रतान्तश्चेति द्वन्द्वसमासः। यज्ञदीक्षायां व्रतान्ते च उक्तेभ्योऽन्यस्मिन् गुरुनिधनादौ च प्राप्ते, विपत्सूचकत्वेनातिदारुणे। प्रबले—दुर्निमित्ते मूर्ध्नि व्याळपल्लीपतनादिके च सद्य-

स्तदानीमेव क्षौरं कुर्यात् । अवश्यकत्वान्न नक्षत्रादीनि निरीक्षयेत् । अस्मिन्नावश्यके क्षौरे तारादिकृतो दोषो न विद्यते । तथा च गुरुः;—

मृते च सूतके चैव व्रतान्ते निष्कृतौ तथा
विवाहे द्वादशाहे वा सीमन्ते राजशासने ।
क्षौरं सद्यः प्रकुर्वीत तथा रङ्गोपजीविनः
प्रश्रये रोगपीडायां प्राप्तेष्वावश्यकेष्वपि ॥
क्षौरेषु कालो नावेक्ष्योऽह्नि कर्तव्यता यतः ॥

इति । वराहमिहिरः—

नृपाज्ञया ब्राह्मणसम्मतेन
विवाहकाले मृतसूतके च ।
बन्धस्य मोक्षे व्रतदीक्षणेषु
सर्वेषु शस्तं क्षुरकर्म भेषु ॥

नारदोऽपि—

व्रतबन्धः प्रशस्तस्स्यात् विप्राणां क्षुरकर्मणि ॥
श्मश्रुरोमनखादीनां कृन्तने मलमार्जने ।
राज्ञां राजपदस्थानां नटानां रूपजीविनां ।
नक्षत्रतिथिवारादिविशेषा न दिवा निशा ॥

इति । शुभतिथिलग्नयोगेऽपि क्वचिदनायुष्यतया क्षुरक्रिया त्यज्यते । तथा च वराहमिहिरः—

न स्नातमात्रगमनोन्मुखभूषितानां
अभ्यक्तभुक्तरणकामनिरासनानाम् ।
सन्ध्यानिशोः शनिकुजाह्नि तिथौ च रिक्ते
क्षौरं हितं न नवमेऽह्नि न चापि विष्ट्याम् ॥

इति । विधिरत्ने—

षष्ठे वा षोडशे वाऽह्नि क्रतवे ब्रह्मसंसदि ।
द्वारेषु मार्गरथ्यासु क्षेत्रे न वपनक्रिया ॥

इति । पूर्वं यस्मिन् दिने क्षौरं कृतं तस्मान्नवमेऽह्नीत्यर्थः। अथ आवश्यकतया प्रमादेन वा दुष्टकाले क्षौरे कृते तद्दोषप्रशान्तये पुनः सद्यः शुभकाले क्षौरमाचरणीयमित्याह—

**अशुभे समये क्षौरे कृते पुनः क्षिप्रमाचरेत् सुशुभे ।**

अस्य वसिष्ठवचनमेव व्याख्यानम्—

अशुभर्क्षे कृते क्षौरे पुनः क्षिप्रं तु कारयेत् ।
सुलग्नतिथिनक्षत्रे प्रशस्ते ग्रहसम्पदि ॥

इति । वह्निदाहसरटपतनादिषु पुनर्वपनं कुर्यात् । तथा च नारदः—

दग्धकेशान् मलक्लिष्टान् कणान् वा क्षालयेद्बुधः ।
मधुना पञ्चगव्यैस्तत्पयसा चुळकोदयैः ॥
हुत्वा दद्यादभावे तु पुनर्वपनमारभेत् ।

इति ।

श्रीरग्निर्बन्धुनाशश्च वित्तहानिर्महद्यशः ।
बन्धुलाभः पुत्रहानिः नृचिन्ता मरणं गदः ॥
पूर्वादीनि फलान्येतानीन्दुलुप्ते च ? मस्तके ।
पञ्चत्वक्पल्लवस्वर्णपञ्चामृतफलोदकैः ॥
अब्लिङ्गदेवतैर्मन्त्रैस्स्नानाद्दोषो विनश्यति ।
एवमेवाग्निदग्धे च मस्तके मलदूषिते ॥

दन्तच्छेदे काकघाते सरटीपतने तथा ।
आशिषो वाचनं कृत्वा ब्राह्मणान् पूजयेत् शुचिः ॥

इति । श्मश्रुक्षौरस्याहापरार्धेन—

**शुभनक्षत्रे सुदिने श्मश्रुक्षौरं विधीयते कैश्चित्॥**

क्षौरोक्तनक्षत्रयुक्तशुभदिने श्मश्रुक्षौरं कैश्चिदाचार्यैः विधीयते-अभिधीयत इत्यर्थः । तथा च नारदः—

श्मश्रुकर्मणि कर्तव्यं क्षुरकर्मवदीरितम् ।

इति । गुरुस्त्वाह—

भाद्रोत्तरपदे द्वेद्वे प्राजापत्यं परं च यत् ।
ऐन्द्रवारुणवायव्याः प्रशस्ताः श्मश्रुकर्मणि ॥
हस्ते बुधांशगे चन्द्रे गुरुलग्नेऽतिशोभनम् ।
श्मश्रुकर्म नृपाणां च नृपकर्मोपजीविनाम् ॥

अन्ये त्वाहुः—

ऊर्ध्वं मासादनायुष्यमधः पक्षात्तु सम्पदः ।
अपरे पुना राज्ञः पञ्चमेपञ्चमेऽह्नि श्मश्रुकर्म कार्यमित्याहुः ।

तथा च वराहमिहिरः—

राज्ञः कार्यं पञ्चमे पञ्चमेऽह्नि
क्षौरर्क्षे वा श्मश्रुकस्योदये वा ।
त्यक्त्वा तारास्सप्त पञ्चत्रिसंज्ञाः
यात्राकाले नैव कार्यं न युद्धे ॥
नरः पक्षे दशाहे तु नारी नित्यं नपुंसकः ।
भूपतिः पञ्चमे घस्ने रोमच्छेदादि कारयेत् ॥
क्षुरदन्तनखच्छेदः श्मश्रुकेशानिकृन्तनम् ।
क्षौरकाले तु कर्तव्यं बहूनां सम्मतं त्विदम् ॥

इति। अत्र पञ्चमेऽह्नि अनुलोमक्षौरे ऋक्षाभावे क्षौरलग्ने क्षौरोक्तनक्षत्रोदये वा कार्यम्। राज्ञोऽन्येषां प्रभूणां पक्षादधः कार्यम्। तदन्येषां जनानां मासादधः कार्यमिति।

अथ यथोक्तकालालाभे शुभान्योगानाह—

**मीनस्थे भृगुजे तनौ भवगते भानौ गुरुः कण्टके लग्नेन्द्वृक्षपती स्वलाभपतिदृग्युक्तौ भवे सग्रहे। लाभेऽर्को यदि मीनमेषवृषभे लग्ने सिते ज्ञेऽपि वा ज्ञे वाऽङ्के मिथुनादिषु त्रिषु सिते भानुर्व्यये वा भवे॥२९॥ पापे विक्रमलाभशत्रुषु शुभे केन्द्रे त्रिकोणेऽथ वा सत्कर्मा हिमगुस्त्रिकोणभवने केन्द्रे गुरुर्वा बली। देवाचार्यनिरूपितान् [1]बलयुतान् श्लोकैकपादोदितान् योगान् प्राहुरिमान् यथोक्तसमयालाभेऽपि चौळे शुभान्॥ ३०॥**

मीनस्थे—स्वोच्चस्थे शुक्रे तनौ स्थिते भानावेकादशगते यदि केन्द्रे गुरुर्भवति स एको योगः। लग्नं—चौळलग्नं। इन्द्वृक्षं—तदा चन्द्रस्थितराशिः तयोः पती ग्रहौ तल्लाभर्क्षाधिपतिदृष्टियुतौ यदि स्तः लग्नात् एकादशस्थाने सग्रहे—केनाचिच्छुभेन अशुभेन वा ग्रहेण सहिते अन्यो योगः। मीनमेषवृषभेऽपि एकास्मिन् राशौ लग्ने शुक्रे बुधे वा स्थिते लग्नाल्लाभेऽर्को यदि स्यात् तृतीयः। मिथुनकार्कीसिंहानामन्यतमे लग्ने बुधे शुक्रे वा स्थिते भानुर्व्यये भावे वा यदि स्यात् चतुर्थः। तृतीयैकादशषष्ठेषु पापानामेकस्मिन् स्थिते शुभानामेकस्मिन् केन्द्रे

[1] बलवतश्लो.

त्रिकोणे वा स्थिते पञ्चमः, शुभकर्मकृच्चन्द्रस्त्रिकोणे बलवान् । गुरुः केन्द्रे यदि तिष्ठति षष्ठः । एतान् पद्ये एकैकपादोक्तान् बृहस्पति-निरूपितान् षड्योगान् चौळे शुभानाहुः । तथा च बृहस्पतिः—

'मीने शुक्रविलग्नस्थे भवे भानौ चतुष्टये ॥
गुरौ याते तथा योगः शुभदः क्षुरकर्मणि ॥
मीनमेषसिते लग्ने सासिते भावगे रवौ ।
बुधोदये तदा योगश्चूडाकर्मणि शोभनः ॥
यमे कर्किणि सिंहे च सहिते भृगुजे बुधे ।
रवौ व्यये भवे वाऽपि योगः क्षौरशुभावहः ॥
त्रिषडायेषु पापेषु शुभाः केन्द्रत्रिकोणयोः ।
एको द्वौ त्रिर्यथालाभं चूडायोगः शुभावहः ॥

अन्ये च चूडायोगाः सन्ति, तेऽप्यत्र सूचिता एव, अतो न पृथगुक्ताः । ते गुरुणा पृथगुक्ताः । यथा—

पक्ष विधुः प्राण भवेल्लग्नगतो बन्धो ।
लग्नस्योपचये वाऽथ चूडायोगः शुभावह. ॥
गुरुर्भृगुर्वा चन्द्रो वा शुभांशस्थो बलान्वितः ।
तदोपचयगो लग्नात् क्षौरे योगः शुभावहः ॥
भावव्ययोदये भानुबुधशुक्रा यदि स्थिताः ।
चन्द्रे शुभांशगे केन्द्रे चूडायोगः शुभावहः ॥
घटे सशुक्रे लग्नस्थे सबुधे व्ययगे रवौ ॥
त्रिकोणगे गुरौ चन्द्रे चूडायोगः शुभावहः ।
यथोक्तवारनक्षत्रविलग्नग्रहदर्शनाः ॥
ग्रहभावगतिश्चैव लाभे काले महाशुभः ।

महाशुभेऽस्मिन् विज्ञेयं शुभं क्षौरं विवृद्धये ।
आयुरारोग्यलक्ष्मीनां भवेद्विद्याधनादिनाम् ॥

इति । नारदोऽपि—

लग्नकेन्द्रं गुरौ याते भावे कोऽपि ग्रहो बली ।
चूडाकर्मणि योगोऽयं निधने नास्ति कश्चन ॥
लग्ने गुरुर्भृगुर्वाऽपि स्वोच्चक्षांशगतोऽपि वा ।
स्वद्रेक्काणेऽथ वा योगो भावे कश्चिद्ग्रहो यदि ॥
भवद्वादशकर्मस्था भास्करज्ञसिता यदि ।
पराभवे न कश्चित् स्यात् चूडयोग शुभावहः ॥
शुभराशौ शुभे लग्ने बलवच्छुभदर्शने ।
बले कश्चिद्बली तिष्ठत् चूडायोगो गुरूदितः ॥
पापर्क्षे वा शुभास्तिष्ठेत् बलवच्छुभवीक्षितः ।
चन्द्रे च शुभनेत्रस्थे चूडायोगोऽयमुत्तमः
शुभवर्गगतश्चन्द्रः शुभवर्गगतं शुभं ।
बलिनं बलवान् पश्येत् लग्नस्थं भवने शुभः ॥

इति । अत्र सर्वत्र अष्टमग्रहो न शुभः । यस्मान्नारदः;—

"क्षुरकर्मणि सर्वत्र योगानामपि नैधने ।
नेष्टः कश्चिद्ग्रहस्थिष्टन्यदायुः क्षयदः शिशोः ॥

इति । क्वचित् शुभः । यदाह—

"लग्नाष्टमेशे विप्राणे लग्नेशे बलसंयुते ।
अस्तगे निधनेशे वा निधनेऽपि ग्रहः शुभः ॥

इति । अथ यथोक्ततिथिवारादिकस्य कालस्याभावेऽपि चौळकर्मण्येते योगाः शुभा इति । अत्र गुरुः—

" यथोक्तकालाभावे तु यथालाभं शुभे बले ।
योगदोषहरे कुर्यात् दोषाणामपवादतः "

इति —

अध्यायमुपसंहरति—

**इति त्रिंशता हृद्यबन्धैस्सुपद्यैः मुहूर्तागमे गुम्फितोऽध्याय एषः । निषेकादिचौळान्तकर्माभिधायी समाप्तिं प्रपन्नोऽत्र षष्ठो वरिष्ठः ॥ ३१ ॥**

एवं हृद्यबन्धै रमणीयपदसन्धिभेदैः त्रिंशता त्रिंशत्सङ्ख्यैः पद्यैः शालिन्यादिवृत्तैर्गुम्फितो—विरचितः निषेकादीनां गर्भसंस्काराणां चौळान्तानां जातकसंस्काराणां च अभिधायी एष षष्ठोऽध्यायः समाप्तिं— प्रपन्नः समाप्तोऽभूदित्यर्थः ॥

इत्थं विद्यामाधवीये वरिष्ठं<br>
ज्योतिश्शास्त्रे षष्ठमध्यायमस्मिन् ।<br>
आधानादिक्षौरनिष्ठाक्रियाख्यं<br>
व्याख्याद्विद्यामाधवार्यस्य सूनुः ॥



# अथ विद्योपनयनाध्यायः सप्तमः

तत्र प्रथमजन्मकालस्य केवलं दैवप्रयुक्ततया स न केनाप्यन्यथयितुं शक्यते। वर्णत्रयस्य च द्वितीयं जन्म विद्यते। तच्च प्रबलेन पुरुषकारेण शुभं कर्तुं पार्यते। ततः तत्कालसाधनाय प्रयतितव्यमिति नारदादिभिरुक्तम्। यथा—

जन्मनः प्रथमस्येह कालो दैवेन चोदितः।
अतस्स एव दैवज्ञैः शुभः कर्तुं न शक्यते॥
द्वितीयजन्मनः कालः शक्यते ज्ञानिना बलात्।
शुभः कर्तुमतो नृणां सर्वसंपत्समृद्धयः।
तस्मात्परीक्ष्य यत्नेन कर्तव्यं ह्युपनायनम्॥

इति। ननु दैवचोदितं प्रथमं जन्म प्राणिनां प्रधानं; मनुष्यैः क्रियमाणं संस्कारात्मकं द्वितीयमुपसर्जनं स्यादिति, अत्रोच्यते—प्राणिनां प्रथमं जन्म देहप्रादुर्भावकारिसमवायिप्रधानं। त्रैवर्णिकानां द्वितीयं पुरुषार्थसंपादिनीषु क्रियासु विद्यासु च आधिकारिकमसमवायिप्रधानमिति क्रियाविद्योपजीविनां द्विजानामेतदेव मुख्यम्। यथाऽऽह नारदः—

द्वितीयजन्म मुख्यं स्यात् द्विजानामादिजन्मतः।
सत्क्रिया वेदविद्यादिज्ञानसंपत्तिजीविनाम्॥

इति।

पितृणस्य निवृत्त्यर्थं प्रथमं जन्म केवलम्।
द्वितीयं जन्म तेषां हि पुरुषार्थस्य साधनम्॥

द्वितीयजन्म यत्नेन पुरुषकारेण शोभने ।
काले संयोज्य कुर्याच्चेत् पुरुषार्थमवाप्नुयुः ॥
कृतं यदेतत्सत्काले वर्धन्तेऽस्य श्रियस्सदा ।
बटोरायुश्च विद्या च विद्यया मोक्षमाप्नुयात् ॥
तस्मात्सम्यक्परीक्ष्यैव कालयोगं विचक्षणैः ।
द्वितीयजन्म कर्तव्यमस्य कालोऽयमुच्यते ॥

इति । अतस्तत्कालमभिधित्सुस्तावद्वर्षर्तुनियममाह—

**विप्रस्याभिहितं द्वितीयजननं वर्षे शुभं सप्तमे**
**राजन्यस्य चतुर्भिरत्र सहिते वैश्यस्य च द्वादशे ।**
**सूर्ये गोमिथुनाश्रिते तदधमं कुम्भैणगे मध्यमं**
**श्रेष्ठं मेषझषाश्रिते सुरभिगे ग्रीष्मे शरद्यन्ययोः ॥**

द्वितीयजननमुपनयनं जन्मत आरभ्य विप्रस्य सप्तमे वर्षे अभिहितं—पूर्वाचार्यैरुक्तम् । राजन्यस्य—क्षत्रियस्य चतुर्भिस्सहितेऽत्र सप्तसङ्ख्याते वर्षे एकादशे वर्ष इत्यर्थः । वैश्यस्य द्वादशे शस्तम् । तथा च स्मृतिः—

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥

इति । गर्भाष्टममेव जन्मतः सप्तमं भवतीति सप्तमे शुभमित्युक्तम् । तथा च लौगाक्षिस्मृतिः—

सप्तमे वाऽष्टमे वर्षे ब्राह्मणस्योपनायनम् ।

इति । अत्र गर्भाष्टम इत्युक्ते केषांचिद्गर्भिणां द्वित्रैर्वर्षैः प्रसवदर्शनात् सप्तमतोऽर्वाक् षष्ठादिष्वपि उपनयनं कार्यं स्यात्; तच्च न युक्तं—

जन्मषष्ठेऽथ वा वर्षे नोपनीतः कथञ्चन ।

इति गुरुस्मरणात् । यत्पुनः—

ब्रह्मवर्चसकामस्य पञ्चमेऽब्देऽग्रजन्मनः ।
राज्ञो बलार्थिनष्षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

इति । तत् काम्यं, न नित्यम् । तस्मात् जन्मतः सप्तमः इत्युक्तम् । यत्तु मनुनोक्तम्—

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥

इति, तत्तु 'दशमे मासि सूतव' इति श्रौतप्रसवकालावच्छुपलक्षितगर्भविषयम् । तुशब्दोऽनुक्तकाम्योपनयनसमुच्चयार्थः । तेन विप्रादीनां पञ्चमादिषु काम्यमुपनयनमुक्तं स्यात् । केचित् सप्तमादिष्वपि काम्यान्युपनयनान्यामनन्ति—

'सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे श्रीकामम्' ।

इत्यादि । अत्र जैवाब्दसङ्ख्याऽपि कैश्चिदिष्यते । तथा च अत्रिः—

सौरैर्वा गौरवैश्चान्द्रैरब्दैर्गर्भाष्टमादिषु ।
ब्रह्मवर्चसमायुष्यं तेजोऽन्नाद्यं तथेन्द्रियम् ॥
पशुं मेधां च पुष्टिं च शत्रुनाशमभीप्सितम् ॥

इति । यद्यपि ब्राह्मणस्य सप्तमे शुभमुपनयनमुक्तम् । तथाऽपि सप्तमाष्टमयोः शुभं, नवमदशमयोर्मध्यमं, एकादशद्वादशयोरधमम् । ततः परमधमाधममिति विवेकः कार्यः । तथा च गुरुः—

जन्मतः सप्तमे वर्षे गर्भतो वाऽष्टमे तथा ।
नवमे दशमे वाऽपि वर्षे चोत्तममध्यमे ॥

ब्राह्मणस्य क्रमात्पश्चात् अधमं वाऽधमाधमम् ।
प्रायश्चित्तं तु कर्तव्यं यथाविभवतस्ततः ॥

इति । महापदि ब्राह्मणस्याषोडशादनत्ययः । तत ऊर्ध्वं पतितत्वम् । तथा च गुरुः—

आषोडशाब्दात्सर्वेषामनतीतो महापदि ।
क्षत्रियो विंशतेरूर्ध्वं न वैश्यः पञ्चविंशतेः ॥
अतिषोडशको विप्रो नोपनेयः कदाचन ।
स्वावधेः क्षत्रियो वैश्यः ऊर्ध्वं चण्डालतां व्रजेत् ॥

तदुपनयनं वृषभमिथुनगतेऽर्के अधमम्, कुम्भमकरस्थे मध्यमम्, मेषमीनगते श्रेष्ठम् । तथा च गुरुः—

मृगकुम्भगते भानौ मध्यमं मीनमेषयोः ।
उत्तमं गोयमस्थेऽर्केऽप्यधमं चोपनायनम् ॥

इति । विप्रस्य सुरभिगे वसन्तगतेऽर्के शस्तम् । अन्ययोः क्षत्रिय- वैश्ययोः क्रमेण ग्रीष्मे शरदि च शस्तम् । तथाच स्मृतिः—

"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्"

इति । वसन्तशिशिरग्रीष्मेषु सर्वेषां चोपनायनमिष्यते । तथा च अत्रिः—

वसन्ते ब्राह्मणः कुर्यात् ग्रीष्मे भूपश्शरत्सु विट् ।
सर्वेषां वा वसन्ते स्यात् ग्रीष्मे वा शिशिरेऽपि वा ॥

इति । क्षत्रियवैश्ययोः वर्षासु शरत्सु वा कार्यम् । तथा च बोधायनः—"वर्षासु रथकारस्येति" ॥ रथकारो नाम क्षत्रियवैश्ययो- रुत्पन्नायां स्त्रिया जातः । उत्तरायणे सर्वेषामविशेषेणोपनायनं

शस्तमित्युक्तम्। तत्र च माघादिषु पञ्चस्वेव प्रशस्यते। आषाढे भानोरार्द्राप्रवेशनान्निषिद्धमित्युक्तम्। तथा च नारदः—

शरद्ग्रीष्मवसन्तेषु व्युत्क्रमात्तु द्विजन्मनाम्।
मुख्यं साधारणं तेषां तपोमासादिपञ्चसु॥
स्वकुलाचारधर्मज्ञो माघमासेऽथ फाल्गुने।
विधिज्ञः स्वार्थवांश्चैत्रे वेदवेदाङ्गपारगः॥
वैशाखे धनवान् वेदशास्त्रविद्याविशारदः।
उपनीतः कलाढ्यश्च ज्येष्ठे विधिविदां वरः॥

एवं वर्षर्तुमासेषु शुभेष्वपि ग्रहदौर्बल्ये न कार्यमिति तद्बलमाह—

**कर्तुर्जन्मगृहाद्धनागमसुतस्त्रीधर्मकर्मस्थितो जीवो रिष्फसुहृत्पराभवरिपूंस्त्यक्त्वाऽन्यतश्चन्द्रमाः। पापास्त्रिशत्रुभवानुजेषु शुभदा रिष्फादृते चन्द्रजः शुक्रस्सप्तमतोऽन्यराशिषु चरन् श्रेष्ठो द्वितीयोद्भवे॥२॥**

कर्तुरुपनेयस्य कुमारस्य जन्मराशेर्द्वितीयैकादशपञ्चमसप्तमनवमदशमभावेषु स्थितो जीवः उपनयनकाले श्रेष्ठः। द्वादशचतुर्थाष्टमषष्ठान् विहायान्यत्र गतश्चन्द्रमाः शुभः। पापाः सूर्यकुजमन्दराहुकेतवः षष्ठैकादशतृतीयेषु गताः शुभदाः। बुधो द्वादशादन्यत्र गतश्शुभदः। शुक्रस्सप्तमादन्यत्र चरन् शस्तः। जीवो जन्मतृतीयचतुर्थषष्ठाष्टमद्वादशेष्वशुभः। चन्द्रो द्वादशचतुर्थषष्ठाष्टमेष्वनिष्टः। पापा द्वितीयनवमद्वादशपञ्चमाष्टमचतुष्टयेषु कष्टाः। बुधो द्वादशेऽधमः। शुक्रस्सप्तमे न शस्त इत्यर्थादेव सिद्धम्। तथा च वसिष्ठः—

जन्मभ्रातृसुहृच्छत्रुमृत्युद्वादशगो गुरुः
व्याधिमारभयक्लेशविपत्पीडाप्रदश्शिशोः ॥
धनधर्मसुतायस्त्रीकर्मगश्शुभदोऽङ्गिराः ॥

दशमेऽपि न शुभकृत् इति गुरुः—

एवं शुभेऽब्दे देवेज्यो जन्मकर्मव्ययारिभैः ।
तृतीयबन्धुरन्ध्रैश्च विनाऽन्यत्र शुभप्रदः ॥

इति । वसिष्ठेन—

जन्मन्येकादशे चन्द्रे सप्तमे सहजे धने ।
युक्तश्श्रेष्ठोऽन्यथा नेष्टः कुमारस्योपनायने ॥

इति । पञ्चमनवमदशमेषु यद्यपि शुभ उक्तः । तथाऽपि गार्ग्येण—

उत्तरायणगस्सूर्यः शुक्लपक्षे च चन्द्रमाः ।
द्विपञ्चनवगश्श्रेष्ठ इति गार्ग्यस्य सम्मतः ॥

इति । शुक्लपक्षे नवमपञ्चमयोश्चन्द्रश्श्रेष्ठ इति व्यवस्थापितम् । सर्व सिन्धुकारेणापि दशमे चन्द्रः शुभः इत्युक्तम्—

शुक्रस्त्वेको गुरुभृगुबुधा मन्त्रिहीनास्सितज्ञौ
शुक्राचार्यौ विगुरुभृगवः चन्द्रहीनौ कविज्ञौ ।
शुक्राचार्यौ रविशनिबुधाः सर्व एव ज्ञशुक्रौ
जन्मादिस्थाः शुभमुपनये कुर्वतेऽन्यत्र पापम् ॥

इति । अत्र द्वादशे बुधः शुभ उक्तः । वसिष्ठेन तु—

बुधारौ व्ययधर्मस्थौ कुर्वते दुःखभाजनम् ।

इति अशुभ उक्तः ॥

**कर्तुर्द्वयोर्जन्मविलग्नराश्योः तत्काललग्नस्य हि·**

**मत्विषश्च । स्थानेऽष्टमे सद्भिरसद्भिश्च विशुद्धिमेके नियमादिहाहुः ॥ ३ ॥**

इह उपनयनकर्मणि कर्तुः—कुमारस्य जन्मनि चन्द्राक्रान्त उदयराश्योर्द्वयोः उपनयनकाले तत्काललग्नस्य चन्द्राक्रान्तराशेश्च द्वयोरिति । चतुष्टयस्याष्टमस्थाने शुभैरशुभैश्च ग्रहैर्विशुद्धिं नियमादाहुरेके—बृहस्पत्यादयः । तथा चाहुः—

जन्मोपनयलग्नेन्दुचतुष्कस्याग्रहेऽष्टमे ।

इति । इदमेषामाकूतं—जन्मराशिवत् लग्नराशेः तत्काललग्नवत् चन्द्रस्य फलमतिदेश्यं लग्नचन्द्रयोस्तुल्यबलत्वात् इति । यथा ह्याहुः—

यथा चन्द्रस्तथा लग्नं यथा लग्नं तथा शशी ।

इति । अन्ये तु शुद्धिमनियमेनाहुः, तामेवानियमेनाह—

**ब्रूमोऽत्राभिमतं यदत्र नियतं तत्काललग्नाष्टमे शुद्धिः किंतु न कर्तृजन्मनिधने शुक्रेन्दुपुत्रौ शुभौ । आयुर्भङ्गकृतः परे सुरगुरुर्दुःखप्रदश्चन्द्रतो रन्ध्रर्क्षेऽपि तथैव मध्यमफलाः पापाः स्ववर्गोच्चगाः ॥ ४ ॥**

स्यादेतत्—विप्रादीनां जननोपनयने तुल्ये, जन्मत्वाविशेषात् भवान्तरवत् । तथा च स्मृतिः—

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।

ब्राह्मणक्षत्रियविशः तस्मादेते द्विजाः स्मृताः ॥

इति । किंच लग्नचन्द्रौ तुल्यौ फलप्रदातृत्वे प्राधान्याविशेषात् । तथा चोक्तम्—

लग्नचन्द्रावुभौ तुल्यौ बलयोगात्फलं तयोः ।
लग्नं शरीरं कालस्य प्राणश्चन्द्रः प्रकीर्तितः ॥

इति । तस्मात् जननोपनयनयोरवैशेष्यात् लग्नचन्द्रयोस्तुल्यफलत्वाच्च जन्मोपनयनलग्नचन्द्राणां अष्टमे शुद्धिर्नियमेनेष्यत इत्यत्र यदभिहितं ग्राह्यत्वेनेष्टं तत् ब्रूमः । अत्र उपनयने तत्काललग्नस्याष्टमे शुद्धिर्नियता । कस्य तर्ह्यनियतेत्यत्राह—किन्त्विति । कर्तुः—कुमारस्य जन्मराशेरष्टमे शुद्धिर्न नियता । विभागं दर्शयति—जन्माष्टमे शुक्रेन्दुपुत्रौ द्वौ शुभौ, परे सचन्द्राः पापाः कर्तुरायुर्भङ्गकृतः । स्वायुरष्टमांशक्षयकारिणः । सुरगुरुर्दुःखप्रदः । तत्कालस्य चन्द्रमसोऽष्टमेऽपि तथैव शुद्धिर्नियता । तत्र शुक्रज्ञौ शुभौ, परे नेष्टाः, उभयत्र स्ववर्गोच्चगाः पापाः मध्यमफलाः स्युः । तस्माच्छुद्धिरनियता । कर्तुर्जन्मलग्नाष्टमे सुतरामानियम इत्याह —

**कर्तुर्विलग्नाष्टमगो ग्रहेन्दुः पापोऽपि पूजाभिरुपैति शान्तिम् । जन्माष्टमस्थस्य न तस्य शान्तिः कालात्यये तामपि केचिदाहुः ॥ ५ ॥**

कुमारस्य जन्मलग्नस्य अष्टमे स्थितः पापग्रहोऽपि स्वोक्तपूजाभिः शान्तिं स्वकृतदोषस्योपरतिमुपैति । अपिशब्दस्स्वभावतस्तस्य प्रसिद्धिं द्योतयति । यत्र पापोऽपि दोषं न करोति तत्र शुभग्रहो दोषं न करोतीति किं वक्तव्यमित्यर्थः । जन्माष्टमस्थस्य पापस्य स्वपूजया शान्तिर्नास्ति । कुमारस्य कालात्यये उपनयनोक्तकालातिक्रमे तां पूजाभिः शान्तिमपि केचिदाहुः । अपिशब्दः स्ववर्गोच्चावस्थित्याऽपि दोषा राति सूचयति । तदुक्तं भवति—तत्काललग्नस्याष्टमे सर्वे वर्ज्याः, चन्द्र-

जन्मलग्नानामष्टमे तु सजीवचन्द्राः पापा वर्ज्याः, शुभा ग्राह्याः जन्मलग्नस्याष्टमे सर्वे वर्ज्याः पापा अपि स्वशान्त्या गृह्यन्ते इति। तथा चाहुः—

अष्टमस्था ग्रहास्सर्वे नेष्टास्तत्काललग्नतः ।
घ्नन्त्याचार्यं शुभा रन्ध्रे शिष्यं घ्नन्ति शुभेतराः ॥
जन्मलग्नाष्टमर्क्षस्थाः पापाः कुर्वन्त्यनायुषम् ।
क्षीणवृत्तिं च शोकं च कुलनाशं वटोस्सदा ॥
शुभग्रहान् प्रशंसन्ति ज्ञानायुर्वित्तवृद्धिदाः ।
व्याधिमारभयक्लेशविपत्पीडाप्रदो गुरुः ॥

इति। तत्कालचन्द्रस्य तु गुरुणा—

लग्नचन्द्रयुताद्राशेर्बलाढ्याच्छुभगोचरे ।
सर्वे ग्रहा यदि प्रेयुस्स कालश्शुभदश्शिशोः ॥

इति लग्नचन्द्रयोरविशेषेणाभिधाय पुनस्तत्काललग्नस्यैव—

अष्टमस्थान् ग्रहान् सर्वान् सदा नेच्छन्ति पण्डिताः ॥

इति पृथगभिधानं ज्ञापकमष्टमशुद्धिनियमस्य। अपि च जन्मादीनामष्टमस्थाः पापाः स्वोच्चस्वर्क्षगा न दोषदाः। तथा च गुरुः—

अशुभो गोचरे वाऽपि यदि सर्वे ग्रहाः स्वभे।
स्वतुङ्गे वा स्थितास्सर्वे दद्युर्नाशुभतः फलम् ॥

इति। अत्र स्वभग्रहणं स्ववर्गस्योपलक्षणम्। तथा च परस्ताद्वक्ष्यति—

विना स्वतुङ्गस्वर्क्षादिवर्गगान् बलिनो ग्रहान्।

इति। अन्ये त्वाहुः—नैतदुपलक्षणं इति। तथा च अनन्तरं स्वयमेव वदति—

विशेषाद्देवमन्त्री चेदशुभो गोचरे स्थितः।
चापमीनकुळीरेषु शुभदश्चोपनायने ॥

इति । एवं विप्रतिषेधे व्यवस्थीयते—

स्वकाले स्वर्क्षगास्तदतिक्रमे स्ववर्गगाः ।

इति । तथा चाहुः—

बालस्य बलहीनास्तु स्वोच्चर्क्षस्था बलप्रदाः ।

स्वकाले तु ग्रहास्तेषां न बलं तदतिक्रमे ॥

इति । स्वकाले स्वभावस्थानादृतेऽपि जीवः स्वशान्त्या शुभदाः ।
तथा च गुरुः—

शुभेऽब्दे देवमन्त्री चेत् अशुभे गोचरे न च ।

शिशोः स्वशान्त्या शुभतां यान्ति सर्वे व्ययं ग्रहाः ॥

ययुरिति शेषः । स्वभावातिक्रमे शुभगोचराणामपि ग्रहाणां दौर्बल्यं ।
यथाऽऽह गुरुः—

अशुभेऽब्दे ग्रहास्सर्वे शुभगोचरगा अपि ।

शान्त्यभावाच्छमं नैव यान्त्यब्दः कालमृत्युवत् ॥

इति । स्यादेतत्—स्वोक्तकाले दुर्बलस्यापि ग्रहस्य स्वशान्त्या यदि प्राबल्यं तत्कथं जन्माष्टमस्थस्य न शान्तिरित्युक्तम् इति । अत्रोच्यते—यद्गोचरादिना स्वतः प्राबल्यं ग्रहाणां तन्मुख्यं यत्तदा भावेन शान्त्यादिस्तद्गौणामिति । मुख्यगौणयोर्मुख्ये सति गौणस्य ग्रहणं प्रधानस्य जन्मनो न न्याय्यमिति जन्माष्टमस्थस्य पापस्य स्वकाले शान्त्या बलं मुख्यं न विद्यते । तथाऽपि स्वोक्तकालातिक्रमे भवति । ग्रहबलाभावेन स्वकालेऽतिक्रामिति सति तदतिक्रमस्याप्रतिविधाना त्स्वकाले एताः शान्ति ग्रहदौर्बल्यापनोदिनीं पूजां केचित् गुर्वादयः आहुः । तथा च गुरुः—

यस्मात् ग्रहेभ्यः कालत्वात् बली संवत्सरस्ततः ।

शान्तिर्ग्रहाणां कर्तव्या न तु संवत्सरस्य सा ॥

इति। अथवा कालात्यये कुमारस्योपनयनोक्तकालेऽतिक्रान्ते सति जन्माष्टमस्य पापस्य अप्रतिविधानस्यापि वा अतीत्य प्रसङ्गात् शान्ति वदन्ति। अस्मिन् काले चतुर्दश्यादेरनध्यायदिनस्यापि ग्राह्यत्वेनाभिधानात् मुख्यं ग्रहबलं दत्तजलाञ्जलि। यथोक्तं गुरुणा—

चन्द्रेऽतिबलसंयुक्ते शुभभागगते गुरौ।
चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके॥

इति। यद्यपि ग्रहबलं प्रधानं तिथ्याद्युपसर्जनं, तथाऽपि 'यवाग्वामपि संन्देहः कोकुन्देषु तु का कथा' इति वदेतदभिहितमिति मन्तव्यम्॥

तात्कालिकौ शुभाशुभकालावाह—

**वर्णेशे बलिनि द्वितीयजननं त्रैवर्णिकानां शुभं सर्वेषामपि वीर्यशालिषु तथा जीवेन्दुतीक्ष्णांशुषु। शाखास्वामिनि केन्द्रगे बलयुते वारे च तस्योत्तमं तस्मिन् क्षीणबले तथा सुरगुरौ शुक्रे च तन्नेष्यते॥ ६॥**

त्रैवर्णिकानां ब्राह्मणक्षत्रियविशां त्रयाणां प्रातिस्विके वर्णाधिपे ग्रहे बलवति उपनयने शुभम्। अपि च सर्वेषामपि तेषां गुरुचन्द्रसूर्येषु बलाढ्येषु तथा उपनयनं शुभम्। तथा च श्रीपतिः—

वर्णाधिपे बलोपेते उपनीतिक्रिया हिता।
सर्वेषां च गुरौ चन्द्रे सूर्ये च बलशालिनि॥

इति। अन्ये सर्वकार्येषु सूर्यादीनां त्रयाणां बलमिच्छन्ति, तथा चोक्तम्—

उपनयनं विप्राणां गोदानविवाहमङ्गलादीनि।

कुर्यात् बलवति जीवे चन्द्रे च रवौ च नियमेन ॥

शाखास्वामिनीति शाखाशब्देनावयवी वेदो लक्ष्यते । कर्तुरध्येष्यमाणवेदाधिपे ग्रहे बलवति तत्काललग्नस्य केन्द्रगे शस्तम् । तस्य वेदाधिपस्य वारे चोपनयनमुत्तमं वेदाधिपे गुरौ शुक्रे बलहीने तदुपनयनं नेष्टम् । अत्राहुः—

शाखाधिपतिवारश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नं च दुर्ग्रहं त्रितयं व्रते ॥
स्वनीचगे तदंशे वा स्वारिभे वा तदंशगे ।
गुरौ भृगौ वा शाखेशे विद्याकर्मविवर्जितः ॥
स्वाधिशत्रुगृहस्थे वा तदंशस्थेऽथ वा व्रती ।
शाखेशे वा गुरौ शुक्रे महापातककृद्भवेत् ॥

इति । एषु त्रिष्वपि बलवत्सु शुभम् । यथोक्तमभियुक्तैः—

स्वोच्चसंस्थे तदंशे वा स्वराशौ वा तदंशके ।
शाखेशे वा गुरौ शुक्रे वेदवेदाङ्गपारगः ॥
परमोच्चगते जीवे शाखेशे वाऽथ वा सिते ।
व्रती शिशुर्धनायुष्यवेदशास्त्रविशारदः ॥
मित्रराशिगते जीवे शाखेशे वा तदंशगे ।
शुक्रे वाऽऽचारसंपन्नः तदा तत्र व्रती शिशुः ॥
स्वाधिमित्रगृहस्थे वा तदंशस्थेऽपि वा गुरौ ।
भृगौ शाखाधिपे वाऽपि विद्यायुष्यधनान्वितः ॥

इति । एवं वर्णशाखेशेषु गुरुशुक्रसूर्यचन्द्राणां षण्णां बलं ग्राह्यम् ।
अपि चः—

चन्द्रताराबलं वीक्ष्यं लग्नपञ्चाङ्गजं तथा ।
गोचरं वेधजं चाष्टवर्गजं रूपजं बलम् ॥

यथोत्तरं बलाधिक्यं स्थूलं गोचरमार्गजम् ॥

इति । केचिदाचार्यस्य सूर्यचन्द्रताराबलं वीक्ष्यमिति वदन्ति । तथा च—

वटोर्गुरुबलं श्रेष्ठमाचार्यस्य रवेर्बलं ।
उभयोश्च बलं चान्द्रं ग्राह्यं ताराबलं तथा ॥

इति । शैवादीनां व्रतेऽप्येवम् । तथा चाहुः—

स्वर्तुमूढादिदृष्टश्चेत् सर्वेषामुत्तरायणे ।
ब्राह्मणोक्ते नृपोक्ते वा शैवादीनां विधीयते ॥

इति । क्वचिद्देशे गुरुशुक्रयोर्नीचारिभावस्थाने मौञ्जिबन्धनं न कुर्वन्ति । यथा—

पराजिते वा रिपुराशिगे वा
नीचस्थिते वा भृगुजे तथार्ये ।
काम्बोज . . . . सिन्धुदेशे
मौञ्ज्यास्तु बन्धं न करोति विप्रः ।.

इति । नक्षत्राण्याह अर्धेन—

**चित्रामित्रवसूत्तरादितिविधिब्रह्मेन्दवः पूजिताः । पुष्यान्त्याच्युतवारुणाश्विमरुतो मध्या द्वितीयोद्भवे ॥**

उपनयने चित्रादिदशताराः शस्ताः । पुष्यादयः षट् मध्यमाः । शिष्टा एकादश त्याज्यतारा वर्ज्याः । अत्र गुरुः—

त्रिपूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे ।
त्वाष्ट्रे सौम्ये पुनर्वस्वोरुत्तमं तूपनायनम् ॥

इति ।—

वारुणे वैष्णवे पुष्ये वायव्ये प्रोष्ठपद्यपि ।
अश्विन्यां षट्सु भेषूक्तो मध्यमं तु चतुर्मुखैः ॥
शेषेषु वर्जयेद्विद्वान् द्विजानामौपनायनम् ।
उत्तमे मध्यमे चैव सद्गृहे चेद्विवर्जयेत् ॥

स्वाती श्रेष्ठा धनिष्ठा मध्यमेत्यत्रिः । वैष्णवादीनां च विशेषमुक्तवान्—

श्रोणा विष्ण्वर्चकस्येष्टा सवर्णस्याश्विवासवे ।
रौद्रं शिवार्चकस्येष्टं शतभं कुण्डगोळयोः ॥

इति । तिथीराहापरार्धेन ;—

**क्षोणीमङ्गळसामिधेन्यमरराट्सङ्ख्यातिथिर्निन्दिता त्याज्योऽनध्ययनोऽखिलोऽपि समयः षष्ठी च शुक्ले शुभा ॥ ७ ॥**

प्रतिपदष्टमीपञ्चदशीचतुर्दश्यश्चतस्रस्तिथयो निन्दिताः । अपि चानध्ययनस्समयोऽखिलोऽपि नित्यो नैमित्तिकस्तात्कालिकोऽपि त्याज्यः। शुक्ले पक्षे छिद्राख्याऽपि षष्ठी शुभा । तथा च वसिष्ठः—

शुक्लपक्षे द्वितीया च तृतीया च त्रयोदशी ।
पञ्चमी दशमी षष्ठी सप्तमी च विशेषतः ॥
कृष्णे च पञ्चमी यावत्तिथयः संप्रपूजिताः ।
अथ वा सार्धभागे तु चन्द्रे क्षीणे तु कारयेत् ॥

इति । गुरुस्त्वाह—

शुक्लपक्षश्शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना ।

कृष्णपक्षे तु ते त्रेधा त्रयोदश्यपि कैश्चन ॥
द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
द्वितीया च तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः ॥
द्वादश्येकादशी चैव मध्यमे द्वे तिथी मते ।
मध्यमे च प्रशंसन्ति चन्द्रेऽतिबलसंयुते ॥
कृष्णे चैवं प्रशस्तास्स्युस्तिथयस्तूपनायने ।

इति । नारदोऽप्याह—

शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा ।
त्रयोदशी च दशमी सप्तमी व्रतबन्धने ॥
श्रेष्ठास्त्वेकादशी षष्ठी द्वादश्येतास्तु मध्यमाः ।
एकां चतुर्थीं संत्यज्य कृष्णपक्षे तु मध्यमाः ॥
आ पञ्चम्यास्तु तिथयः परास्ता अतिनिन्दिताः ।

इति द्वादशे कृष्णान्त्यभागे एकादश्यादावुपनयनमुक्तं । तदत्यात्ययिक विषयम् । यत आह नारदः—

ब्राह्मण्यनाशे संप्राप्ते कृष्णे चैकादशीं तथा ।
त्रयोदशीं द्वादशीं च गृह्णीयादुपनायने ॥

इति । गुरुरत्यापदि कृष्णप्रतिपच्छुक्लचतुर्दश्यौ ग्राह्ये इत्याह—

कृष्णे च प्रथमा ग्राह्या कदाचिच्छुभगे विधौ ।
चन्द्रे बलयुते लग्नाच्छुभभागगते गुरौ ॥
चतुर्दशी सिते शस्ता कुमारे वयसाऽधिके ।

इति । कृष्णपक्षे नवम्यां प्रतिपच्छुक्लचतुर्दश्यावत्यापदि ग्राह्ये मुनिभिरुक्ते । तथाऽपि लोकविरोधात् केचिच्छुक्ले कृष्णे च सप्तमीत्रयोदश्यौ गळग्रहाविति वर्जयन्ति । तथा च स्मर्यते—

नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।
कर्तव्यं नोपनयनमनध्याये गळग्रहे ॥

राशेः प्रथमभागस्थः सूर्यो निरंशः । गळग्रहा अन्यैरुक्ताः—

त्रयोदशीचतुष्कं च सप्तम्यादित्रयं तथा ।
चतुर्थ्येकाकिनी प्रोक्ता अष्टावेते गळग्रहाः ॥

इति । यद्यपि निन्दिते तथाऽपि गुर्वत्रिगार्ग्यवसिष्ठनारदादिभिः प्रशस्ततया परिगृहीतत्वात् अनध्यायेष्ववमतत्वाच्च ग्राह्ये । अनध्यायाः स्मृतिषूक्ताः । यथा—

प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः ।
श्वोऽनध्याये च शर्वर्यां नाधीयीत कदाचन ॥

चतुर्दश्यादिषु प्रदोष एव अनध्यायः । तथा च पुराणे—

मेधाकरस्त्रयोदश्यां . . . . . . . च विशेषतः ।
चतुर्थ्यां च प्रदोषेषु न स्मरेन्न च कीर्तयेत् ॥

रात्रौ मध्यमयामयोस्सदा अनध्यायः—

प्रदोषवादिमौ यामौ वेदाभ्यासे न तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

वर्षाभ्योऽन्यत्र सन्ध्याकाले विद्युत्स्तनितवर्षेष्वहर्निशमनध्यायः । त्रिषु युगपदुत्पन्नेषु त्र्यहं । वर्षासु सज्योतिरुल्कापाते दिवानिशम् । अभ्रचुत्पातेष्वाकालिकः । अत्र मनुः—

विद्युत्स्तनितवर्षेषु महोल्कायाश्च संभवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥
एतानभ्युदितान् विद्याद्यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥

इति । आपस्तम्बः ;—

विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र सन्निपतेयुस्त्र्यहमनध्यायः ।
यावद्भूमिव्युदकेत्येक एकेन द्वाभ्यां वा एतेषां आकालिकमिति॥

मनुः ;-

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्स्वने ।
सज्योतिस्स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥

चोरैरुपप्लुते ग्रामे विप्लवाग्निकारिते आकालिकमनध्यायं विद्यात् । सर्पाद्भुतेषु च—

निर्घाते भूमिचलने ज्योतिषां चोपसर्जने ।
एतानाकालिकान् विद्यादनध्यायानृतावपि ॥

ज्योतिषामुपसर्जनं च चन्द्रार्कयोः परिवेषः ;—

फलान्यापस्तिलान् भक्ष्यांस्त्यक्त्वाऽन्यत् श्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्यायं पाल्यास्यब्राह्मणाः स्मृताः ॥

मनुः—

प्रतिगृह्य द्विजो विद्वान् एकोद्दिष्टस्य केतने ।
त्र्यहं न कीर्तयेत् ब्रह्म राज्ञो राह्वोश्च सूतके ॥

याज्ञवल्क्यः—

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥

वसिष्ठः—

आचार्यपुत्रशिष्यभार्यास्वहोरात्रं ऋत्विक्षु योनिसंबन्धेषु च महागुरौ द्वादशरात्रं स्वसपिण्डे त्रिरात्रं आचार्योपाध्याये च पक्षिणी समानविद्ये ब्रह्मचारिणि । शातातपः—

अष्टकासु त्वहोरात्रमृत्वन्तेषु महोत्सवे ।

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका । अत्र चानध्ययनमहोरात्रं । यमोऽपि—

कार्तिकी फाल्गुन्याषाढी तिस्रोऽष्टकास्त्रिरात्रम् ।

अत्र तिस्रोऽष्टकाः सप्तम्यादयः। तास्वपि त्रिरात्रमनध्यायः। महापुराणे—

महानवम्यां द्वादश्यां भरण्यां च महादिके ।
तथाऽक्षयतृतीयायां शिष्यान्नाध्यापयेद्बुधः ॥

माघमासस्य सप्तम्यां रथाख्यायां च वर्जयेत् ।
अकालगर्जितादौ च पर्वस्वाशौचकादिषु ॥
अनध्यायं तथा कुर्यादुपरागादिके तथा ।

महानवमी—आश्वयुजशुक्लनवमी । महाद्वादशी—कार्तिकशुद्धद्वादशी । महाभरणी—प्रोष्ठपदे यमतारा । अक्षतृतीया—वैशाखशुक्लतृतीया । रथाख्या—माघशुक्लसप्तमी । नारदीये—

अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥

मन्वादयश्चोक्ताः । याज्ञवल्क्यः—

श्वक्रोष्टृगर्दभोलूकसामबाणार्तनिस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥
देशेऽशुचावश्वानि च विद्युत्स्तनितसंभवे ।
भुक्त्वाऽऽर्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते ॥
पांसुप्रवर्षे दिग्दाहे सन्ध्यानीहारभीतिषु ।
धावतःपूतिगन्धे च श्रेष्ठे च गृहमागते ॥

इत्यादयस्तात्कालिका अनध्यायाः, ते सर्वे वर्ज्याः, तत्र हेतुः स्मृतावुक्तः—

छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्तिताः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदार्जितम् ॥
तत्काले तस्य रक्षांसि श्रियं ब्रह्म यशो बलम् ।
सर्वमादाय गच्छन्ति वर्जयन्तीप्सितं फलम् ॥

इति । सर्वे अनध्यायाः त्यज्यन्ते स मुख्यः । नित्या एव ; स मध्यमः । अथ चतुर्दशीं प्रशसन्तीत्यादिस्मरणान्न वर्ज्यन्ते सोऽधमः । नारदः—

गुरुशुक्रबुधानां तु वाराः श्रेष्ठतमाःस्स्मृताः ।
सोमसूर्यदिने मध्ये निन्द्यौ मन्दारवासरौ ।
सिते पक्षे प्रशस्तं स्यात् कृष्णे वर्ज्यं विधोर्दिनम् ॥

इति । अत्रिस्तु—

सिद्धामृते योगबले शुभमिन्द्वर्कयोर्दिनम् ।

इति । बुधवारोऽपि कदाचिन्निन्द्यते—

बुधवारो बुधैर्वर्ज्यः सपापेऽस्तमिते बुधे ।

इति सामकादीनां कुजदिनमपि शस्तम् । ग्रहाणां राश्यादयोऽपि वारवत् । यथोक्तं—

एवमेषां ग्रहांशेषु द्रेक्काणेषु विधिर्भवेत् ।

इति । अथ राशिषु फलमाह—

**मूको विद्वान् बोधवान् वेदवादी शिल्पी धीमान् लब्धवाणिज्यवृत्तिः । पापी पूज्यः शूद्रको राजदूतः शास्त्रार्थज्ञः स्याच्च मेषादिलग्ने ॥ ८ ॥**

मूकः—कुण्ठितवाक् । बोधवान्—ज्ञानवान् । शूद्रकः—प्राप्त शूद्रभावः । मेषादिलग्नेषु कृतोपनयनो मूकादिर्भविष्यति । अस्य गुरुवचनं व्याख्या—

वाक्कुण्ठो मेषलग्ने स्यात् विद्वान् श्रीमान् वृषोदये ।
नृयुग्मलग्ने विज्ञानी षडङ्गज्ञश्च कर्कटे ॥
बहुशिल्पी हरौ लग्ने पण्डितः कन्यकोदये ।
तुलोदये वणिग्जीवी वृश्चिके काण्डपृष्ठभुक् ॥
सर्वैः संपूज्यते चापे मकरे शूद्रतां व्रजेत् ।
नृपप्रेष्यो घटे लग्ने वेदशास्त्रार्थवित् झषे ॥

इति । मृगकुम्भयोः शुभमिति नारदः, तथा च तद्वाक्यं—

ब्राह्मणस्तु मृगे विद्वान् कुम्भे चाचारवान् भवेत् ।
मीने वेदान्तवित् सौम्यो द्विजन्मोदयलग्नतः ॥

इति । पापराशिरपि शुभयुतेक्षितो ग्राह्यः । तथा च गुरुः—

असत्फलप्रदे राशावपि लग्ने शुभेक्षिते ।
शुभयुक्तेऽथ वै तेषां शुभमेव फलं व्रजेत् ॥

इति । स्याच्च मेषादिलग्न इत्यादिचकारोऽनुक्तसमुच्चयार्थः । राश्यंशकेषु राशिवत्फलं इति । तथा च गुरुः—

एतेषामंशके लग्नेऽप्येवमेतत्फलं भवेत् ।
वटवोऽत्रोपनीता ये प्रधानक्रियया युताः ॥
राशेरंशो बली लग्ने फलं लग्नांशकाद्भवेत् ।

इति । राशेरंशकबलीयस्त्वात् । लग्नगतनवांशकेषु फलमाह—

**क्रौर्यं जडत्वं बहुपापबुद्धिः सुपाटवं यज्ञरतिः सुबुद्धिः । मौर्ख्यं च पुंसां क्रमशो विलग्ने दिनेश्वराद्यंशफलं प्रदिष्टम् ॥ ९ ॥**

सुबुद्धिः—सुकर्मबुद्धिः । पुंसां–वटूनामुपनयनलग्ने सूर्याद्यंशक-फलं क्रमशः क्रौर्यादि प्रोक्तं । अत्र श्रीपतिः—

शन्यंशेऽभ्युदयति मूर्खताऽर्कभागे
क्रूरत्वं भवति च पापधीः कुजांशे ॥
चन्द्रांशे त्वतिजडता बुधे पटुत्वं
यज्वत्वं गुरुभृगुभागयोर्गृणन्ति ॥

इति । चन्द्रस्य सूर्याद्यंशावस्थाने फलमाह—

**शस्त्राजीवरतिः स्वजातिसमयभ्रष्टो महापातकी विद्यायुष्यमतिप्रकर्षसहितस्त्वायुष्यविद्याधनः। विद्याज्ञानसुखायुरादिगुणवान् विद्यायुरर्थोज्झितः सूर्याद्यंशगते कृतोपनयनश्चन्द्रे क्रमात् ज्जायते ॥ १० ॥**

सूर्याद्यंशगते चन्द्रे कृतोपनयनः शस्त्राजीवननिरतो जायते । स्वांशे स्वकीयजात्याचारभ्रष्टः । कुजांशे स्वर्णस्तेयादिमहापातककृत् । बुधांशे विद्याद्युत्कर्षवान् । गुर्वंशे अनुपहतायुष्यादि । शुक्रांशे विद्यादिगुणवान् । मन्दांशे विद्याहीनः । अत्र गुरुः—

अर्कांशकगते चन्द्रे शस्त्रास्त्राहवजीवनः ।
अत्यनर्थकरो नित्यं शिशुर्विघ्नकरो भवेत् ॥
स्वनवांशगते चन्द्रे सततं विस्वरो वटुः ।
सर्ववर्णानतिक्रम्य समयानखिलानपि ॥
भौमांशकगते चन्द्रे वटुर्भवति पातकी ।
मानहीनोऽधनो गच्छेच्छत्रुतो मरणं तु वा ॥

बुधांशकगते चन्द्रे विद्याबुद्धियुतो धनी।
दीर्घायुः पण्डितः ख्यातः विज्ञानी च भवेद्दृढः ॥
शुक्रांशकगते चन्द्रे विद्यामानधनान्वितः ।
गुणवान् सर्वविख्यातो दीर्घायुश्च सुखी भवेत् ॥
मन्दांशकगते चन्द्रे दुर्वृत्तः पापकृद्दृढः ।
दुर्गुणः क्लेशवान् मूर्खो निर्धनो निधनं व्रजेत् ।

इति । शुक्ले स्वांशे शुभ इति नारदः—

कृष्णे स्वांशे निशानाथे प्रतिषिद्धादिसेवकः ।
सिते पक्षे विधौ स्वांशे सोमपस्स्याच्छिशुर्बुधः ॥

इति । स्वोच्चेऽपि शुभ इत्यत्रिः ;—

स्वांशस्थो दोषदः कृष्णे चन्द्रः स्वोच्चे सिते शुभः ।

इति । स्वोच्चांशेऽतिशुभः । तथा च गुरुः—

स्वोच्चांशमाश्रिते चन्द्रे विशेषादतिशोभनः ।
ज्ञानेन संपदा कीर्त्या वैराग्येणायुषा वटुः ॥

इति । बुधेऽनस्तगे बुधांशेऽतिशुभः—

अनस्तगे बुधे वेदवेदी स्याच्छास्त्रपारगः ।

सर्वत्रांशेशे स्ववर्गस्वोच्चस्थे अंशफलं द्वित्रिगुणं जायते । तथा च—

यद्यंशेशः स्ववर्गोच्चे द्विगुणं त्रिगुणं फलम् ।

इति । यद्यप्यविशेषेण फलं वर्धत इत्युक्तम् । तथाऽपि शुभं वर्धते न पापरते । कुत एतत् । ज्ञापकादिति ब्रूमः । अत्र ज्ञापकं चन्द्रस्य स्वांशगस्य स्वोच्चे शुभत्वकथनं । तेन स्वोच्चगस्य पापस्याप्यंशे शुभं भवति । केचित् लग्नांशेष्वेतत्फलमाहुः । तथा च गुरुः—

यदि लग्ने नवांशास्स्युरेषामेव फलं स्मृतम् ।
द्रेक्काणे द्वादशांशे च कालहोरोदयेऽपि च ।

इति । यत्तु नारदेनोक्तं—

लग्नार्थं राशयस्सर्वे शुभग्रहयुतेक्षिताः ।
ग्राह्या नवांशा न तथा ग्राह्यास्ते शुभराशिजाः ॥

न कदाचित् कर्कटांशः शुभेक्षितयुतोऽपि वा ।
तस्मात् गोमिथुनान्त्याश्वितुलाकन्यांशकाश्शुभाः ॥

इति । तदपवादाभावे द्रष्टव्यम् । यस्मात् गुरुः—

अशुभांशफलेष्वेषु तेष्वेषामपवादतः ।
प्रध्वंसाभावतां याते दोषे यच्छेच्छुभं फलम् ॥

इति । मन्दारार्कांशके लग्ने दिवसे द्वादशांशके ।
द्रेक्काणे कालहोरायां त्रिंशद्भागे निरीक्षिते ।
विद्याविज्ञानवृद्ध्यायुश्श्रीकामी नोपनायनम् ॥
कुर्यादेतेषु लग्नस्थेष्वपवादा न चेदिह ।
शिशुरप्यन्नकांक्षी स्यात् क्षयरोगमवाप्नुयात् ॥
एतेष्ववगते चन्द्रे क्रमादेतत्फलं द्वयोः ।
विद्याश्रीनिधनं चैव बन्धुभिः कलहो भवेत् ।
सर्वदोषकरो नित्यं विद्यानाशकरो भवेत् ॥

इति । लग्नकेन्द्रगतानां ग्रहाणां फलमाह द्वाभ्याम्—

**वैश्यवृत्तिरिह केन्द्रगे विधौ भूपसेवनरतो दिवाकरे । शस्त्रवृत्तिरवनीसुते पुमान् जायतेऽन्त्यजसमाश्रितः शनौ ॥ ११ ॥**

वैश्यानां वृत्तिरिव वृत्तिर्जीविका यस्येति तथा। इह—उपनयने चन्द्रे केन्द्रगे सति वैश्यवृत्तिः—कृषिवाणिज्याजीवनो भवति। सूर्ये राजसेवारतः। कुजे शस्त्रवृत्तिः—शस्त्राहवाद्याजीवनः। शनौ केन्द्रस्थे अन्त्यजातिसमाश्रितस्स्यात्।

**कवित्वं गुरुत्वं बुधत्वं च केन्द्रे शुभास्त्रीन् गुणान् संप्रयच्छन्ति नृभ्यः। गुणस्य स्वकीयस्य दानं न चित्रं यदत्रान्ययोर्दानमत्यद्भुतं तत्॥१२॥**

शुभाः—बुधगुरुशुक्राः केन्द्रे स्थिताः कवित्वगुरुत्वबुधत्वानि त्रीन् गुणान् प्रयच्छन्ति। अत्रैषां मध्ये ग्रहस्य बुधादेरेकैकस्य स्वकीयस्य बुधत्वादेर्गुणस्य दानं चित्रं न भवति सुकरत्वात्। यत्पुनरन्ययोः—परकीयगुणयोः दानं तदत्यद्भुतं। एतदुक्तं भवति—बुधस्य बुधत्वदानं न चित्रं गुरुत्वकवित्वदानमत्यद्भुतं। गुरोरपि गुरुत्वदान नाद्भुतं बुधत्वकवित्वयोर्दानमतिचित्रम्। कवेः कवित्वदानं न चित्रं गुरुत्वबुधत्वदानमत्यद्भुतमितीयं विचित्रोक्तिः, अर्थतस्तु बुधः—स्वाध्यायवान् ज्ञानी च। गुरुराचार्यः बुध्यादिगौरववान्। कविरातिक्रान्तदर्शी विद्यासाहित्यादिमांश्च; तस्य भावस्तत्त्वमिति। तथा चात्र श्रीपतिः—

स्वानुष्ठाने रतस्स्यात् प्रवरमतियुतः केन्द्रसंस्थे सुरेड्ये
विद्यासौख्यार्थयुक्तो ह्युशनसि शशिजेऽध्यापकश्च प्रदिष्टः।
सूर्यो राजोपसेवी भवति धरणिजे शस्त्रवृत्तिर्द्विजन्मा
शीतांशौ वैश्यवृत्तिः दिनकरतनये सेवकश्चान्त्यजानाम्॥

इति। एवं लग्नादन्यत्र केन्द्रफलमुक्त्वा साम्प्रतं लग्नकेन्द्रे फलमाह—

**लग्नस्थो मरणं नृपादिह रविः शस्त्राच्च तत् भूसुतः विध्वंसं रविजस्तमोऽङ्गविहतिं कुष्ठादिरोगान् शिखी। विद्याऽऽयुष्यसुखार्थवृध्युपचयं ज्ञाकज्ञजीवा नृणां शुक्ले शुक्रफलं करोति बहुले मन्दोपमश्चन्द्रमाः ॥ १३ ॥**

इह—उपनयने तत्काललग्नस्थो रविः कर्तुः नृपान्मरणं करोति। भूमिसुतो लग्नस्थः शस्त्रान्मरणं करोति। रविजो विध्वंसं दोषैरभिशस्तं। तमो–राहुरङ्गविहतिं–अङ्गहानिं। शिखी–केतुः कुष्ठादिरोगान् करोति। जीवज्ञगुरुशुक्रास्त्रयो लग्नस्था विद्यादीनां उपचयं—संपात्तिं कुर्वन्ति। चन्द्रमाः शुक्ले पक्षे लग्नस्थः शुक्रफलं शुक्रोक्तफलं विद्यादिसंपत्तिं करोति। बहुले पक्षे लग्नस्थस मन्दोपमः— मन्दसदृशः मन्दतुल्यफल इत्यर्थः।

उपनीतौ रवौ लग्ने भूपतेर्हन्यते रुषा।
तस्य दृष्टे ग्रहे लग्ने बहुरोगी द्विजो भवेत् ॥
भूमिसूनूदये सद्यो मृत्युस्स्याच्छस्त्रतो नृणाम्।
अर्कात्मजोदये दोषैरभिशस्तोऽतिपातकैः ॥
बुधोदये महाप्राज्ञः सर्वसंपादि चोच्छ्रितः।
जीवोदये तु यज्वाऽऽढ्यो दीर्घायुर्धनवान् महान् ॥
सितोदये महाज्ञानी वित्तवानायुषी गुणी।
चन्द्रोदयेऽभिशस्तः स्यात् क्षयरोगी सितेतरे ॥

सिते पक्षे बहुज्ञः स्यात् धनवान् यज्ञवान् सुखी ।
राहूदये विहीनाङ्गो महाकुलविनाशनः ॥
केतूदये तु कुष्ठी स्यात् राशौ ग्रहवशात् फलम् ।
उपरागसमीपे तु राहुकेतुफलं द्वयोः ॥

इति । मन्दोदये चोरः स्यादिति गार्ग्यः । स्वोच्चस्थोऽपि चन्द्रो लग्ने न शुभ इति नारदः—

स्वोच्चसंस्थोऽपि शीतांशुः व्रतिनं यदि लग्नगः ।
तं करोति शिशुं निस्स्वं सततं क्षयरोगिणम् ॥

इति; तच्च कृष्णे वेदितव्यम् । ग्रहाणां धनादिभावेषु फलमाह—

**क्लेशं सुखं गदभयं विपदं समृद्धिं नाशं मृतिं व्यसनमापदमर्थसिद्धिम् । हानिं च दद्युरशुभाः क्रमशो धनादिस्थानेषु षष्ठरहितेषु शुभास्त्वभीष्टाः ॥ १४ ॥**

अशुभाः—पापाः—रविकुजमन्दाः तत्काललग्नस्य धनादिस्थानेषु द्वितीयादिभावेषु स्थिताः क्रमेण क्लेशादीनि फलानि दद्युः । तत्र द्वितीये सुखं—धनलाभनैरोग्यादिसौख्यं । चतुर्थे रोगभयं । पञ्चमे विमाननादिविपत्ति । षष्ठे शत्रुहानिं ज्ञानधनवृद्धिं । सप्तमे रोगादिभिर्देहक्षयं अष्टमे व्याध्यादिना अपमृत्युं । नवमे व्यसनं—सुहृज्जनशोकादिविपत्तिं । दशमे देहक्लेशभयादिविपत्तिं । एकादशे सुखधनलाभं । द्वादशे धनहानिं कुर्युः । अत्र गुरुः—

द्वितीयेऽर्के धनैर्हीनः तृतीयेऽतिसुखी वटुः ।
चतुर्थे देहनाशः स्यात् पञ्चमे ज्ञाननाशनः ॥

षष्ठे शत्रोर्विनाशस्स्यात् सप्तमे व्याधिदो रविः ।
अष्टमे मृत्युदो भानुर्नवमे वित्तनाशनः ॥
दशमे विषमाहारो वित्तायुष्यप्रदो भवेत् ॥
द्वादशे वित्तनाशाय स्थितो भानुर्विलग्नतः ॥

इति । ननु किमर्थमिदमर्कस्य द्वितीयादिष्वानवमान्तेषु फलाभिधानं । दिवापराह्णवर्जं विहितस्योपनायनलग्नस्य द्वितीयादिष्ववस्थानासंभवात् । पूर्वशास्त्रानुसारेण कृतमिति ब्रूम इति चेत्, नैतन्मादृशामिव तादृशां प्राचामाचार्याणां युक्तम् । नापि दिवा विशुद्धलग्नाभावेऽपि भार्या (?)-मुपनयनस्य कर्तव्यतां ज्ञापयितुमिति युक्तं । ग्रहाणां दुःस्थानावस्थाने तत्पूजया तद्दोषशान्तिविधानात् कालदोषस्य तथा शान्तिविधानदर्शनाच्च । तस्मादनर्थकं तत्फलाभिधानमित्येवं प्राप्ते अभिधीयते—मुहूर्तेषु द्विविधं लग्नम् । स्थूलं सूक्ष्मं चेति । तत्र स्थूललग्नस्य द्वितीयादिष्वर्कस्यावस्थानं न संभवति सूक्ष्मलग्नस्य संभवात् अतो नानर्थकमिति । एवं बुधस्य द्वितीयादिष्वष्टमांशेषु शुक्रस्य चतुर्थादिष्वासप्तमान्तेषु फलकथनं द्रष्टव्यम् ।

वैवर्ण्यदः कुजोऽर्थस्थः. . . . . सौख्यं गतश्च सः ।
अङ्गतापं चतुर्थस्थः पञ्चमे व्यापदं ददौ ॥
वृद्धिं षष्ठे कुजो दद्यात् सप्तमे च ज्वरं कुजः ।
व्याधिं मृत्युं कुजो मृत्यौ शोकदो नवमे गतः ॥
दशमे भयदो भौमो भवे सर्वशुभप्रदः ।
द्वादशे हानिदो नृणां औपनायनकर्मणि ॥

मन्दस्य—

हानिं लाभं च रोगित्वं द्यूतासक्तिं कलारतिं ।
रोगं मारं विपत्क्लेशान् कुर्यात् सौख्यं व्ययं शनिः ॥

राहोः—

मोहं लाभं गदं चौर्यं श्रियं शस्त्रं वधं बलम् ।
पापं सौख्यमपभ्रंशं पातः कुर्याद्धनादिगः ॥

इति वसिष्ठः। राहुर्धने व्याधिमिति गार्ग्यः । चतुर्थे भ्रंशदो देशादिति गुरुः । सप्तमे अपस्मारमिति नारदः । अष्टमेऽहौ विषान्मृत्युरिति गुरुः । केतोः राहुवत् फलम् । शुभा—बुधगुरुशुक्रास्तु षष्ठरहितेषु सर्वेषु स्थानेषु अभीष्टाः । शुद्धिनियमाद्दशमेऽपि नेष्टाः । तथा च गुरुः—

बुधस्सर्वर्क्षगस्सौख्यबुद्धिवित्तान्वितं शिशुम् ।
शास्त्रार्थपारगं कुर्यात् विना षष्ठाष्टमौ सदा ॥
सर्वत्र शुभकृत् जीवः पुत्रारोग्यायुषां सदा ।
वेदशास्त्रार्थयज्ञाद्यैः शिशोरिष्टारिभे विना ॥
शुक्रस्तु सर्वभावस्थः सर्वसंपत्समृद्धिदः ।
षष्ठाष्टमस्मरान् मुक्त्वा शिशोरर्थाद्विजन्मनि ॥

इति । शुक्रः सर्वकार्येषु न शुभ इति प्रागेवोक्तम् । चन्द्रस्तु षष्ठाष्टमद्वादशेषु न शुभः अन्यत्र शुभः । तथा च वासिष्ठः चन्द्रस्य द्वितीयादिषु फलमाह—

शान्तिं सौख्यं मृदुं शौचं व्याधिं प्रीतिं रुजं धनम् ।
पूजां मोदं प्रमोदं च क्रमेण कुरुते शशी ॥

इति । अनिष्टयोगत्रितयमाह—

**कुजार्कजौ बन्धनदौ व्ययस्थौ विद्याच्छिदौ तौ धनबन्धुसंस्थौ । व्ययस्थमर्कं क्षितिजोऽभिपश्यन् आचार्यमन्धं कुरुते बलाढ्यः । १५ ॥**

कुजमन्दौ द्वौ तत्काललग्नस्य द्वादशस्थौ कर्तुर्बन्धनप्रदौ स्तः। अन्योन्यदृष्टयोस्तयोरेकोऽपि द्वादशस्थो बन्धनदः। तौ कुजार्कजौ द्वितीयचतुर्थस्थौ द्वावपि द्वितीयस्थौ चतुर्थस्थौ वा कुमारस्य विद्याच्छिदौ—विद्यायां विघ्नकारिणौ स्याताम्। व्ययस्थं सूर्यं कुजः पश्यति चेत् आचार्यमुपनेतारमन्धं सद्यः कुरुते। बलहीनश्चेत् चिरेणेति शेषः। व्ययस्थमर्कं मन्दः पश्यति चेत् कुमारस्य विद्यां विनाशयतीत्यर्थसिद्धम्। अत्र गुरुः—

प्राप्तां विद्यां नाशयेतां मन्दारौ सधनाम्बुगौ।
अन्योन्यमथ तौ दृष्टौ द्वादशस्थौ तु बन्धदौ॥
अर्कं लग्नाद्व्ययर्क्षस्थं यदि भौमो निरीक्षते।
बलवानचिरादन्धो गुरुः स्यात् विपरी(?) चिरात्॥
व्ययस्थं वा रविं मन्दः स्वदृष्ट्या यदि पश्यति।
शिष्यविद्यां हरेत् प्राणी विबली रोगदः शिशोः॥

इति। एषामनिष्टयोगानां भङ्गोऽप्यन्यैरुक्तः। यथा गुरुणा—

अनिष्टस्थानगोऽप्यत्र ग्रहः कोऽपि न दोषदः।
शुभदृष्टियुतः प्राणी सौम्यवर्गे यदि स्थितः॥
स्वोच्चस्वर्क्षस्थिते सौम्ये लग्नादुपचयं गते।
विधौ शोभनकर्मस्थे नान्धतामन्धतां व्रजेत्॥
लग्नकेन्द्रे शुभस्वोच्चे स्थितो नेत्रद्वयोडुगः।
आचार्यो नान्धतां गच्छेदिन्दौ वा सत्क्रियायुते॥
लग्नेशे बलसंयुक्ते लग्नार्थायव्ययत्रिके।
चन्द्रे च शुभकार्यस्थे नाचार्योऽन्धत्वमाप्नुयात्॥

अत्रिणाऽप्युक्तम्—

धर्मार्थेशौ द्विनक्षत्रे सूर्यारौ वा सुखी गुरुः।

इति । वसिष्ठेन सामान्येनाभिहितम्—

शुभे शुभैस्तु संदृष्टे युक्तश्च यदि चेच्छुभः ।
बलं नश्यति वै तस्य तथैव च शुभेतरः ॥
सम्यक् बलाबलं ज्ञात्वा स्थाननैसर्गिकादिकम् ।
अल्पदोषं गुणैर्युक्तं योजयेदौपनायिके ॥

इति । इष्टयोगचतुष्टयमाह—

**वित्तान्त्यगैर्द्रविणगैर्व्ययगै रवीन्द्वोः ताराग्रहैर्धुरुधुरा सुनफाऽनफाख्याः । तस्य द्विषण्मदनमृत्युगतैश्च सौम्यैः प्रोक्तोऽधियोग इह ते शुभदास्तु योगाः ॥ १६ ॥**

तत्काले इन्दोर्द्वितीयद्वादशगैर्द्वादशगैश्च ताराग्रहैः कुजादिभिः पञ्चभिः धुरुधुरा सुनफाऽनफाख्यास्त्रयो योगाः । तस्य चन्द्रस्य षट्सप्ताष्टमगैः सौम्यैर्बुधादिभिः त्रिभिरधियोगाख्यो योगः । ते चत्वारोऽपि योगाः इह उपनयने शुभाः एतदुक्तं भवति—चन्द्रस्य द्वितीयगैः सुनफा, द्वादशगैरनफा, उभयस्थैर्धुरुधुरा, षट्सप्ताष्टमगैरधियोगः इति । तथा च गुरुः—

चन्द्रादर्थे व्यये चापि तथैवोभयतो यदि ।
ग्रहाः स्युः पञ्च सुनफाऽनफाधुरुधुरास्तथा ॥
चन्द्रात् षट्सप्तरन्ध्रेषु यद्येकस्मिन् शुभग्रहे ।
स्थितेऽधियोगसंज्ञा स्यात् शुभो योगो द्विजन्मनि ॥

इति । 'हित्वाऽर्कं सुनफाऽनफाधुरुधुराः स्वान्त्योभयस्थैर्ग्रहैश्शीतांशोः' इति वराहमिहिरेणार्कव्यतिरेकेणोक्तैरिह ताराग्रहैरित्युक्तम् ।

एवं जातकोक्तान् कतिचिद्योगानुक्त्वा अन्यानप्यतिदिशति—

**ये ये योगा जन्मनीष्टाः प्रदिष्टाः ते ते सर्वे चोपनीतौ प्रशस्ताः। तत्रानिष्टा ये च तेऽत्राप्यनिष्टा भावस्थानालोकनादीनि तद्वत् ॥ १७ ॥**

जन्मनि—जातके येये नाभसाश्रयाकृतिजराजयोगादयो योगा इष्टाः—ग्रहफलप्रदा उक्ताः ते ते सर्वे योगाः उपनीतौ प्रशस्यन्ते।

अथ ये तत्र जातके अनिष्टा—अशुभफलदाः पातकतापसादयो योगाः ते अत्र उपनयनेऽप्यनिष्टाः स्युः। भावाः—कर्मादयः। स्थानान्यंशकादीनि। आलोकनं—दृष्टिः। आदिशब्देन संयोगः तत्फलानि जातकवत् वाच्यानीत्यर्थः। एतदुक्तं भवति—जातके या कर्माजीवादिभावचिन्ता यत् ग्रहाणां राश्यंशकाद्याश्रयफलं यत्पुनर्द्विग्रहादियोगफलं तत्सर्वमुपनयनेऽपि तथा द्रष्टव्यमिति। यथाऽऽह गुरुः—

काले जन्मनि ये प्रोक्ता शुभदास्ते शुभप्रदाः।
द्वितीयेऽपि भवेऽप्यस्मिन् योगो दोषेषु सत्स्वपि ॥
एते शुभप्रदा योगा द्वितीये जन्मनीरिताः।
सत्स्वप्यतीव दोषेषु शुभान् दद्युर्निजैर्बलैः ॥

इति। जातकोक्ता अनिष्टयोगा यथा—

वक्रश्शनिर्वा व्ययगोऽक्षिहन्ता
वामं कुजो दक्षिणमक्षि सौम्यः।
व्यये रवीन्दू युगपत् पृथग्वा
नेत्रे हरेतामपसव्यसव्ये ॥

सुखसुतयुक्तौ पापौ व्ययगे जीवेऽरिनैधने चन्द्रे ।
सौम्ययुतिदृष्टिहीने निस्सन्दिग्धं भवत्यन्धः ॥
त्रिलाभलग्नेषु शशी सपापः
कर्णापहः पापदृशा स सद्यः ।
क्रूरेक्षितौ पञ्चनवर्क्षसंस्थौ
पापौ वहेतां श्रवणोपघातम् ॥
लग्नाद्व्ययधनसंस्थैः पापैः सौम्यग्रहैरदृष्टयुतैः ।
श्वित्री त्वथ वा शूली नेत्रविनाशी भवेदथ वा ॥
स्वगुरुगृहमृगेषु पापदृष्टे
हिमरुचि दद्रुविचर्चिकाभिभूतः ।
अळिवृषभकुळीरगे सपापे
भवति च पीडितवाक् त्वगुत्थदोषैः ॥
रन्ध्रे गोपुत्रगे पापे केन्द्रस्थौ चन्द्रचन्द्रजौ ।
योगो महागदाख्योऽयमपस्मार्यत्र जायते ॥
बुद्धिस्थानाधिपयुते भौमशुक्रयुते यदि ।
बुद्धिभ्रमयुतो नित्यं स्वद्रव्यं च विनश्यति ॥
अर्केन्दुमन्दैः केन्द्रस्थैः व्यये भाग्यपतेर्जडः ।
अन्यग्रहैर्विलग्ने तु बलहीनैर्नवीक्षितैः ॥
स्वोच्चभेऽपि ग्रहैस्सर्वैर्नीचारिभवनांशगैः ।
शुभकर्मविहीनस्थैः भवेत् भिक्षाशनी नरः ॥
होरेशे व्ययगे व्योम्नि क्रूरे सौरे निशाकरे ।
नरोऽभियोगवान् निस्स्वः परदेशरतो भवेत् ॥
भाग्याधिपे व्ययस्थे पापयुतौ जन्मलग्नयोर्नाथौ ।
अस्तं याते पुरुषः कुलविध्वंसी विनष्टदारसुतः ॥

शशिशनिशुक्राः केन्द्रस्थिताः कुजार्की सिताष्टमव्ययगौ ।
केमद्रुमाह्वयोऽयं योगोऽत्र भवेन्न जन्मभूमिरतः ॥
अर्कात् केन्द्रगते चन्द्रे योगोऽयमधमो भवेत् ।
तत्र स्याद्वित्तविनयज्ञानधीनैपुणाधमः ॥

एवमाद्या अनिष्टयोगा द्रष्टव्याः । इष्टयोगास्तु जातकशास्त्रेषूक्ताः । यथा—

चन्द्रकेन्द्रे गुरौ योगः स्यादेष गजकेसरी ।
तत्र ख्यातो बली भोगी कुलाढ्यो ग्रामबृन्दकृत् ॥
अमला शशिलग्नाभ्यां सद्ग्रहो यदि कर्मगः ।
तत्र कीर्तिः क्षितौ तिष्ठेदायुगान्तमनश्वरी ॥
लग्नेन्दुभ्यां ग्रहैस्सौम्यैः सर्वैरुपचयस्थितैः ।
वसुमान् नाम तत्र स्यात् कुबेरसमवैभवः ॥
पुंराशिस्थितयोरह्नि रवीन्द्वोः पुंग्रहो यदि ।
लग्ने पुमान् महाभाग्यो . . . . त्र जायते ॥
स्वोच्चस्वक्षेत्रगतैर्बलिभिः केन्द्रं गतैः कुजाद्यैश्च ।
रुचको भद्रो हंसो माळव्यः शश इति ख्यातः ॥
ज्ञानैर्धनैश्चैव युताः कुलाढ्याः
तेजस्विनः पुण्यभाजः सुशीलाः ।
सौख्यान्विता भोगवन्तः प्रधानाः
दीर्घायुषस्तेषु मर्त्या भवन्ति ॥
अर्कस्योभयसंस्थैः शुभग्रहैः स्यात् (?) शुभोभयचर्या ।
तत्र स्यात् नृपदयितो ज्ञानी बलवान् स्वबन्धुनाथश्च ॥
लग्नस्योभयसंस्थैः शुभैः स्यात् शुभकर्तरी ।
तत्र स्याद्बलवान् भोगी धनवान् स्वकुलाधिपः ॥

अर्काद्रिपुनभोऽन्त्यस्थैः गुर्विन्दुज्ञैस्तु . . . . ।
तत्र स्यात् कुशलो धीमान् सुखी ज्ञानकलापटुः ॥
केन्द्रश्चन्द्रात् त्रिगतौ कुजशुक्रौ धर्मगौ च गुरुमन्दौ ।
तत्र स्यान्नृपतिसमो मन्त्री धीमान् धनी सुखी सुभगः ॥
वायुश्चन्द्रादर्कैर्हिबुकैः सुतधर्मगौ च सितधिषणौ ।
स्यात्तत्र शास्त्रकुशलो धनवान् क्रयविक्रयी च धर्मज्ञः ॥

अन्यानुपनयनयोगानाह—

**केन्द्रे देवगुरौ भवे दिनकरे चन्द्रे शुभांशास्थिते लग्नार्थानुजगे सिते गुरुबुधौ केन्द्रेऽनुकूलाः परे । स्वर्क्षस्वोच्चगते सिते यदि गुरुः केन्द्रे त्रिकोणे बली सौम्यांशेषु विधौ बुधार्कभृगुजाः कर्मायलग्नस्थिताः ॥ १८ ॥ गोमेषेन्दुगृहेषु शुक्रदिनकृच्चन्द्रेषु वीणोदये मीनेन्द्वास्पदमेषपश्चिममुखत्र्यंशेषु शुक्रेन्द्विनाः । खेऽन्त्ये वा विदिने भवे तनुगतः शुक्रो गुरुर्वा झषे योगास्सप्त नृणामिहोपनयने प्रोक्ताश्शुभास्सिद्धिदाः ॥ १९ ॥**

गुरौ केन्द्रे सूर्य एकादशे चन्द्रे शुभनवांशगते लग्नस्य चन्द्रगुणत्वात् शुभराशिलग्ने च सति एको योगः । लग्नाद्द्वितीयतृतीयेष्वन्यतमस्थे शुक्रे बुधगुरू द्वौ लग्नकेन्द्रे भवतः परे-पापाः त्रिषडेकादशगत्वेन शुभफलप्रदानाभिमुखाः यदि स्युरन्यः । स्वर्क्षस्वोच्चगते—वृषमीनस्थे शुक्रे यत्र तत्र भावे स्थिते बली

स्थानबलवान् धनुर्मीनकुळीरस्थो गुरुः केन्द्रे त्रिकोणे वा यदि अन्यः। अथवा स्वर्क्षस्वोच्चगे शुक्रे गुरुः केन्द्रे स्यात् बलवान् अन्यः। त्रिकोणे च यदि स्थितोऽन्यः। चन्द्रे यत्रतत्र राशौ शुभांशस्थिते बुधार्कशुक्रास्त्रयः क्रमेण दशमैकादशलग्नगता यदि स्युरन्यः। क्वचित् सितार्कशशिजा इति पाठः। चन्द्रे शुभांशगे शुक्रार्कबुधाः क्रमेण दशमैकादशोदयस्थिताश्चेत् अन्य इति। शुक्रार्केन्दुषु क्रमाद्वृषमेषकुळीरेषु स्थितेषु मिथुनलग्ने गृह्यमाणे अन्यो योगः। शुक्रचन्द्रसूर्याः क्रमेण मीनकर्कटमेषेष्वन्त्याद्याद्यत्रिभागेषु यदि स्युरन्यः। अयमर्थः;—शुक्रो मीनान्त्यद्रेक्काणे चन्द्रः कुळीराद्यद्रेक्काणे सूर्यो मेषाद्यद्रेक्काणे यदि भवति मिथुनराशौ लग्ने योग इति। अत्रैको मुखशब्दो लुप्तो द्रष्टव्यः। सरूपाणामेकशेषात्। इने सूर्ये भवे स्थिते वित्—बुधो दशमे अन्त्ये वा स्यात् मीने स्थितः शुक्रः गुरुर्वा लग्नगतो यदि स्यात् अन्यो योगः। इह शास्त्रे नृणां द्विजानामुपनयने सिद्धिदाः—ब्रह्मवर्चसादिसिद्धिप्रदाः सप्तयोगाः शुभाः गुरुप्रोक्ताः। तथा च गुरुः—

"एते शुभप्रदा योगा द्वितीये जन्मनीरिताः।
सत्स्वप्यतीव दोषेषु शुभान् दद्युर्निजैर्बलैः॥
यथोक्तकालदुर्लभे योगान् वच्मि शुभप्रदान्।
द्विजन्मकालसंभूतदोषाणां कुलनाशनान्॥
केन्द्रे त्रिकोणे वा जीवे भानुः शुक्रोऽथ वा व्यये।
द्वितीये ज्ञे शुभो योगो द्विजानामौपनायने॥
लग्नार्थभ्रातृगे शुक्रे जीवो वा*ऽन्योऽथ कण्ठके।
त्रिषडेकादशे क्रूरे नैकोऽप्यष्टमगो यदि॥

* ज्ञेऽथ.

गुरौ केन्द्रे भवे भानौ चन्द्रे शुभनवांशगे ।
शुभग्रहदशायुक्तः शुभराश्युदयो यदि ॥
भृगौ मीने वृषे वाऽपि जीवे केन्द्रत्रिकोणगे ।
कार्कि चापयुतस्थेऽस्मिन् योगः शुभग्रहोदये ॥
बुधार्कशुक्राः कर्मायलग्नगाः क्रमशो बली ।
चन्द्रः शुभांशके योगो द्विजन्मनि शुभोदये ॥
दशमायोदये याताः शुक्रभान्विन्दुजाः क्रमात् ।
चन्द्रे शुभनवांशस्थे योगः स्यादुपनायने ॥
मेषगोकर्कटान् याता भानुशुक्रेन्दवः क्रमात् ।
यमोदये भवेद्योगो द्विजोपनयने शुभः ॥
मीनमेषकुळीराणामन्त्याद्याद्यात्रिभागगाः ।
क्रमाच्छुक्रार्कचन्द्रास्स्युः शुभो योगो यमोदये ॥
जीवे शुक्रेऽथ वा मनिलग्ने भवगते रवौ ।
व्यये कर्मणि वा सौम्यो शुभो योगो द्विजन्मानि ॥

इति । अन्येऽप्यत्रानुक्ता योगास्त्वेकदेशप्रतीकाभिधानेनोह्याः । ते यथा ;—

"केन्द्रत्रिकोणगे जीवे भानुश्शुक्रोऽथ वा व्यये ।
द्वितीये ज्ञे शुभो योगो द्विजानामुपनायने ॥
जामित्रगे सुरगुरौ भवे दिनकरे स्थिते ।
भृगौ लग्नगते योगः शुभदस्स्यात् द्विजन्मनि ॥
घटादिराशिषट्केऽस्मिन् पूर्वाह्णेऽन्यतमोदये ।
[1]केन्द्रेष्टसद्युते चन्द्रे शुभांशे रिक्तभेऽष्टमे ॥
लग्ने सौम्यः सितो वाऽपि त्रिकोणस्थे बृहस्पतौ ।
चन्द्रे धर्मेऽनुकूलास्स्युः परे योगा द्विजन्मनि ॥

1 केन्द्रेषु.

इत्यादिगुरुगार्ग्योक्ताः । अत्रिः—

जीवस्त्रिकोणे शुक्रे वा ज्ञेऽर्थे मौञ्ज्याः श्शुभप्रदाः ॥

गार्ग्यः—

गुरौ लग्नगते केन्द्रेष्वपापेषु शुभप्रदः ।

खे सौम्यसमये (सोमतनये) जीवे मन्दारौ त्र्यायगौ शुभः ॥

गुरुः—

एवं सम्यग्विचार्यैव काले निर्दोषतां गते ।

कृतोपनीतिश्शिष्यस्स्याद्दीर्घायुर्यज्ञकृत् सुखी ॥

इत्याद्यूह्यम्—

### अथ विद्यारम्भः.

इत्युपनयनप्रकरणमभिधाय अथ—

कृतोपनयनो बाल आवसेद्गुरुसन्निधौ ।

स्वकर्मनिरतो नित्यं विद्याहरणतत्परः ॥

इति स्मृतेरनन्तराध्येतव्यानां वेदादिविद्यानामारम्भकालमाह—

**विद्योपक्रमणे द्वितीयजननप्रोक्तस्समानो विधिः क्षिप्राः श्रेष्ठतमाश्चराः समृदवः श्रेष्ठाः स्थिरा निन्दिताः । तारा न त्वितराश्शुभाः स्थिरगृहा वर्ज्याश्चिरा मध्यमा द्व्यात्मानः शुभदास्तु सूर्यशशिनोर्वर्गाह्नी मध्यमे ॥ २० ॥**

एवं द्वितीयजनने उपनयनप्रकरणे प्रोक्तो विधिस्तद्दृष्टियोगांशकानध्यायकालादिर्विद्यानां वेदादीनामुपक्रमणे—प्रारम्भे समानः ।

उपनीतौ ये प्रशस्ता विद्यारम्भेऽपि ते प्रशस्तास्स्युः, ये तत्र वर्ज्यास्तेऽत्रापि वर्ज्या इत्यर्थः। तथा चोक्तं सर्वसिन्धौ—

उपनीताविह प्रोक्ता विद्यारम्भे ग्रहस्थितिः।

इति। अत्र ग्रहस्थितिग्रहणमुपलक्षणमष्टमशुद्धिदृष्टिफलयोगादीनां। नन्विहोपनयनात्परं विद्यानामारम्भः स्मर्यते; लोके प्रागपि दृश्यत इति, अत्रोच्यते—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥

इत्युक्ता महाविद्यास्तु उपनयनात्परस्तात् प्रारम्भे रूढाः। तदन्या अर्वागपीत्यदोषः। तथा हि—उपनीतस्य द्विजत्वम् द्विजानामेव साङ्गवेदाध्ययनं स्मर्यते। तस्मादुपनीत एव महाविद्याः प्रारभेत तदन्यास्त्वनुपनीतोऽपि। तथा च गुरुः—

द्वितीयजन्मनः पूर्वमक्षरान् प्रारभेत् सुधीः।
शूद्राश्च सर्वे स्वां विद्यां प्रारभेदुत्तरायणे॥

इति। यद्यप्युत्तरायण एव विद्यारम्भ उक्तः; तथाऽपि नित्यारम्भो निषिध्यते। अत्र विशेषतो वेदाधिपबलं ग्राह्यम्। तथा च अत्रिः—

शाखाधीशे शक्तियुक्ते तच्छाखाध्ययनं मतम्॥

इति। योगवशादन्यत्रापि क्रियते। तथा च गुरुः—

कन्यार्के यदि संयुक्ते यदि सारस्वते तदा।
प्रारभेत् सर्वविद्याश्च विद्याश्चैव चतुर्दश॥
तदभावे शुभे मासे वेदान् विद्याश्च वैदिकाः।
आरभेदुदगास्येऽर्के ततो मासत्रयं शुभम्॥

इति। योगाभावे महाविद्यानां 'शाखाधीशे शक्तियुक्ते' इति स्मरणात् तदस्तमयो वर्ज्य इत्युक्तं भवति। तारास्तु क्षिप्राः—हस्तपुष्याश्विन्य-स्त्रयः श्रेष्ठतमाः। समृद्ग्वश्रराश्चित्रान्त्यमैत्रेन्दुयुक्ता वसुवारुणश्रवण-स्वातीपुनर्वस्व इति नव श्रेष्ठाः। स्थिराः—उत्तरात्रयरोहिण्यः चतस्रो मध्यमाः। इतरा—उग्रतीक्ष्णमिश्रास्त्याज्याख्या एकादश न शुभाः। तथा चोक्तम्—

मृदुक्षिप्रचरास्तारा विद्यारम्भे सुपूजिताः।
स्थिरा मध्या विलम्बेऽपि श्रुतिधारणहेतवः॥
तीक्ष्णोग्रमिश्रतारास्तु विद्याविघ्नप्रदायकाः।

इति। गुरुणा त्वार्द्राऽपि शस्ता रेवती मध्यमेत्युक्तम्। यथा—

ताराश्चतस्रः सौम्याद्याः शस्तास्तिस्रश्च वैष्णवात्।
मैत्राश्विनी च संपूज्या विद्यारम्भे फलप्रदाः॥
त्रीण्युत्तराणि पौष्णश्च रेवती चेति मध्यमाः।
शिष्टानि भानि वर्ज्यानि विद्यारम्भे शुभेप्सुभिः॥

इति। केचित् ज्येष्ठाश्लेषे श्रेष्ठे जगुः। तथा च गार्ग्यः—

वर्ज्याः पूर्वात्रयं याम्यमूलाग्नेयैन्द्राग्नपैतृकाः।

इत्यष्टानां वर्ज्यत्वमुक्तवान्। एतच्चाचार्येण 'तारा न त्वितराश्शुभा' इत्यत्र तुशब्देन सूचितम्। राशयस्तु द्व्यात्मानो—द्विस्वभावाः शुभाः, चरा मध्यमाः, स्थिरा राशयस्त्याज्याः। तथा च गुरुः—

चरस्थिरो[1]भयक्षेत्रा मध्यमाधमपूजिताः।
विद्यारम्भे शुभैर्दृष्टाः सर्वे पूज्यतमा ग्रहाः॥

इति। सूर्येन्द्वोः वर्गाहनी—अंशकादिवर्गौ दिनं च मध्यमे। बुधगुरु-शुक्राणां वर्गदिनानि श्रेष्ठानि। कुजमन्दयोर्वर्गदिने त्याज्य इति शेषः।

1 चरस्थिरद्विस्वभावाः

दिवसांशोदया वर्ज्या यत्नेन कुजसौरयोः ।
श्रेष्ठाः सितज्ञजीवानां मध्यमं सूर्यसोमयोः ॥

इति । गार्ग्यस्तु विद्याऽर्कदिने प्रशस्तेत्याह । श्रीपतिस्तु ग्रहाणां वर्गादिषु फलमाह—

विद्यारम्भस्सुरगुरुसितज्ञेष्वभीष्टार्थदायी
[1] कर्तुश्चायुर्वितरति चिरं स्वांशुमान् मध्यमोऽत्र ।
नीहारांशौ भवति जडता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्तयन्त्येवमाद्याः ॥

इति । द्व्यात्मानश्शुभदा इत्यत्र सामान्येनोक्ते विशेषमाह—

**न मीनराशिं शुभमाह गार्ग्यो वसिष्ठजीवौ प्रशशंसतुस्तम् । अतस्स मध्योऽवसितश्शुभश्च शुक्रान्वितो जीवयुतेक्षितो वा ॥ २१ ॥**

गार्ग्यो विद्यारम्भे मीनराशिं न शुभमाह—'विद्या मीने न शुभेति' । वसिष्ठजीवौ तं—मीनराशिं विद्यारम्भे प्रशशंसतुः—प्रशस्तमूचतुः 'पूजिताश्चोभयास्सर्वे' इति । अतः शुभाशुभत्वेन मुनिभिरभिधानात् स मीनराशिर्मध्यो—मध्यमफल इति मया अवसितो निश्चितः । स मध्योऽपि शुक्रान्वितो जीवयुतेक्षितो वा शुभश्च भवति । अयमभिप्रायः—राशीनां स्वाभाविकसौम्यस्यास्थेयतया ग्रहयोगे तद्भावसङ्क्रमात् पापा मध्यमास्स्युः । मध्यमाः शुभाः फलन्तीति ।

सौम्यग्रहैर्दृष्टयुतास्सर्वे पूज्यतमा गृहाः ॥

इति वचनात् ।

[1] कर्तुश्चायुश्चिरमपि करोत्यंशुमान्.

विद्यारम्भे द्वितीयजन्मवत् कालविधिरित्यतिदेशात् छिद्रानध्यायवर्जितास्तिथयो ग्राह्या इत्यविशेषेण छिद्रतिथीनां शुभत्वप्रसङ्गे विशेषमाह—

**करोति विघ्नं किल तत्र सप्तमी त्रयोदशी चेति वदन्ति सूरयः। मतौ न पापश्शुभदो विशेषतो बुधस्य वर्गोदयवासराश्शुभाः ॥२,२॥**

सप्तमी त्रयोदशी च तत्र विद्यारम्भे विघ्नं विद्याभङ्गं करोतीति सूरयो वदन्ति। तथा च गुरुः—

प्रथमा च द्वितीया च तृतीया पञ्चमी तथा।
षष्ठी च दशमी चैव सैकादश्यपि पूजिता ॥
विघ्नदे वर्जितव्ये द्वे सप्तमी च त्रयोदशी।
रिक्तानध्यायसंज्ञा ये विशेषात्तेऽपि वर्जिताः ॥

इति। किलेत्यनियमात् सप्तमीत्रयोदश्यौ चन्द्रे शुभे शुभे स्तः। तथा च गुरुः—

त्रयोदशी सप्तमी च कदाचित् शुभदे तिथी।
यथा चन्द्रो शुभांशस्थो बुधजीवसितेक्षितः ॥

इति। नन्वत्र कथमनध्यायतिथिः प्रतिपद्विद्यारम्भे शुभेति। एवं मन्यते—शुक्लप्रतिपदेवानध्यायः कृष्णप्रतिपत्तु प्रशस्तेति। तथा चोक्तम्—

कृष्णेऽपि प्रथमा पूज्या कदाचित् शुभगे विधौ।

इति। अनध्यायास्तु—

अनध्यायश्चतुर्दश्योरष्टम्याद्यासु पर्वणोः।
त्रयोदशीनिशावक्रे तत्संयोगाद्धरेस्तिथिः ॥

तिस्रोऽष्टका युगाद्यासु(स्तु) मन्वादौ कुञ्जराह्वये।
विद्युत्यपर्तुवर्षादौ वर्ज्योऽध्यायो यथोदितः ॥

इत्यादयोऽत्रत्यादिभिरुक्ताः प्राक् प्रपञ्चिताः। इह ग्रहस्थितिरुपनयनवदुक्ता। विशेषस्तु मतौ—पञ्चमे पापो न शुभदः। शुभास्तु शुभदाः। एत एवाष्टमे सर्वेऽपि न शुभदाः। अत्र गुरुः—

त्रिषडायगताः पापाः त्रिकोणे कण्टके शुभाः।
विद्यारम्भेषु पूज्यास्स्युः पञ्चमे पापवर्जिते।
पञ्चमस्थाः शुभास्सर्वे सुपूज्या नीचवर्जिताः।
विशेषादुदितस्सौम्यः पापसंयोगवर्जितः ॥
नैकोऽपि चाष्टमे पूज्यः शुभः क्रूरोऽपि वा पुनः।

इति। वसिष्ठः—

भ्रातृषष्ठायकर्मस्थाः पापास्सर्वे शुभावहाः।
सर्वत्र शुभकृज्जीवो मुक्त्वैव निधनं तथा ॥
[1]स्त्रीमृत्युवर्ज्यौ(?) मुक्त्वेन्दुर्निधनं तथा।
अनुक्तस्थानगाः पापा विघ्नं कुर्वन्ति निश्चयम् ॥

इति। शुभानां वर्गादयः शुभदा इति सामान्येनोक्तम्। विशेषस्तु बुधस्य वर्गादयो विशेषतः शुभदा इति। अत्र गुरुः—

प्रोक्तेषु भेषु सर्वेषु शुभवारे शुभांशके।
शुभग्रहदृशा युक्ते शुभयुक्ते शुभे ग्रहे ॥
विशेषात् बुधवर्गेषु बुधदृष्टे बुधोदये।
बुधवारे च होरायां शंसन्ति ज्ञेऽप्यनस्तगे ॥

इति। एवमविशेषेणाभिधाय साम्प्रतं प्रतिविद्यं पृथक् भान्याह षड्भिरार्याभिः—

[1] त्रिमृत्यु.

हयविद्यायामश्विन्यजभं वेदे च शकुनविज्ञाने। संगीते च विशेषात् गजविद्यायां च शस्यते सौम्यम्। गान्धर्वेऽदितिपवने सामुद्रिकनीतिनाट्यवाद्येषु॥ वसुरेवतीन्दुकमलजमित्रादितयस्त्वशेषशास्त्रेषु॥ शस्त्राभ्यासमहानसनृयुद्धकौटल्यकूपशास्त्रेषु। रौद्रोत्तराजविष्णुस्वात्यश्वित्रा च चित्रशास्त्रेषु॥ अतिपूजिता धनिष्ठा साऽऽयुर्वेदे धनुर्वेदे। गजतुरगवैद्यशास्त्रे मित्रभमारोहणे तयोर्ध्रुवभम्। मूलान्त्यमातृवरुणाः पवना वेदाङ्गशास्त्रविद्यासु। वरुणस्तु योगशास्त्रे वसुमित्रमहेशपूषणो गणिते॥ वरुणोत्तराप्रजापतिपवनादितिविष्णवोऽर्थशास्त्रेषु॥ विषशास्त्रेऽमृतयोगाः श्रवणं मायासु चौर्यशास्त्रेषु॥ सर्वास्वपि विद्यासु क्षिप्रास्तारा विशेषतश्शस्ताः। कालविळम्बकृतोऽपि श्रुतधारणहेतवः स्थिरा ज्ञेयाः॥ २१॥

हयानामश्वानां शिक्षादिकर्म हयविद्या, तत्राश्विनी शस्ता। वेदे ब्रह्मविद्यायामजभं–रोहिणी शस्ता। चकारात् धनिष्ठा आश्लेषा च। शकुनज्ञाने—पक्षिरुतादिनिमित्तज्ञाने च रोहिणी शस्ता। समुच्चयार्थस्य चकारस्यात्राप्यनुवृत्तेः। अनुक्ते वारुणाश्लेषे च।

संगीते–भरतशास्त्रे च सौम्यं शस्यते । चकारात् पुष्योऽपि । गज-विद्यायां—गजशिक्षादिकर्मणि विशेषात् सौम्यं शस्यते । तिष्या-र्द्रोत्तराण्यपि शस्यन्त इति शेषः । गान्धर्वे–सङ्गीताङ्गभूते गेयज्ञाने पुनर्वसुस्वात्यौ च श्रेष्ठे स्तः हस्तश्च शस्तः । सामुद्रिकं–स्त्री-पुंसादिलक्षणशास्त्रं । नीतिः—नीतिशास्त्रं । नाट्यं—सङ्गीताङ्गभूतं ताण्डवशास्त्रं । वाद्यं–वंशवीणाकांस्यमुरजादिकं सङ्गीताङ्गभूतं शास्त्रं। एतेषु पुनर्वसुस्वात्यौ शस्ते । सामुद्रिकनाट्यवाद्येषु पुष्यपौष्णश्रवण-सौम्यार्द्राः स्थिरर्क्षाणि शुभानि । अशेषशास्त्रेषु–सर्वविद्यासु वस्वा-दिनिषिद्धानि शुभानि । शस्त्राभ्यासः—खड्गादि । महानसं—सूपा-दिपाकस्थानं, नृयुद्धं—मल्लयुद्धं, कौटल्यं—षट्कर्माणि । कूपं—जलार्गळादि । तत्संबन्धिषु शास्त्रेषु आर्द्रात्र्युत्तरारोहिणीश्रवण-स्वात्यश्श्रेष्ठाः । पुष्यपौष्णसौम्यानि च पूज्यानीति शेषः । मित्रहस्तौ प्रशस्तावित्यन्ये । चित्रं—लेख्यं तच्छास्त्रेषु चित्रा शस्यते । मैत्र-स्वातिपुनर्वस्वश्चकारेण प्रशस्यन्ते । आयुर्वेदः—वैद्यशास्त्रं । धनु-र्वेदो—धनुर्विद्या तयोर्धनिष्ठा पूजिता । बाहटादिनरवैद्यशास्त्रे हस्त-मैत्रस्वात्यश्विनीसौम्यानि श्रेष्ठानि । गजाश्वयोः वैद्यशास्त्रे मित्रभं शस्तं—पालकाप्यादिशालिहोत्रादिगजाश्ववैद्यशास्त्रे च अनूराधा सा-धीयसी । तयोर्गजाश्वयोरारोहणादिशिक्षादिज्ञाने ध्रुवभं रोहिण्यु-त्तरात्रयमुत्तमं । पुष्यपौष्णश्रवणार्द्रासौम्यस्वातीमैत्रहस्ताश्च शस्तास्स्युः । वेदाङ्गशास्त्रेषु शिक्षाव्याकरणछन्दःकल्पज्योतिर्निरुक्ताख्येषु मूल-रेवतीपुनर्वसुवारुणस्वात्यः श्रेष्ठाः । हस्तसौम्यतिष्याश्विन्यः श्रेष्ठाः । व्याकरणशास्त्रे रोहिणीमैत्रश्रवणभानि च शुभानि । ज्योतिश्शास्त्रे रोहिणी, योगशास्त्रे शतभिषक् शस्यते । गणिते—गुणहारादि गणनाभ्यासे धनिष्ठानूराधाऽऽर्द्रारेवत्यश्शस्ताः पुष्यहस्तौ च । अर्थ-

शास्त्रेष्वर्थप्रतिपादकेषु कामन्दकादिशास्त्रेषु वारुणोत्तरात्रयरोहिणीस्वातीपुनर्वसुश्रवणानि श्रेष्ठानि । तिष्यहस्ताश्विनानि च । विषशास्त्रे—गारुडादावमृतयोगा वारनक्षत्रजाद्या ग्राह्याः । मायासु—ऐन्द्रजालिकाविद्यासु चौर्यशास्त्रेषु च श्रवणं श्रेष्ठम् । अत्र गुरुवसिष्ठौ—

अश्विनी चाश्वविद्यासु गजविद्यासु सौम्यभम् ।
त्वाष्ट्रं मान्त्रिकविद्यासु स्वातीमैत्रपुनर्वसू ॥
सार्पं शकुनविज्ञाने वेदे रोहिण्यही शुभे ।
ज्योतिश्शास्त्रे निमित्ते च रोहिणी वारुणे शुभे ॥
मैत्रं वैद्ये प्रशस्तं स्यात् सङ्गीते सौम्यपुष्यभे ।
गान्धर्वे नीतिशास्त्रे च प्रशस्ते पवनादिती ॥
सामुद्रिके च नाट्ये च वाद्ये शस्ता पुनर्वसुः ।
भेरीताळादिशास्त्रेषु नाट्ये सामुद्रिकाह्वये ॥
मल्ले महानसे खड्गे कूपे तुरगवारणे ।
शस्त्राभ्यासाधिरोहे च रौद्रतिष्योत्तरात्रयम् ॥
पौष्णश्रवणरोहिण्यः [1]सौम्यं वायुश्च शोभनाः ।
गान्धर्वयुक्तवेदे च गजशास्त्रे च शान्तिके ॥
कौटल्ये क्षुरिकाभ्यासे हस्तमेवाभिपूजितम् ।
सर्वशास्त्रपरिज्ञाने वेदारम्भे तथैव च ॥
आयुर्वेदे धनुर्वेदे धनिष्ठा पूजिता सदा ।
शस्त्रे महानसे मल्ले कूटशास्त्रे विशेषतः ॥
कुक्कुटे चानुराधा स्यात् आयुर्वेदे गजाश्वयोः ।
तयोरारोहणे चैव ध्रुवस्थानि शुभानि च ॥

[1] सौम्यवायू.

हस्तस्वात्यश्विनीसौम्याः आयुर्वेदे सुपूजिताः ।
ज्योतिषाद्यङ्गशास्त्राणां स्वातिहस्तपुनर्वसु ॥
पौष्णातिष्याश्विनीमूलवरुणास्स्युः प्रपूजिताः ।
षडङ्गे मृगशीर्षं स्यात् शब्दशास्त्रेषु वैष्णवम् ॥
वासवं रेवतीसौम्यरोहिणी पुष्यमैत्रभे ।
पुनर्वसू च हस्तश्च शब्दशास्त्रेषु पूजिताः ॥

ज्योतिषार्णवे—

हस्तादीनि मरुन्मित्ररौद्रपौष्णाश्विपैत्रभम् ।
वारुणं सुप्रशस्तं स्यात् अक्षरग्रहणे शिशोः ॥
गणिते रेवतीमैत्रहस्तपुष्यार्द्रवासवाः ।
वारुणं योगशास्त्रेषु समयेष्विन्द्रुभं शुभम् ॥
आदित्यवैष्णवस्वातीतिष्यहस्ताश्विवारुणाः ।
ह्युत्तरा रोहिणी चैव ह्यर्थशास्त्रेषु पूजिताः ॥
विषशास्त्रेऽमृता योगा वारनक्षत्रयोजिताः ।
श्रवणं संप्रशंसन्ति मायाचौर्यादिकैतवे ॥

इति । अत्र केचिदाचारादिशासनात् शास्त्रमिति धर्मशास्त्रमुच्यते । ततश्च चौर्यं च शास्त्रं चेति द्वन्द्वं कृत्वा शास्त्रे—धर्मशास्त्रे श्रवणं ग्राह्यमित्याहुः । चकारस्यानुक्तसमुच्चयार्थत्वात् गुरूक्तानि भान्यपि शुभानि । यथा—

धर्मशास्त्रेषु विश्वाद्यत्रितयं पौष्णमेव च ।
अश्विनी रोहिणी सौम्यपुष्यहस्तादिपञ्चकम् ॥

इति । आगमशास्त्रेषु च गुरुणोक्तानि;—

शिवागमे शुभान्याहुः क्षिप्राण्युग्राणि भान्यपि ।

तथा विष्ण्वागमे शास्त्रे चरास्ता(रसा)धारणानि च ॥
मृदूनि सर्वविद्यासु सर्वज्ञानशुभान्यपि ।
ध्रुवाणि सर्वशास्त्रेषु सर्वसाधारणान्यपि ॥
ब्रह्मविद्यासु सर्वाणि नक्षत्राणि शुभान्यपि ।
योगास्सर्वे शुभा वज्रिन् ब्रह्मविद्यासु पूजिताः ॥

गार्ग्योऽपि ;—

मैत्रमैन्द्रं च सावित्रं वसुवैष्णववारुणम् ।
सौम्यं पुष्यादिती पौष्णं [1]वेदाध्यायेषु योजिताः ॥

इति । सर्वासूक्तास्वनुक्तासु च विद्यासु क्षिप्रास्तारा—हस्ताश्विनीपुष्या विशेषतः फलदाः—क्षिप्रसिद्धिकरा इत्यर्थः । स्थिरास्तारास्त्र्युत्तरा-रोहिण्यः सर्वविद्यासु कालविळम्बकृतः, तथाऽपि श्रुतधारणहेतवः । ततस्ताश्च प्रशस्ता इत्यर्थः ।

विद्यायाः अवश्यारम्भणीयत्वात् तदुक्तशस्तकालस्याचिरेण दुर्लभत्वात् सर्वकालेऽपि शुभदान् सारस्वतान् योगानाह—

**कन्यायामुदये रवेर्बुधदिने चन्द्रात्मजेऽत्युच्चगे हस्ते ज्ञांशगता रवीन्दुशशिजा लग्ने रवौ विद्दि-ने । वारे ज्ञस्य विलग्नगौ शशिबुधौ हस्ते बुधांश-स्थितौ केन्द्रे जीवसितौ बुधे च [2]युवतेर्वर्गोत्तमस्थे तनौ ॥ ३० ॥ लग्नेऽर्के परमोच्चगे बुधसितौ गो-मीनयोः सुस्थितौ ज्ञे लग्ने च बुधांशगौ रविगुरू वारे गुरोर्ज्ञस्य वा । शुक्रेऽत्युच्चगते तनौ स्वदिवसे**

[1] वेदाध्याये शुभं भवेत. [2] युवतौ.

**तद्वत् स्ववारे गुरौ विद्योपक्रमणे विशिष्टफलदा योगास्तु सारस्वताः ॥ ३१ ॥**

ते सारस्वताख्याः सार्थभिधाना योगा विद्यारम्भे विद्यालाभाख्य-विशिष्टफलप्रदास्स्युः । बुधदिने बुधेऽत्युच्चगते उदिते सति कन्यागतस्य रवेरुदये एको योगः । बुधदिने हस्तभे ज्ञांशगताः—तृतीयांशगताः रविचन्द्रबुधास्त्रयोऽपि यदि स्युः तेषु रवौ लग्ने द्वितीयो योगः । अत्र [1]बुधास्तगततिथिरनध्यायः तथाऽपि योग-वशात् श्रेयान् । बुधवारे हस्ततृतीयांशस्थौ शशिबुधौ द्वौ लग्नगतौ यदि स्तः तृतीयः । कन्यान्तनवांशस्थौ बुधे लग्नस्थे गुरुशुक्रौ केन्द्रे यदि स्यातां चतुर्थः । मेषदशमभागस्थे सूर्ये लग्ने स्थिते बुधसितौ द्वौ यथाक्रमं गोमीनयोः सुस्थितौ वर्गोत्तमे स्थितौ स्तः पञ्चमः । बुधवारे गुरुवारे वा बुधे लग्ने स्थिते यत्र क्वापि राशौ बुधांशगतौ रविगुरू द्वौ स्तः षष्ठः । शुक्रवारे परमो-च्चगते शुक्रे लग्नस्थिते सप्तमः । गुरुवारे गुरौ तद्वत् स्वपरमो-च्चगते लग्ने सत्यष्टमः । एवं शुभयोगानां शुभत्वमुक्त्वा तत्स्व-रूपानिरूपणं कृतं गुरुणा :—

> एषु सर्वेषु शास्त्रेषु शुभं स्यादितरेषु तु ।
> अपवादा न चेत्तत्र योगान् वक्ष्याम्यभीष्टदान् ॥

इति । वृद्धगार्ग्यः—

कन्यागते सूर्ये अत्युच्चस्थे बुधे बुधवारे सूर्योदये सारस्वतो योग इत्याचक्षते इति । गुरुः—

> हस्ते बुधांशगे याता यदि भान्विन्दुसोमजाः ।
> सौम्यवारे रवौ लग्ने योगः सारस्वतो भवेत् ॥

---

[1] बुधोऽस्तगतास्स्थिरानध्यायः.

हस्ते बुधांशकस्थौ चेत् बुधेन्दू लग्नगौ तदा ।
[1]बुधवारे मुहूर्ते मे योगः सारस्वताह्वयः ॥
वर्गोत्तमस्थे ज्ञे लग्ने जीवे वोदयराशिगे ।
गुरुशुक्रबुधाः केन्द्रे योगः सारस्वतो भवेत् ॥
स्वात्युच्चे लग्नगे भानौ ज्ञसितौ वृषमीनगौ ।
वर्गोत्तमगतौ यद्वा योगः सारस्वताह्वयः ॥
लग्ने बुधांशकस्थौ चेदिन्दुजीवबुधोदये ।
बुधवारे गुरोर्वाऽपि योगः सारस्वतो भवेत् ॥
सप्तविंशतिमे भागे ससिते लग्नगे तदा ।
मित्रस्य सितवारे हि विद्यायोगोऽयमुत्तमः ॥
कर्किणः पञ्चमे भागे गुरावुदयगे तदा ।
गुरोर्वारस्य होरांशे विद्यायोगोऽयमुत्तमः ॥

इति । अत्रानुक्ता अन्ये विद्यायोगाः केचित् सादृश्येन केचिदेक-देशाभिधानेनोह्याः । तत्र सादृश्येन यथा ;—गुरूक्ताः—

बुधोदये गुरोरंशे केन्द्रगावर्कभार्गवौ ।
त्रयोदश्यां यमे लग्ने योगः सारस्वतो भवेत् ॥

यमे—मिथुन इत्यर्थः ;

अनुक्ता ये ग्रहास्ते च स्वात्युच्चोदयगास्तदा ।
स्ववारे च स्वहोरायां ज्ञानयोगास्स्युरुत्कटाः ॥
वारनक्षत्रयोगा ये शुभास्तेषां तु वारपे ।
लग्नगे त्वस्य होरायां विद्यायोगः शुभाह्वयः ॥

वृद्धगार्ग्यः ;—

भृगुलग्नं समाश्रित्य चतुर्थे बुधसंयुते ।

[1] कन्यालग्ने सौम्यवारे तदा सारस्वतो भवेत्

जामित्रे गुरुसंयुक्ते स्वाध्यायं कारयेत् बुधः ॥
शुभलग्ने गुरुयुते जामित्रे बुधसंयुते ।
चतुर्थे भृगुसंयुक्ते कुर्यादध्ययनं बुधः ॥
कन्यालग्ने बुधस्तिष्ठेत् गुरुस्सप्तमभे तथा ।
भृगुर्दशममाश्रित्य चतुर्वेदी षडङ्गवित् ॥
शुक्रोदये तथा राशौ चतुर्थे बुधसंयुते ।
गुरौ सप्तमसंस्थे च द्विवेदी च षडङ्गवित् ॥
कर्कटे च गुरुस्तिष्ठेत् वृषभे रविसंयुते ।
तथा मेषे भृगुस्सौम्यः स सर्वज्ञत्वमाप्नुयात् ॥
नीचास्तारिगताः पापाः सौम्याः स्वोच्चसुहृद्गताः ।
अनस्तगास्तथा धीमान् कुर्यात् स्वाध्यायमुत्तमम् ।

नारायणः;—

कर्किजीवोदये शुक्रे वृषे ज्ञे मिथुनस्थिते ।
इन्दौ कन्यागते च स्यात् चतुर्वेदी षडङ्गवित् ॥
विद्यारम्भेऽन्त्यकेन्द्रस्थ सुतधर्मगता श्शुभाः ।
[1]आयारिभ्रातृगाः क्रूरा रिक्तमष्टममिष्यते ॥
अस्पष्टदृष्टे शशभृल्लग्ने पापैश्शुभैरपि ।
स्पष्टदृष्टं च तच्छ्रेष्ठमिति सङ्क्षेपदर्शनम् ॥

ज्योतिषार्णवे;—

बलान्विता ग्रहास्सर्वे स्वात्युच्चोदयगास्तथा ।
स्ववारे च स्वहोरायां ज्ञानयोग उदाहृतः ॥

---

[1] आयारिभ्रातृगाःक्रूरा विद्यालाभकरास्सदा ।
.................. ....रिक्तमष्टममिष्यते ॥

वारनक्षत्रयोगा ये शुभास्तेष्वपि कारयेत् ।
वारपे लग्नगे तस्य होरायां ज्ञानसंग्रहम् ॥

इति । गुरुः—

आर्द्रायामुद्गते चन्द्रे विद्यारम्भः प्रचोदितः ।
योगोऽयमर्कवद्बुद्धिं प्रबोधयति पङ्कजम् ॥

इति । एवं विद्यारम्भकालमभिधायाथ वेदविद्यामधीयानेन आचरणीये व्रतबन्धादौ कालमाह—

**स्वगृह्योक्तश्शुभः कालो व्रतबन्धादिषु स्मृतः ।**
**समावर्तनगोदानस्नानादिषु तु चौळवत् ॥ ३२ ॥**

हौत्रशुक्रियादिवेदव्रतानां बन्धे मोक्षे च बोधायनाश्वलायनाद्याचार्यादिमुनिप्रोक्तः स्वस्वगृह्यग्रन्थोक्तः श्रावणीपूर्णिमाश्रवणनक्षत्रादिः कालश्शुभः । तत्रैव तस्य साधुत्वं अन्यपर्युदासात् । तथा चोक्तमभियुक्तैः—

प्रयोगशास्त्रविहितः कालो यत्र न कश्चन ।
विधत्ते ज्योतिषं तत्र विहिते त्वविरोधतः ॥

इति । गृह्योक्तं यथा;—स्मृत्यर्थसारे—

उपनयनव्रतानन्तरं सावित्रव्रतं उपाकर्म ततो वेदव्रतं तत आरण्यकव्रतम् अध्वर्यूपाकरणमोषधीनां जनने सति श्रावण्यां पौर्णमास्यां वा श्रावणमासस्य पञ्चाद्दश्यां वा श्रवणनक्षत्रे वा हस्तनक्षत्रे वा पञ्चमीहस्तयोगे वा कार्यम् । भाद्रपदमासस्य पौर्णमास्यां श्रवणे हस्ते वा आषाढ्यां पौर्णमास्यां वा यथास्वाचारं कार्यम्[1] ॥

---

[1] श्रवणर्क्षे आदौ घटिकाचतुष्कमभिजिन्नक्षत्रांशं गुरुशुक्रास्तं ग्रहं संक्रान्तिं च वर्जयित्वा कार्यं । तिथिखण्डे सत्युदयव्यापिनी प्रयोगपर्याप्ततिथिर्ग्राह्या । नक्षत्रखण्डे

इति । गुरुगृहान्निवृत्तस्य समावर्तनगोदानादिकर्मसु कालः चौळवत्— चौळसदृश इत्यर्थः ॥ तथा च गुरुः ;—

वेदविद्याफले प्राप्ते चतुर्वर्गफलायतिः ।
तस्मात् व्रतानामारम्भे सम्यक्कालं विचारयेत् ॥
व्रतमोक्षे च गोदाने स्नाने चैव विशेषतः ।

इत्युपक्रम्य—

सर्वस्य कालस्संप्रोक्तः चूडाकर्मवदग्रजे ।

इति । तुशब्देनायं विशेष उक्तः—यद्यपि स्नानादिषु चौळवत् कालः; तथाऽपि आसन्नस्य विवाहस्य दक्षिणायनेऽपि तानि कार्याणीति ।

दक्षिणायनमासेऽपि कृष्णपक्षेऽपि वा भवेत् ।
आसन्ने तु विवाहेऽथ स्नानकर्म समारभेत् ॥

इति वचनात् । अत्र आदिशब्देन शूद्राणां शस्त्रधारणमुच्यते । तेषां तस्यैव स्नानत्वात् । तथा च गुरुः—

शूद्राणां स्नानभावेन शस्त्रधारणमुच्यते ।

इति । अन्यैः समावर्तनस्य पृथक् काल उक्तः—

मित्रोत्तरादितिष्यान्त्यहरीन्दुरविधातृषु ।
मेष्वर्केन्दुज्ञार्यशुक्रवारलग्नांशकेषु च ॥
अथवा शस्तनक्षत्रवारलग्नांशकेष्वपि ।
प्रतिपत्पर्वरिक्ताख्यामष्टमीं च तिथिक्षयम् ॥

---

धनिष्ठासंयुतं प्रयोगचर्यापर्याप्तं ग्राह्यं, नोत्तराषाढसंयुतं इति । एवं व्रतचर्यापूर्वकं विद्यामधिगम्य स्नायीत । तथा च स्मृतिः—गुरुशुश्रूषया विद्यां संप्राप्य विधिवद्द्विजः ।
स्नायीत तदनुज्ञातो दत्वाऽस्मै दक्षिणां तु गाम् । इति ।

हित्वाऽन्यदिवसे कार्यं समावर्तनमण्डनम् ।

इति । अत्र जन्मत्रयं [1]सप्तविंशतिभं त्याज्यम् । क्षत्रियाणां शस्त्रधारणे नारदेन विशेष उक्तः ;—

क्षुरिकाबन्धनं वक्ष्ये नृपाणां प्राक्करग्रहात्
विवाहोक्तेषु मासेषु शुक्लपक्षे त्वनस्तगे ।
जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते
मौञ्जीबन्धर्क्षतिथिषु कुजवर्जितवासरे ॥
तेषां लग्नांशके कर्तुरष्टमोदयवर्जिते
शुद्धेऽष्टमे विधौ लग्नषष्ठाष्टान्त्यविवर्जिते ।
धनत्रिकोणगैः स्सौम्यैः पापैर्भवरिपुत्रिगैः
क्षुरिकाबन्धनं कार्यं अर्चयित्वाऽमरान् पितॄन् ॥
अर्चयेत् क्षुरिकां सम्यक् देवतानां च सन्निधौ
नपस्सुलग्ने बध्नीयात् कन्यां लक्षणसंयुताम् ।

इति । एतत् तुशब्देन सूचितम् । अध्यायमुपसंहरति ;—

**श्लोकैर्द्वाभ्यां संयुतैस्त्रिंशतोक्तो विद्यारम्भं सोपनीतिं प्रशंसन् । अध्यायोऽयं पार्वतीरुक्मिणीयभ्रातर्यस्मिन् सप्तमः पूर्ण आसीत् ॥ ३२ ॥**

इति विद्यामाधवीये विद्योपनयनाध्यायस्सप्तमः.

[1] सप्तविंशं षोडशं द्वाविंशमेकोनविंशं च भं.

पार्वतीरुक्मिणीयं नाम पार्वतीरुक्मिणीपरिणयकथाद्वयश्लेषपरिष्कृतं काव्यं कृत्वाऽथो विरचितमिदमाचार्येण मुहूर्तदर्शनं। तस्मादेतस्य पार्वतीरुक्मिणीयकाव्यभ्रातृत्वमागतम् । तथा हि—लोके यो यस्य पश्चाद्भवति स तस्य भ्रातेति समानपितृकेषु प्रसिद्धम् । अनेन कविमहाराज इत्यादेः वक्ष्यमाणस्याचार्यप्रशंसनस्य भूतार्थत्वमुक्तम् । उपनयनं विद्यारम्भं च वदन् द्वात्रिंशता पद्यैः कृतोऽयं सप्तमोऽध्यायः—समाप्तोऽभूत् ।

इत्थं विद्यामाधवीये मुहूर्ता-
दर्शे विद्यामाधवार्यस्य सूनुः ।
व्याख्यन्मौञ्जीबन्धनाशेषविद्या-
प्रारम्भान्तं सप्तमाध्यायमेनम् ॥

इति मुहूर्तदीपिकायां विद्यामाधवीयव्याख्यायां
विद्योपनयनाध्यायस्सप्तमः.

# अथ अष्टमो विवाहाध्यायः

गुरुणाऽनुमतस्स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत पुमान् भार्यां सवर्णां लक्षणान्विताम् ॥

इत्यानन्तर्यप्राप्तस्य परिणयनकर्मणः कालमभिधित्सुः प्रश्नलग्नबलेन तयोर्योगादिजभाविशुभाशुभान्यादाववगन्तव्यानीत्याह—

**प्रश्नलग्नबल(वश)तः करग्रहे भावि शंसतु शुभाशुभं सुधीः । स्याद्विवाहवदिह ग्रहस्थितिः सप्तमेऽपि शुभदाऽशुभग्रहाः ॥ १ ॥**

सुधीर्दैवज्ञो वधूवरबान्धवादिविहितविवाहप्रश्नलग्नबलेन तयोर्विवाहनिमित्तं भावि शुभाशुभं वदतु । अत्र विवाहप्रश्ने वक्ष्यमाणविवाहवद्ग्रहस्थितिश्चिन्त्या । यथा—विवाहे यत्र स्थाने यो ग्रहश्शुभः प्रश्नेऽपि स ग्रहः तत्र स्थाने शुभः । तथा शुभग्रहास्सप्तमे शुभप्रदाः प्रश्ने भवन्तीति । तथा च सप्तर्षिमते—

पृच्छासमयनिमित्तान्यवलोक्य च शास्त्रमार्गमनुसरता ।
प्राक् सुकृतदुष्कृतभवं फलमिह वाच्यं प्रयत्नेन ॥

इति । गुरुश्च—

विवाहादेव लोकस्य सृष्टिर्यज्ञादिकर्म च ।
चतुर्वर्गफलप्राप्तिस्तस्मात्तत्काल उच्यते ॥

इत्युपक्रम्याह ;—

विवाहकथिते काले सुखासीनं शुभं प्रियम् ।
दैवज्ञं भक्तितो गत्वा संपूज्यादौ यथाबलम् ॥

उडुनी नामनी प्रोक्ता संपृच्छेत्सकृदेव तम् ।
ज्ञानी चास्याक्षरान् ज्ञात्वा लग्नं तत्कालसंभवम् ॥
छ(य)त्रारूढे तदादृष्टनिमित्तं च श्रुतान्यपि ।
वर्तमानं समालोच्य बलेन प्रवदेद्बुधः ॥
स्त्रीजन्मकाले यत्प्रोक्तं सर्वं लग्नाद्विचार्य च ।
शुभाशुभं वदेत् प्राज्ञो दम्पत्योर्दैवचिन्तकः ॥

इति। अत्र सप्तर्षिमते—जन्मसमये यदुक्तं शुभाशुभं दिव्यदृग्भिराचार्यैः
पृच्छापरिणयनाभ्यां तदेव भवतीति विज्ञेयम् ।

इति । तद्यथा (अथवा) ; —

वैधव्यं निधने चिन्त्यं सौन्दर्यं प्रश्नलग्नतः ।
सप्तमे पतिसौभाग्यं पञ्चमे प्रसवस्तथा ॥
एषु स्थानेषु गतास्सौम्याश्शुभदा बलान्विता ज्ञेयाः ।
क्रूरास्तु नेष्टफलदा भवेनशविवर्जिताश्चिन्त्याः ॥
प्रश्नेन्दुलग्ने युग्मर्क्षे शुभदृष्टे यदा तदा ।
सच्छीलभूषणा कन्या प्रकृतिस्था च सा भवेत् ॥
ओजर्क्षे चन्द्रलग्ने च (चेत्) पापदृष्टियुते तदा ।
पुंवच्छीलाकृतिस्था सा पापा पापगुणान्विता ॥
चन्द्रलग्ने शुभांशस्थे जीवितं पृच्छतां वदेत् ।
पापांशकयुतौ तौ चेत् जीवनं नश्यति द्वयोः ॥
लग्ने पापग्रहैर्युक्ते नीचशत्रुग्रहस्थितैः ।
अष्टमे सप्तमे वाऽपि दम्पत्योर्न शुभावहः ॥
लग्नाष्टमर्क्षे पापश्चेद्रिपुनीचरवी (समी) क्षितः ।
विधवा सा भवेत्कन्या लग्ने पापयुते यदि ॥
मन्दारर्क्षे विलग्नस्थौ शशिशुक्रौ यदा तदा ।

वन्ध्या भवति सा नारी पञ्चमे पापदृग्युते ॥
यदि प्रच्छकलग्नस्थौ बुधजीवौ दीर्घजीविनौ कुरुतः ।
यदि पञ्चमसंस्थौ तौ पुत्रवतीं धर्मशीलां च ॥
सप्तमगौ पृथुविभवौ क्रूरविमुक्तौ दशाम्बुगौ वृद्धाम् ।
षष्ठाष्टमगौ कन्यां क्रूरयुतौ दुर्भगां कुरुतः ॥
उदयात्सप्तममंस्थो भृगुतनयो वा शशाङ्कपुत्रो वा ।
वैधव्यं क्षितितनये सूर्येऽपि च कन्यका म्रियते ॥
सप्तमगोऽर्कः कन्यां मृतप्रजां पुंश्चलीं करोत्युदये ।
शुभलग्ने तु सुभगा सुखचित्ता सुखान्विता ॥
स्वोच्चर्क्षसंस्थिता लग्ने पापा अपि शुभप्रदाः ।
पञ्चमर्क्षे यदा पापशत्रुदृष्टस्स्वनीचग. ॥
कुलटा सा भवेत्कन्या मृतपुत्राऽथ वा भवेत् ।
अस्तगेऽर्के भवे दृष्टे भर्त्रोत्सृष्टा भवेद्वधूः ॥
सप्तमस्थे कुजे तस्मिन् बाल्ये वैधव्यमाप्नुयात् ।
मन्दे सप्तमराशिस्थे पापशत्रुनिरीक्षिते ॥
कन्यैव विधवा भूत्वा जारान् समुपगच्छति ।
अस्तगावारमन्दौ चेत् सप्तमे विधवा भवेत् ॥
मासि षष्ठेऽथवा राहुर्भानुर्वा तत्रगो यदि ।
बलहीनेऽस्तगे पापे सौम्यग्रहदृशा युते ॥
भर्त्रा वि(सृ)युज्यते सा च नीचारिस्थे च वैशिकी ।
द्यूने शुभाशुभैर्युक्ते पुनर्भूस्सा भवेद्वधूः ॥
अन्योन्यांशे सितारौ चेज्जारसक्ता भवेद्वधूः ।
तदेव सप्तमे चन्द्रे [1] दुश्चरा भ्रात्रनुज्ञया ॥

---

दुश्चरेद्भ्रात्रनुज्ञया.

वराहमिहिरः—

पृच्छकस्य भवेल्लग्नादिन्दुः षष्ठेऽष्टमेऽपि वा ।
दम्पत्योर्मरणं [1]वाच्यमष्टमाब्दान्तरे तदा ॥
उदयास्तगते चन्द्रे वैधव्यं पापवीक्षिते ।
लग्ने चन्द्रेऽस्तगे भौमे जीवेन्मासाष्टकं पुमान् ॥
सौरारर्क्षे लग्नगे सेन्दुशुक्रे मात्रा सार्धं बन्धकी पापदृष्टे ।
कौजेऽस्तांशे सौरिणा व्याधियोनिः चारुश्रोणी वल्लभा सद्ग्रहांशे॥
अस्तराश्यंशगे भौमे भौमांशे चास्तगे तदा ।
चन्द्रे वाऽस्तांशगे नारी व्याधियोनिश्च दुर्भगा ॥

गुरुः—

पापयुक्तो यदा चन्द्रः षष्ठे वाऽप्यष्टमे स्थितः ।
विवाहसमयान्मृत्युं दद्यादब्दाष्टमे तयोः ॥
पापौ लग्नास्तयोर्यातौ सप्ताब्दैर्म्रियते पुमान् ।
प्रश्नलग्ने यदा चन्द्रस्तस्मात्षट्सप्तमे कुजः ॥
[2]वर्षाष्टके नरो याति यमालयमपुत्रकः ।
लग्नात्सप्तमभे (गे)शून्ये दुर्बले दुर्ग्रहेक्षिते ॥
सौम्यग्रहदृशा हीने भर्ता कापुरुषो भवेत् ।
सप्तमर्क्षे चरे तस्मिन् बुधमन्दयुते तदा ॥
पतिः क्लीबो भवे(द्वृद्धः)त्तस्याः स च नित्यं प्रवासवान् ।

इति । वराहमिहिरः—

वृद्धो मूर्खस्सूर्यजर्क्षेंऽशकेशः
स्त्रीलोलस्स्यात्क्रोधनश्चावनेये ।

---

1 वाच्यमष्टमाब्दा यदा तदा ।
प्रश्नलग्ने यदा क्रूरस्तस्मात्सप्तमगश्शुभ. ।
विज्ञेयं भर्तृमरणं सप्तमाब्दान्तरे तदा ॥

2 वर्षेऽष्टमे । वर्षाष्टकात् ।

शौक्रे कान्तोऽतीव सौभाग्ययुक्तो
विद्वान् भर्ता नैपुणश्चापि बौधे ॥
मदनवशागतो मृदुश्च चान्द्रे
त्रिदशगुरौ गुणवान् जितेन्द्रियश्च ।
अतिमृदुरतिकर्मकृच्च सौम्ये
भवति गृहेऽस्तमये स्थितेंऽशके वा ॥
द्वक्संस्थावसितासितौ परस्परांशे
शौक्रे वा यदि घटराशिसंभवोंऽशः ।
स्त्रीभिः स्त्री मदनविषानलं प्रदीप्तं
संशान्ति नयति नराकृतिस्थिताभिः ॥
एवं भर्तृस्वरूपादिवयोगुणसुखादयः ।
सप्तमर्क्षाद्भवन्त्येवं लग्नात्कन्यागुणादयः ॥
पापाः पञ्चमराशौ चेत् वन्ध्या वा पुत्रनाशिनी ।
नीचारिराशौ ते पापाः पुत्रहन्त्री सदा भवेत् ॥
वृषसिंहाङ्गनाकोर्प्यां यदा चन्द्रो भवेत्तदा ।
अल्पात्मजा भवेत्कन्या वन्ध्या साऽरिगृहादिषु ॥
पुत्रस्थेषु शुभेष्वेषु बहुपुत्रवती भवेत् ।
स्वर्क्षतुङ्गत्रिकोणेषु सत्पुत्रा दीर्घजीविनः ॥
चन्द्रस्तृतीयकर्मायनवपञ्चमगो यदि ।
विलग्नतश्शुभो दृष्टो बलिभिस्सुशुभप्रदः ॥
बालस्यालिङ्गनं सूत्यै तदारोहणमुत्तमम् ।
[1] सन्त्यज्यानासनात्तस्य मृतासुर्भवति ध्रुवम् ॥
स्थापयित्वा व्रजेद्बालं गर्भस्रंसनमादिशेत् ।

---

[1] संत्यजानाधनान्तस्याः

कल्याणवर्मा—

शशिसितवर्गे धीस्थे ताभ्यां दृष्टेऽथ वाऽपि संयुक्ते ।
प्रायो बहुकन्यास्स्युस्समराशिस्थेऽङ्गनाऽन्यथा पुरुषः ॥
सङ्ख्या नवांशतुल्या सौम्यांशे तावती मदा दृष्टा ।
शुभदृष्टे तद्द्विगुणा क्लिष्टा पापांशके तथा दृष्ट्या(ष्टा) ॥

अन्यत्र--

पुत्रस्थानाधिपे तस्माद्दूरस्थे विवाहतः ।
अचिरेण सुतोत्पत्तिश्चिरेण यदि दूरगः ॥
पापग्रहयुते लग्ने गुरौ धीनवमास्थिते ।
सपापे पञ्चमे वा तद्वर्गे कालान्तरे सुतः ॥
सौरवर्गे बुधादृष्टे गुरुभौमदृगुज्झिते ।
यमादृष्टेऽथ बौधे वा क्षेत्रजो जायते सुतः ॥
चन्द्रे मन्देन सन्दृष्टे सुतस्थे भूसुतांशगे ।
शेषदर्शननिर्मुक्ते गूढोत्पन्नस्सुतो भवेत् ॥
ससौरे सौरवर्गस्थे पञ्चमस्थे हिमद्युतौ ।
रविशुक्रेक्षितो जातः पुत्रः पौनर्भवो भवेत् ॥
सुतभे (पे) सौरवर्गस्थे भौमे भानुनिरीक्षिते ।
जातस्य जायते पुत्रोऽपविद्ध इति स्मृतः ॥
रविचन्द्रमसोर्वर्गे सुतस्थे शुक्रवीक्षिते ।
सूर्यशीतांशुसंयुक्ते सहोढो जायते सुतः ॥
सौरं सुतगृहं चन्द्रः सौरदृष्टो यदीक्षिते ।
दत्तकस्सौरयुक्ते वा कृत्रिमोऽनन्यवीक्षिते ॥
भाग्यस्थानस्थिते सौम्ये सपापेऽस्तेऽष्टमेऽपि वा ।
पतिपुत्रसुतैस्सार्धं चिरकालं च जीवति ॥

धनुःकर्किझषे लग्ने भर्तृपुत्रादिदुःखदा ।
लग्न(स्था)तोऽष्टमभाग्यस्थैः पापैर्दुःखफलप्रदा ॥
सौम्यग्रहैरसम्मिश्रैस्सर्वक्लेशमवाप्नुयात् ।
पृच्छाकाले यत्र क्रूरैरध्यासितानि केन्द्राणि ॥
प्राप्नोति सा न सौख्यं यद्यपि जाता कुले विष्णोः ।
पृच्छायामुपचयगैः क्रूरैस्सौम्यैश्च दशसुखोदयगैः ॥
भवति धनधान्यसुखसुतसौभाग्यवती तथोदारा ।
इर्ष्यान्विता सुखपरा च सितेन्दुलग्ने
ज्ञेन्द्वोः कलासु निपुणा सुखिता गुणाढ्या ।
शुक्रज्ञयोस्तु सुभगा रुचिरा कलाज्ञा
त्रिष्वप्यनेकवसुसौख्यगुणा शुभेषु ॥
जीवलग्नेऽतिसंपन्ना पुत्रमित्रसुखप्रदा ।
क्षेत्रोच्चसंस्थिता लग्नेऽप्यशुभास्ते शुभप्रदाः ॥
सौरे मध्यबले बलेन सहितैश्शीतांशुशुक्रेन्दुजैः
शेषैर्वीर्यसमन्वितैः पुरुषिणी यद्योजराश्युद्गमे ।
जीवारस्फुजिदैन्दवेषु बलिषु प्राग्लग्नराशौ समे
विख्याता भुवि नैकशास्त्रनिपुणा स्त्री ब्रह्मवादिन्यपि ॥
क्रूरेऽस्तैर्नवमगता ग्रहस्य तुल्यां
प्रव्रज्यां युवतिरुपैत्यसंशयेन ।
अष्टमगेऽर्के सकुजे नवमस्थे भार्गवे गुरौ षष्ठे ।
मन्दे चतुर्थभवने मृतमप्यनुवर्तते दयितम् ॥
विवाहे पुङ्ग्रहास्सर्वे बलिनः पुङ्ग्रहाश्रिताः ।
वल्लभस्स्यात्पुमान् स्त्रीणां विपरीतेऽन्यथा भवेत् ॥
विवाहेऽर्कसितौ यातौ षट्सप्तर्क्षेशकं तयोः ।

श्वश्रूश्वशुरभर्तॄणां स्त्री स्यादतिविरोधिनी ॥
लग्नजामित्रभे पापाः पश्येयुर्यदि तत्समाः ।
तद्वर्णसदृशाचारा एकर्क्षस्थैस्त्रिपूर्वकैः ॥

वराहमिहिरः—

गुरावस्तगते शुक्रे चन्द्रे च बलवर्जिते ।
कन्यका पतिना सार्धं म्रियते नात्र संशयः ॥
जम्बुकोलूकमेषोष्ट्रमाहिषश्वादिशब्दनम् ।
यदि स्यादन्तिके नित्यं प्रवासः कलहस्तयोः ॥
भिद्यते यद्युदघटी शयनासनपादुकाः ।
राजा वा प्रश्नसमये तदा सा विधवा भवेत् ॥
भृङ्गाररत्नभूषणमधुघृतगोरोचनाभिधानाद्यैः ।
शालियवौषधिगोधूमपूर्णपात्रैश्च पुत्रवती ॥
पृच्छकसमीपदेशे सर्पन्ति कुमारका यदि कदाचित्
सा कन्या पुत्रवती कन्याश्चेत्कन्यकाजननी ॥
निर्घातभूमिखननं तारोल्कापातनं दिशां दाहः ।
स्वर्भानुदर्शनं वा पृच्छाकाले विनाशकरम् ॥
फलकलशरत्नभूषणकुसुमाम्बरधारिणश्शुभाश्श्रयिणः
द्रेक्काणाल्लग्नगताः शंसन्ति शुभं शुभारूढाः ॥
दण्डशिखितोमरायुधनिगळोरगपाशपरशुपक्षिभृतः ।
क्षुत्तृष्णार्तविवसना द्रेक्काणाल्लग्नगा न शुभाः ॥
अंशो विलग्नोपगतो नराणां
स्त्रीणां तदृक्षं च गतस्तु दृष्टः ।
स्वस्वामिना हन्ति समस्तरिष्टिं
शुभानि कुर्यान्नितरां विवाहे ॥

नीचारिगृहोपगतैर्बलहीनैस्त्रिग्रहैः कळत्रे च ।
बलरहिते सुतभे वा स्त्रीणां न भवन्त्यपत्यानि ॥
एकादिवृद्ध्या शुभभावसंस्थैरासन्नकैस्स्वोच्चसमाधिरूढैः ।
मित्रत्रिकोणे स्वगृहस्थितैर्वा दिक्कालचेष्टाबलसंयुतं च ॥
अविधवतां सौभाग्यं धनवृद्धिं बन्धुमान्यतां भानौ ।
नृपतुल्यतां नृपत्वं संपूर्णबलैर्वदेदेकः ॥

यथाऽऽह भृगुः—

दक्षिणबाहुशिरोरस्स्पर्शश्शुभकृद्विवाहस्य ।
वामकरपृष्ठजानूरुस्पर्शस्त्वन्यथा तस्य ॥
नितम्बस्तनगुह्यादिस्पर्शस्स्त्रीलाभकृद्भवेत् ।
नीचवर्णगतिर्निन्द्या जृम्भणं केशरोगकृत् ॥
[1]विवाहप्रश्नकाले च रुदितो व्याधितोऽथ वा ।
कौशिकश्चाङ्गहीनश्च कृष्णश्च न शुभावहः ॥
अभ्यङ्गी क्षुदितोन्मत्तो मुक्तकेशो विवासितः ।
भुजगो नग्नहस्तो वा निकटे न शुभावहः ॥
कलहो भग्नकुम्भश्च काष्ठः प्रव्रजितस्तथा ।
कपटाचारचाराश्च न शुभास्स्युस्समीपगाः ॥
चर्मलोष्ठतृणाङ्गारकाष्ठपांसुतृणान्यपि (तुषाणि च)।
रोमरोगतुषादीनि न शस्तान्यशुभानि वै ॥
भग्नकुम्भश्च पतितो न शुभा निकटस्थिताः ।
सृगालमहिषोष्ट्राश्च कुक्कुटाजशिवास्तथा ॥

---

1 गुरुः—

प्रश्ने विवाहे रुदितो व्याधितो व्यङ्गकौशिको ।
कृष्णो मतो मुक्तकेशस्तथा भोगी विलासितः ।
नग्नः प्रव्राजितश्चैव पाषण्डीभिर्जरास्त्विमे ।

पशुपक्षिमृगादीनि मैथुनं कुर्वते तदा ।
सरीसृपोऽथवाऽन्यश्च जारिणी कन्यका भवेत् ॥
दधिमधुफलमांसं चाक्षतं तोरणाद्यं
मुनिगणकुसुमाद्यैर्गन्धसद्वस्त्रयुक्तैः ।
शुभशयनसुभक्ष्यैर्दीपमन्नं सुवाद्यं
वरतरवनिताभिश्चामरं दर्पणं च ॥
ध्वजवरगणिकाभिः छत्रवीरध्वजाद्यैः
नृपपरमधुमांसं मद्यमृत्पूर्णकुम्भम् ।
वृषतुरगगजादिस्वस्तिकादींश्च दृष्ट्वा
प्रवरकुलवधूनां षण्डवाक्यं शुभाय ॥

छत्रादीनां पाते भङ्गे च दौर्भाग्यवैधव्यादिप्राप्तिः । एषु निमित्तेष्वेव फलमुक्तं सप्तर्षिमते—

श्वसृगालकरभगर्दभवानरकृकलासमहिषमेषाणाम् ।
संश्लेषणं न शुभदं पुनश्च कुलटां करोत्यचिरात् ॥
श्येनोलूककपोतकशशगोधासर्पदर्शनं नेष्टम् ।
रुदितं करोति मरणं केचित् गोधां शुभामाहुः ॥
छागरुतदर्शनाभ्यां द्विजातिकन्याऽग्निहोत्रिणी भवति ।
अन्यैश्च क्रत्वङ्गैः दृष्टैस्सोमं पिबत्यचिरात् ॥
यद्यन्तिके प्रसर्पन्ति लिङ्गिनो भिक्षुकादयः ।
पटुपटहशङ्खभेरीवीणावेणुप्रशान्तपक्षिरवाः ॥
मङ्गलशब्दाश्च शुभाः पृच्छासमये कुमारीणां ।
तल्लिङ्गं दशभिर्वर्षैरपत्यं जायते तदा ॥
यद्यन्तिके प्रसर्पन्ति कुमारास्सा सुपुत्रिणी ।
आलम्ब्य शिशुमागच्छेत् कन्यका कन्यकाप्रसूः ॥

केचित् दृष्ट्या श्वशुरयोरभावमाहुः। यथा—

पापा यदि निरीक्षन्ते रविर्नीचारिगस्तदा।
पिता मृतोऽथवा गच्छेत् पुत्रविग्रहतस्स्वयम्॥
चन्द्रमाक्यारसर्पेनास्स्वनीचारिगता यदि।
पश्यन्ति कन्यकां विद्यान्मातृहीनां तदोदिताम्॥
लग्नादष्टमभे सौम्ये पूर्वं स्त्री याति पञ्चताम्।
पापाश्चेद्विधवा सा स्यादभावे स्वात्मनः क्षयः॥
पापसौम्ययुते तस्मिन् समकालं द्वयोरपि।

अथवा—

नामाक्षराणि दम्पत्योर्मात्राश्चैकत्र योजयेत्।
त्रिभिर्भक्तावशेषे तु पूर्वं पश्चात् समं स्त्रियः॥

इत्यादिशुभाशुभमभिधाय स्ववाक्यविस्रम्भसंपादनाय कन्यावरयोः पित्रादिसदसद्भावं दैवविद्वदेत्। तत्कथनप्रकारमाह गुरुः—

प्रश्नलग्नं तदारूढं न पश्येद्यदि भास्करः।
कन्यायास्तु पिता नास्ति नीचारिभवने स्थितः॥
यदि चन्द्रो निरीक्षेत विमाता कन्यका भवेत्।
लग्नारूढर्क्षयोः प्रश्नसप्तमं यदि भास्करः॥
न पश्येत्पुरुषस्यात्र पिता नास्तीति दुर्बलः।
एवं चन्द्रो न पश्येच्चेत् लग्नारूढर्क्षयोर्द्वयोः॥
सप्तमं जननी नास्ति पुरुषस्यात्र पृच्छतः।

इति। वरकालज्ञैः कृते प्रश्ने व्यक्तमेतत्। तद्यथा—लग्नाद्वरस्य तद्स्तमाद्वध्वाः पितरौ वदेत्। यथोक्तं गुरुणा—

लग्नं यदा रविः पश्येत् तदा तस्य पिता सुखी।
वरस्य यदि नो पश्येत् पिता नास्तीति निर्दिशेत्॥

इत्यादि । प्रागुक्तवच्चन्द्रेण माता वाच्या । तदस्तभात्पुष्पवत्याः कन्यायाः पितरौ वाच्यौ । अन्ये तु लग्नस्य चन्द्रदृष्ट्या दम्पत्योः मातृसुखमाहुः । तदस्तराशिरसूर्यदृष्ट्या तयोः पितृसुखमाहुः । उक्तं च;—

यत्रोदयं शशी पश्येद्दम्पत्यो र्जननीसुखम् ।
न पश्येद्यदि सा नास्ति पिताऽर्केणैवमस्ततः ॥

इति । अन्ये त्वाहुः—

श्वशुरस्सहस्रकिरणः श्वश्रूर्भृगुतनय एव निर्दिष्टः ।
होरागमार्थकुशलैः जामित्रपतिः पतिस्स्त्रीणाम् ॥

इति । श्वश्रूश्चन्द्र इत्यन्ये—तयोः पापः प्रष्टुरारूढराशीशादिशि स्थितां कन्यकां वदेत ;—

लग्नेशादिक्स्थितां वाऽपि बलादेवं विचार्य च ।
. . . . . . . . . . लग्नारूढे स्थिते यतः ॥
तस्यां दिशि स्थितं विद्यात् जामातरमसंशयः ।
लग्नात्सप्तमभं स्वामी यदि पश्येत्तदा पुमान् ॥
दैवज्ञनिकटस्थस्स्याद्गुरुदृष्टे विशेषतः ।

अपिच—

कथितं यच्चोद्वाहे योज्यं तत् प्रश्नकालेऽपि ॥

एवं प्रश्ने विचारिते तयोर्वक्ष्यमाणान् मेलकयोगान् विचारयेत् । योगानुकूल्ये तयोस्संबन्धस्सेत्स्यति वा न वेति प्रश्ने गुर्वादिभिरुक्तं;—

चन्द्रस्तृतीयकर्मायनवपञ्चमगो यदि ।
विलग्नतश्शुभैर्दृष्टो बलिभिर्योगकृत्तयोः ॥
उक्तयोगेन चेन्मृत्यौ पापा लग्नस्मराधिपौ ।
अन्योन्यवीक्षितौ मित्रे संबन्धस्यानुकारिणौ ॥

लग्नात्सहजचतुष्टयनवपञ्चमसंस्थितो निशानाथः ।
जीवेन दृश्यमानस्संबन्धकरो भवेन्नियमात् ॥
जामित्रधनोपचये स्थितश्शशी जीववीक्षितः कुरुते ।
स्त्रीलाभं पापायुतो विलोकितो वाऽपि तन्नाशम् ॥
प्रमदाभवनोपगताः प्रमदेशं प्राग्विलग्नमायान्तम् ।
पश्यन्ति यदा सौम्यास्तदा भवेत् कन्यकालाभः ॥
पुरुषात्मकद्रेक्काणे वनितांशो यदि भवेद्विलग्नगतः ।
दृष्टस्स्त्रीपुरुषाभ्यां व्यस्तो वा, कन्यकालाभः ॥
केन्द्रगतौ स्त्रीपुरुषौ कन्यांशाधिष्ठितौ यदीक्षेते ।
कन्योदयांशकं वा तदा विवाहोऽस्ति नियमेन ॥
युग्मभवनोपयातौ द्विपदाख्ये स्त्रीनवांशगौ वाऽपि ।
शशिशुक्रावुदयगतौ यदा तदा कन्यकालाभः ॥
. . . . . . . . लग्नस्य तु तद्दृष्टचावा . . ।
तुलागोकर्कटलग्नसंस्थाः शुक्रेन्दुसंयुताः ॥
वीक्षिताः पृच्छतां नृणां कन्यालाभकरास्तदा ।
शुक्रेन्दू युग्मराशिस्थौ युग्मांशकगतौ यदा ॥
वीक्षेते बलिनौ लग्नं कन्यालाभो भवेत्तदा ।
स्त्रीद्रेक्काणस्त्रीनवांशो युग्मलग्नं समाश्रितः ।
वीक्षितश्चन्द्रशुक्राभ्यां कन्यालाभो भवेत्तदा ॥
स्त्रीराश्यंशदृकाणस्थाः वीक्षन्ते यदि वैदृशम् ।
लग्नं भवेत्तदा नृणां योषिल्लाभः प्रयत्नतः ॥
[2] पापाश्चेत्प्रयतास्सौम्याः य . . . . . ।
स्त्रीराशिषु भृगुशशिनोः स्त्रीहोरायां च पृच्छतां ब्रूयात् ॥

[1] मस्ताद्वा. [2] पापश्चेद्यत्प्रयत्नतस्सौम्या यद्यत्नेन.

दृष्ट्या वा स्त्रीलाभं दास्या नीचस्थयोर्लभम् ।
यदि पापयुतौ स्यातां कुरुतोऽत्रायासमङ्गनानाशम् ॥
यद्येतौ सौम्ययुतौ स्त्रीलाभमयत्नतः कुरुतः ॥
कीटवृषतौलिकन्याः शुक्रेन्दुनिरीक्षिता वाऽपि ।
कन्यालाभं बलिनश्शंसन्ति विलग्नमारूढाः ॥
प्रमदात्मकद्रेक्काणे गुरुभागे भार्गवे च केन्द्रस्थे ।
भवति च कन्यालाभः कर्किणि लग्ने च जीवसौम्ययुते ॥
भृगुभेष्वर्कारयमा मित्रविरोधस्य कर्तारः ।
यद्येते सौम्ययुता लग्ने कुर्वन्ति युवतिलाभं च ॥
गुरुरपि सौम्यैर्दृष्टः त्रिसुतमदायारिगश्शशी लग्नात् ।
न भवति कन्योद्वाहस्त्रिकोणकेन्द्रेषु वा सौम्याः ॥
लभ्या वरस्य नारी समस्थिते सूर्यजेऽन्यथा वाऽपि ।
जामित्रे शुभभवने शुभरूपा पापभे कुरूपा सा ॥
एवं च कन्यकानां पृच्छाकाले वरोपलब्धिस्स्यात् ।
नरभवनदृगाणांशे दृष्टे पुरुषग्रहैर्बलिभिः ॥
पुंवर्गगैर्ग्रहैर्वा योगात् स्त्रीलाभयोगाद्वा ।
न भवति कन्यालाभो नरभागे पृच्छतो नरस्य यथा ॥
एवं स्त्रीयोगेष्वपि कुमारिकाया न वरलाभः ।
गुणरूपसत्वशीलस्वभाववर्णादयश्च वक्तव्याः ॥
बलिभिः केन्द्रोपगतैर्ग्रहैर्विलग्नेक्षणवशाद्वा ।
यद्रूपशीलधारी द्रेक्काणः प्राग्विलग्नमायातः ॥
स्वस्वामिना बलवता दृष्टस्तद्रूपशीलतां कुरुते ।
कृष्णपक्षे प्रश्नलग्नाद्युग्मराशौ यदा शशी ॥
पापदृष्टोऽथवा रन्ध्रे न संबन्धो भवेत्तदा ।

रिपुनीचर्क्षगाः पापा लग्नादष्टमगा यदा ॥
पापदृष्टा बलैर्युक्ता विघ्नं कुर्वन्ति वर्गजे ।
एवं षष्ठेऽथवा लग्नाद्रोधो रोगेण वा तयोः ॥
दम्पत्योर्बन्धुभिर्वाऽपि विवाहस्य विनाशिभिः ।
उपचयसंस्थैस्सिद्धिस्त्वनुपचयस्थैर्भवन्ति विघ्नानि ॥

मिश्रस्थितैर्ग्रहेन्द्रैर्बलान्वितैर्निश्चयः कार्यः ।

इत्यादि—

मनोऽनुकूले प्रथमं प्रसिद्धे लग्नेऽथ पश्येद्दशसंपदश्च ।
ततो निमित्तैश्शकुनादिभिश्च संचिन्त्य पश्चाद्वर उद्वहेत्ताम् ॥

इति । शकुननिमित्तान्यन्यत्र द्रष्टव्यानि शास्त्रविप्रतिषेधे निश्चयार्थं ।
यदाहुः—

सर्वथा शास्त्रसन्देहे विहितप्रतिषेधयोः ।
शकुनानि परीक्ष्यैव विवाहं कारयेद्बुधः ॥

तद्विधानमुक्तं मुहूर्तसारे;—

शुभे दिने शुचौ देशे गृहे वा देवतालये ।
नदीतीरेऽथवा कुर्यात् स्थण्डिलं गोमयेन तु ॥
कुण्डत्रयं ततः कुर्यात् तन्मध्ये दक्षिणोत्तरम् ।
हिरण्यं दक्षिणे कुण्डे रजतं मध्यमे तथा ॥
अयश्चैवोत्तरे कुण्डे मन्त्रैस्सन्नचस्य तत्क्रमात् ।
मृदा पिधाय तत् पश्चात् संपूज्य विधिवत्क्रमात् ॥
प्रणवेन तु तत्स्थाने पिण्डत्रयमधः क्षिपेत् ।
दधिमिश्रं नमस्कारैर्युक्तं संपूज्य चाक्षतैः ॥

दम्पत्योर्नामनक्षत्रे संलिख्य[1] विधिवत् ततः ।
यथावच्छुभमाचक्ष्वेत्युक्त्वा वायसदेवताम् ॥
बहिस्तिष्ठेत्तदा काको भुङ्क्ते यदि सुवर्णकम् ।
उत्तमं सर्वसंपत् स्यात् मध्यमं राजतं तथा ॥
अशुभं वाऽऽयसं विद्याद्दम्पत्योश्शुभमिच्छता ।
एवमेव तु कर्तव्यं सर्वेषु शुभकर्मसु ॥

इति । एवं प्रश्ननिमित्ते शुभोदर्के जाते जातकजन्मनामादीनि कन्यावरयोरवगम्य योगान् विचारयेत् इत्याह—

**विबुध्य वध्वा जननर्क्षमादौ ततश्च दैवज्ञवरो वरस्य । क्रमात्तयोः पञ्चदशापि योगान् विचारयेन्नामभयोगयुक्तान् ॥ २ ॥**

दैवज्ञः प्रथमं वध्वा जन्मर्क्षं पश्चात् वरस्य जन्मभं च ज्ञात्वा तयोर्वधूवरयोः क्रमाद्वधूजन्मर्क्षादारभ्य पञ्चदश योगान् विचारयेत् । अन्ये त्वेवमाहुः—पञ्चावरान् दशमध्यान् पञ्चदशोत्तमान् योगान् विचारयेदिति । अत्र अपिशब्दस्यानुक्तसमुच्चयार्थत्वात्क्वचिदष्टादशयोगास्सन्तीत्युक्तं भवति । अत्र गुरुः—

प्रश्नेऽनुकूले दम्पत्योर्निरीक्ष्य घटनादतः ।
दिनाद्गणाच्च माहेन्द्रात्स्त्रीदृक्षाद्योनियोगतः ॥

[1] भिन्नराश्यशनक्षत्रे पूर्व. पुंसश्शुभप्रदः । पश्चात् स्त्रियस्तु जन्म स्यात् व्यत्ययस्तु विनाशकृदिति । विवाहवृन्दावने—एकर्क्षेऽपि वरस्य पूर्वमपरं वध्वास्तुभं पूजितं त्याज्यं नेतरथापि तत्परिहरेन्नक्षत्रमेकं तयोः । तच्चान्ये शुभमामनन्ति मुनयश्शक्रप्रचेतोमघामूलार्द्रावसुरोहिणीयमभयोर्हस्ताहिपुष्यैर्विना ॥

राशौ राश्यधिपाद्वश्याद्रज्जोर्वेधाच्च योजयेत् ।
भूताल्लिङ्गाच्च जातेश्च गोत्राद्योगिनियोगतः ॥
पक्ष्यार्यदेवयोगेभ्यः तथाऽष्टादशवर्गतः ।
दश वर्गाः प्रधानास्स्युरष्टवर्गेषु कीर्तिताः ॥
दशके दिनयोगाख्यराशिमाहेन्द्रराशिपाः ।
शोभनास्स्युर्बलादन्ये बलहीना न शोभनाः ॥

इति । अत्र योगिन्यादयो देवयोगास्त्रयः पञ्चदशस्वेवान्तर्गता इति न पृथगाचार्येणाभिहिताः । एते योगा जन्मर्क्षाभ्यामेव निरीक्ष्याः । अत्रानुकूल्यसंपत्तौ तयोर्नामर्क्षाभ्यामपि विचारयेदित्याह—नामभयोग-युक्तान् इति । तथाचेदमाशंसितवान् गुरुः—

दम्पत्योर्जन्मताराभ्यां नामर्क्षाभ्यामथापि वा ।
स्त्रीजन्मतारापूर्वाभ्यां संयोगाद्वा शुभाशुभम् ॥

इति। पञ्चभिर्हीनाश्चेत् वर्जयेत् । तथाहि—अत्रिः दिनादीन् दश योगा-नुक्त्वा अन्ते प्राह—

अनुकूलविधौ ज्ञेया अर्धा (दीनां) हीनं परित्यजेत् ।

इति । अत्र जननर्क्षे विबुध्येत्यत्र जननपदग्रहणं द्वयोर्जन्मजातकमुप-लक्षयति । तेन द्वयोः जातकोक्तदशाष्टकवर्गागतराश्यादियुक्तं योगप-रीक्षणमुत्तममित्युक्तं भवति—जातकमविज्ञाय जन्मनामर्क्षाभ्यां क्रिय-माणं मध्यमं नामनक्षत्रमात्रेणाधमम् । तथा च गार्ग्यः—“द्वयोर्जा-तकसंयुक्तमुत्तमं” इत्यादि । अष्टवर्गानुकूल्याभावे दोषश्चोक्तः होरासारे—

अनुक्तराशिजन्मर्क्षयोगश्चेन्नास्ति सन्ततिः ।
नानादुःखपरिक्लेशो विप्रयोगोऽथवा भवेत् ॥

अथ दम्पत्योः जन्मताराभ्यां नामर्क्षाभ्यामपि योगान् विचारयेदित्युक्तं; तत्र जन्मर्क्षं प्रसिद्धं; नामर्क्षज्ञानोपायमाह—

**अवकहडान्मटपरतान्नयबजशानथ वदन्ति गदचलान्। [1]पञ्चस्वरसंभेदादेकैकः पञ्चधा भवेद्वर्णः। [2]एकैकं नक्षत्रं चतुश्चतुर्भिश्चतुर्थमेकेन। वर्गचतुष्कैरिति तैरनलादिभसप्तकानि चत्वारि ॥ ४ ॥**

वर्गचतुष्कैरिति—तैरनलादिभसप्तकानि चत्वारि अवकहडादिपञ्चवर्गात्मकांश्चतुरो वर्गानाहुः। तत्र अवकहडात् प्रथमं। मटपरता द्वितीयं। नयबजशात्तृतीयं। गसदचलाच्चतुर्थं वर्गं च वदन्ति। अ इ उ ए ओ स्वराः पञ्च। तत्कृतेन पञ्चविधेन भेदेन अयमेकैको वर्णः प्रत्येकं पञ्चधा भवेत्। एवमकारादयश्शतं वर्णाः स्युः। तेषु चतुर्भिश्चतुर्भिर्वर्णैः कृत्तिकादिकमेकैकं नक्षत्रं भवेत्। अ इ उ ए कृत्तिका इत्यादि द्रष्टव्यम्। तथा चतुर्थं नक्षत्रं एकेन त्रयोदशेन वर्णेन भवति। यथा कु आर्द्रेत्यादिप्रथमवर्गगतपञ्चवर्णपञ्चस्वरसंभेदजनितैः पञ्चविंशतिवर्णैः कृत्तिकादिसप्तकं भवेत्। ततो द्वितीयवर्गपञ्चवर्णस्वरसंभेदजैः पञ्चविंशतिवर्णैः मघादिसप्तकं ततस्तृतीयवर्गगतपञ्चवर्णस्वरसंभेदजैः पञ्चविंशतिवर्णैः अष्टाविंशतिनक्षत्राणि भवन्ति।

नन्वत्र नामवर्णः पञ्चस्वरसंभेदात्पञ्चधा भवतीत्युक्तं; लोके तु दशस्वरसंभेदात् दशधा दृश्यते। अपि च वर्गाश्च विंशतिरुक्ताः लोके तदधिकास्सन्ति। तत्कथं कथितैः भकल्पनेत्यत्राह—

[1] पञ्चस्वरसभेदैरेकेकैः। पा। [2] एकैकं तु चतुर्भिश्चतुर्भिं ऋक्षं चतुर्थमेकेन।

**उक्तैः पञ्चभिरेतैस्स्वरैरनोजास्स्वराश्च गृह्यन्ते ।**
**स्पर्शाक्षराणि वर्गे प्रथमतृतीयैर्द्वितीयतुर्याणि ॥**

उक्तैरकारादिभिरेतैः पञ्चभिरोजस्वरैरनुक्ता आकारादयः पञ्च अनोजाः—युग्माः स्वराश्च गृह्यन्ते तेषां सावर्ण्यात् । तथा च कादयो मावसाना वर्णाः स्पर्शा उच्यन्ते । तेष्वत्र कथितैर्वर्गप्रथमतृतीयवर्णैः ककारगकारादिभिरनुक्तानि वर्गद्वितीयचतुर्थाक्षराणि भकारादीनि गृह्यन्ते । एवं दशस्वराः त्रिंशद्वर्णाश्च गृहीतास्स्युः । एतैरेव लोके सर्वो नामव्यवहारस्सेत्स्यति ॥

ननु ङञणादयोऽन्ये वर्णाः स्वराश्च केचित्सन्ति ; तेषां नक्षत्रं किं नोक्तमित्यत्राह—

**नाम्नामादौ ङञणा न सन्ति न प्रायशः षकारश्च।**

नामाक्षरस्य खलु नक्षत्रं जिज्ञासितं । नाम्नामादौ ङकार-ञकारणकारा न सन्ति । प्रायशो—भूम्ना षकारोऽपि नास्ति । चकारस्यानुक्तसमुच्चयार्थत्वादृकार ऌकारस्वरौ च न स्तः । यद्यपि षण्मुख ऋषभाक्षादीनि नामानि सन्ति; न तेषां प्राचुर्येण प्रवृत्तिर-स्तीति प्रायश इत्युक्तम् ॥

अथ यद्यपि नामादौ प्रायेण ङञणादयो न सन्ति ; तथाऽप्य-नियमात् ज्ञानी, कर्ण, वैणिरित्यादिषु मध्येऽन्ते च सन्ति । ततस्तेषा-मपि नक्षत्रं वाच्यमित्यत्राह—

**इति सर्वेषां नाम्नां नक्षत्रं प्रथमवर्णतो ज्ञेयम्॥**

नाम्नां प्रथमवर्णादेव नक्षत्रं ग्राह्यम् । न कस्यचित् मध्यमवर्णे-न वाऽन्तवर्णेन वा गृह्यत इत्यर्थः । अथवा सर्वेषां पदार्थानां नाम्नां प्रथमवर्णादित्युक्तवत् नामनक्षत्रं ज्ञेयमिति योज्यम् । तथाचाहुः—

नामाद्यक्षरतारा ज्ञात्वा सम्यक् शुभाशुभं ब्रूयात् ।

इति । एतन्नामनक्षत्रज्ञानं ब्रह्मयामळे शतपदचक्रोपरि दर्शितम् तद्यथा—

अवकहडादीन् न्यस्येद्विंशतिवर्णांश्च पूर्वादीन् ।
एकैकं प्रत्येकं विभेदयेत् पञ्चभिः स्वरैः क्रमशः ॥
ऋक्षं च चतुष्पादं राशिर्नवपादसंयुक्तः ।
आग्नेयादियमान्तास्ताराःस्युर्विंशतिश्चाष्टौ ॥
अक्षरसंस्थास्सर्वास्ताभ्यस्ते राशयो जाताः ।
एकांशकाश्चतस्रः तारास्तास्तम्भसंज्ञास्स्युः ॥
आर्द्राहस्ताषाढोत्तरभाद्रानामभानि स्युः ।

इति । एतज्जयार्णवे शतपदचक्रविन्यासे यथेष्टमुक्तं—
दश तिर्यग्दशाथोर्ध्वं कोष्टकान् विन्यसेत्ततः ।
शतं भवति कोष्ठानां नामनक्षत्रसंविदि ॥
तस्मिन्नुभयतस्स्पष्टरेखामध्यकृतस्फुटम् ।
पञ्चविंशतिकोष्ठेषु चतुश्चक्रं पृथक् पृथक् ॥

अवकहडान् मटपरतान् नयबजशानालिखेच्च गसदचलान् ।
ईशानलरक्षोनिलदिशि क्रमाद्दक्षिणावर्तम् ॥
ततःक्रमादकारादीन् ई ऊ ए ओ स्वरान् लिखेत् ।
एभिस्स्वरैस्समायुक्तान् वकारादींस्तथा लिखेत् ॥

एवं कोष्ठशतं व्याप्तमक्षरैस्स्वरसंयुतैः ।
ह्रस्वैर्दीर्घैस्समं ज्ञेयं स्तम्भानां च पृथक् स्वरान् ॥
कु पू बु टु षु वर्णेषु घङछान् षणठांस्तथा ।
थभढान् खझधान् वर्णांस्त्रींस्तद्वर्णैस्सहालिखेत् ॥

इत्थं भानां क्रमात्तत्र वर्णानां क्रमशस्स्थितिः ।
चतुष्कं च चतुष्कं च कथ्यते तच्च सुन्दरि ॥
आ ई ऊ ए कृत्तिका स्याद्रोवावीवो च रोहिणी ।
वे वो का के मृगशिर आर्द्रा कू घा ङ छस्स्मृताः ॥
के को हा ही अथादित्यं हू हे हो डा च पुष्यकः ।
डी डू डे डो तथाऽऽश्लेषा मा मी मू मे मघास्तथा (मता) ॥
मो टा टी टू भवेत्पूर्वा टे टो पा पी तथोत्तरा ।
हस्तः पुषणठाः प्रोक्तः पे पो रा री तु चित्रका ॥
रु रे रो ता भवेत्स्वाती ती तू ते तो विशाखिका ।
ना नी नू ने अनूराधा नो या यी यू तथेन्दुभम् ॥
ये यो बा बी भवेन्मूलं पूर्वाषाढा बुधाभढाः ।
बे बो जा जी वैश्वदेवं जु जे जो शाऽभिजित् स्मृतः ॥
शी शू शे शो श्रवणभं गा गी गू गे च वासवम् ।
गो सा सी सू शतभिषक् से सो दा दी तु भाद्रभम् ॥
अहिर्बुध्न्यं दु थ झ ञा दे दो चा ची तु रेवती ।
चू चे चो ला अश्विनी स्या ली लू ले लो भरण्यपि ॥
नाम्नो य आदिमो वर्णस्तमत्र ग्राहयेत् प्रिये ।
संयोगे चोर्ध्वसंस्थं तु गृह्णीयात्स्वरसंयुतम् ॥
एतच्छतपदं चक्रं नामनक्षत्रमंविदि ।

इति । स्वरशास्त्रे वर्गद्वितीयचतुर्थाक्षराणि ङञणषाश्च कु पु बु दु षु वर्णैः सह स्तम्भर्क्षेषु संयोज्य पठितानि । आचार्येणात्र वर्गप्रथम-तृतीयाक्षरैर्द्वितीयचतुर्थाक्षराणि ग्राह्याणि । ङ ञ ण षाणां नामा-दावप्रसिद्धिरित्युक्तमितीदमनार्षं नाशङ्कनीयम् । उभयथा आप्तसम्मतेः तथाच ? अपि च स्वर विद्भिरपि खेचरः फाल्गन इत्यादिनाम्नां

नक्षत्रग्रहणाय तन्मतमाश्रयणीयम् ? नैतत् नयबजखेति केचित् । पाठात् तत्सिध्यतीति चेन्न । तत्सजातीयस्यान्यस्य वर्गद्वितीयस्य वर्गचतुर्थस्य वा वर्णस्याग्रहणात् । शङ्कर इत्यादिनाम्नां नक्षत्रस्य कथमपि दुरवबोधत्वाच्च । ततः खफयोर्नक्षत्रसिद्ध्यर्थं सावर्ण्यमाश्रयणम् । ङञणादीनां नक्षत्रसिद्ध्यर्थं स्वरविदां मतमाश्रयणीयम् । अतः उभयमपि ग्राह्यमित्यदोषः ॥ नामर्क्षस्य जन्मर्क्षस्य च फलतारतम्यमाह—

**जन्मर्क्षस्यार्धफलं नामर्क्षे ब्राह्मणस्य निर्दिष्टम् । नृपवैश्ययोस्समानं शूद्रादीनां फलं ततोऽभ्यधिकम् ॥ ७ ॥**

ब्राह्मणस्येति जातावेकवचनं । ब्राह्मणानां नामर्क्षे स्वजन्मर्क्षस्यार्धफलं स्यात् । क्षत्रियवैश्यानां नामर्क्षे जन्मर्क्षस्य समं फलम् । शूद्रान्त्यजादीनां नामर्क्षे जन्मर्क्षाद्धिकं फलं भवति । यत्तु "संयोगाद्वेति स्त्रीपुंसयोर्जन्मनामर्क्षयोः संयोगाद्योगान् विचारयेत्" इति गुरुणोक्तं; तत्रायं क्रमः— वध्वा नामर्क्षात् वरस्य जन्मर्क्षाच्च योगान् विचारयेत् । तथा च सङ्ग्रहे—

अङ्गनाजन्मना सार्धं न तु नाम वरस्य तु ।
वरस्य जन्मना सार्धं नाम वध्वा विचिन्तयेत् ॥

इति ॥

**अज्ञातजन्मभानां सर्वेषां नामभात् फलं भवति । सेवापरिणयनादौ ग्राह्यं तद्युधि विशेषतः फलदम् ॥ ८ ॥**

अज्ञातजन्मर्क्षाणां क्षत्रियादीनामन्येषां च नामभात् फलं संपूर्ण वाच्यम् । स्वामिसेवायां विवाहे क्षेत्रग्रहे नगराधिपत्ये च तन्नाम-नक्षत्रमेव ग्राह्यम् । तथाचोक्तं—

अज्ञाते जन्मनक्षत्रे नामाद्यक्षरऋक्षतः ।
सर्वं शुभाशुभं वाच्यं विवाहे . . . . ।
दम्पत्योर्जन्मताराभ्यां नामर्क्षाभ्यामथापि वा ॥

इति । तुल्यत्वेनाभिधानात् जन्मर्क्षनामर्क्षयोः फलस्य साम्यम् । युद्धे नामर्क्षमेव विशेषेण फलं ददाति । तथाच सङ्ग्रामविजये—

आधानजन्मनाम्नां त्रिराशयस्सर्वलोकविख्याताः ।
तेषां प्रधानभूतो रणागमे नामराशिस्स्यात् ॥

इति । कस्यचित् नामद्वयं विद्यते ; तयोः कतरन्नाम ग्राह्यमित्यत्रोक्तं—

यद्यस्य सुप्रसिद्धं लोके नाम प्रगीयते बहुभिः ।
तन्नाम ग्रहीतव्यं न तु गुप्तं चाप्रसिद्धं च ॥

इति । नरपतिश्च—

प्रगु(सु)प्ता येन भाषन्ते येनागच्छन्ति शब्दिताः ।

इत्यादि । नामर्क्षज्ञानस्य प्रयोजनमाह—

**आयुधवाहनकिङ्करभृत्या(भूम्या)दीनां परिग्रहे भर्तुः । तत्तन्नामर्क्षाभ्यां योगास्सर्वे विवाहवद्वाच्याः ॥**

आयुधं—कृपाणादि । वाहनमश्वादि । किङ्करः—प्रेष्यः । भृत्या—दासी । आदिशब्देन देशनगरक्षेत्रादि । स्वामिना एषां स्वीकारे कर्तव्ये अश्विन्यादि लिखितभगणे त्रिनाडी चक्रे—

एकनाडीगतौ यत्र स्वामिभृत्यौ तु संस्थितौ ।
वित्तलाभो महाप्रीतिस्तयोर्ज्ञेयो विपाश्रिता ॥

अन्ये नराकारं चक्रं विलिख्य तच्छिरःपृष्ठहृदयपादेषु भृत्यर्क्ष-पूर्वाणि सप्तर्क्षाणि विन्यस्य स्वामिनक्षत्रं यात्रांशे भवति तद्वशात्फल-माहुः । तद्यथोक्तं—

स्वीयनामर्क्षपूर्वाणि सप्त सप्त क्रमान्न्यसेत् ।
मूर्ध्नि पृष्ठे च हृदये पादयोः सेवकस्य तु ॥
स्वामिनं मूर्ध्नि यद्यस्य प्रभुः पूजामवाप्नुयात् ।
पृष्ठे धनागमं विद्यात् हृदयं हृदयङ्गमः ॥
पादयोर्निष्फलं सर्वं क्लेश एव गमागमैः ।

इति । अन्यत्रापि—

प्रभुऋक्षादितस्सप्त विन्यसेन्मूर्ध्न्यथ क्रमात् ।
क्रोडे षट् चतुरः पृष्ठे बाहौ त्रीणि च दक्षिणे ॥
वामबाहौ तथा त्रीणि द्वे द्वे दद्याच्च पादयोः ।
भृत्यऋक्षं यदि भवेद्धनलाभश्च मूर्धनि ॥
क्रोडे वल्लभता तस्य पृष्ठे सेवा तु निष्फला ।
प्रशस्तं दक्षिणे बाहौ वामे हानिर्न संशयः ॥
पादयोः प्रेषणं नित्यं सेवाचक्रमिदं स्मृतम् ।

इति । केचित्स्वामिभृत्यादिनामाक्षरयोरकचटाद्यष्टवर्गयोः[1] देवतानामैक्यं शुभं शत्रुत्वं वर्ज्यमित्याहुः । तथा च सङ्ग्रामविजये—

सुरदैत्यनागकिन्नरमुनिवरराक्षसपिशाचमनुजास्स्युः ।
खगपतिबिडालसिंहग्राममृगव्यालमूषिकेभमृगाः ॥
अकचटतपयशवर्गाः स्वांशाधीशाश्च पूर्वाद्याः ।
स्थाननृपभृत्यवनितासहायगुरुबन्धुवाहनाख्याश्च ॥
वश्यास्स्ववर्गजानां प्राणहराः शत्रुवर्गस्थाः ।
विहगोरगयोर्वैरं मूषिकमार्जारयोश्च शत्रुत्वम् ॥

[1] योरपि तारैक्ये.

सिंहगजयोश्च वैरं मण्डलमृगयोर्महावैरम् ।
वैश्यांशास्त्रीनृपास्स्नेहकरा नित्यं धनप्रदाः ॥
वधकांशोद्भवास्ते तु नृणां प्राणहरा मताः ।

तस्यायुष्यादेस्तस्य स्वामिनश्च द्वयोर्नामक्षर्भ्यां प्रेष्यादीनामृक्षपूर्वाभ्यां विवाहयोगवत्सर्वे दिनादयो योगा वाच्याः । यथा तत्र प्रेष्यादितारां स्त्रीतारां परिकल्प्य योगान् विचारयेदित्यर्थः । तत्र दिनयोगे विशेषफलमुक्तं—

राजा स्वजन्मजातो मध्यमफलदप्रियस्ससन्मानः ।
संपत्तारोद्भूतः समस्तसंपत्प्रदो नित्यम् ॥
विपदि तु जातो राजा निष्फलदोऽन्त्ये च मृत्युदो ज्ञेयः ।
क्षेमक ऋक्षे जातः क्षेमकरः प्रत्यरे भर्तुः ।
धनदस्साधकजातः प्राणहरस्तस्य नैधनोद्भूतः ॥
सम्मानदो न फलदस्स मैत्रदः परममैत्रसंजातः ।
संपत्प्रदस्सुफलदः ततश्च सप्तर्क्षजो विफलः ॥
वैनाशिकसंजातो विनाशकृत्तस्य विज्ञेयः ॥

इति । केचित् स्वामिभृत्यादियोगे प्राणयोगमाहुः । सद्विधा—नामर्क्षजो नामवर्णजश्च । तथाच नारदः—

आरभ्य साधकस्यर्क्षं साध्यं यावच्चतुर्गुणम् ।
साध्यवर्गं पुरस्स्थाप्य साधकं पृष्ठतो न्यसेत् ॥
विभजेत्सप्तभिश्शेषं साधकस्य धनं भवेत् ।
व्यत्ययेनागतं तत्र ऋणमल्पं धनाच्छुभम् ॥

इति । ज्योतिषार्णवे—

लिखेत्सप्तायता रेखा तिर्यक् च द्वादशालिखेत् ।

साध्याक्षरं लिखेदादौ साधकस्य ततोऽक्षरम् ।
मध्यस्थेषु चतुष्केषु क्रमादकचटतपादयः ॥
विन्यस्यान्याक्षरान् सर्वान् स्वैर्गुणैर्गुणयेत्ततः ।
अष्टभिर्विभजेच्छेषं द्वयोर्यदधिकं भवेत् ॥
ऋणं स्यादधिके विन्द्यात् सेवादौ तु विशेषतः ।
मनुर्धिष्ण्यं तथा नेत्रं जगती(जन्मनी)तिथयस्तथा ॥
ऋ(च)तुर्वेदास्तथाऽग्निश्च ततोऽन्त्याष्टारिभास्तथा ।
बृहस्पतिक्रमात्प्रोक्तास्साध्यभाद्गुणकारकाः ॥
पङ्क्तिरु(भु)क्तं तथा भक्तं प्रतिष्ठां सर्वमेव च ।
मध्यमं च मृतिर्बाणनेत्रमध्यमजं तथा ।
साधकाख्या गणा ह्येते स्वरव्यञ्जनयोः पृथक् ॥

इति । [1]अथ विचार्यवधूवरयोर्मेलकयोगानाह—

**योगास्त्रिंशो ऋक्षयोनेर्दिनाख्यात् माहेन्द्राख्याद्राशिराशीशवश्यैः । स्त्र्यृक्षाद्वर्गाद्रज्जुवेधात्ययाभ्यां लिङ्गाज्जातेः पक्षितो गोत्रभूतैः ॥ १० ॥**

वधूवरयोर्नक्षत्रयोन्यादिभिः पञ्चदशभिरनुकूलैस्तयोः तदाख्याः पञ्चदश योगा भवन्ति । एषु नक्षत्रयोन्यादीनां यथासंभवमैक्यमैत्र्य-विरोधसद्भाव आनुकूल्यं। रज्जुवेधयोरैक्यादिविरह आनुकूल्यम् । अत्र कन्यावरयोरिति वक्तव्ये स्त्रीनृशब्दाभ्यामभिधानं जात्यपेक्षया कृतमिति न दुष्यति । अत एव स्त्रीजन्मतारापूर्वाभ्यामित्यादिप्रयोगाणां साधुत्वम् ।

[1] अथ वधूवरयोरधिकयोगानाह.

नक्षत्रयोनीराह —

**अश्वेभाजभुजङ्गभोगिशुनका मार्जारवस्ताह्वयौ**
**मार्जारोन्दुरुमूषिकोक्षमहिषा व्याघ्रीमहिष्यौ तथा।**
**शार्दूलो हरिणः कुरङ्गशुनकौ शाखामृगो गौः**
**कपिर्नार्यश्वौ नरगोगजाश्च कथिता भानां क्रमाद्यो-**
**नयः ॥ ११ ॥**

अश्विन्यादीनां नक्षत्राणां अश्वादयः क्रमेण योनयो भवन्ति। इभो गजः। अजश्छागः। भुजङ्गस्सर्पः। उन्दुरुर्मूषिकः। उक्षा वृषः। शार्दूलो व्याघ्रः। हरिणो मृगः। शाखामृगो वानरः। शेषाःप्रसिद्धाः। यथोक्तं सुबोधे—

अश्वस्तम्बेरमाजा भुजगभुजगिकाश्श्वा च मार्जारवस्तौ
बैडाला उन्दुराखुर्वृषभमहिषकौ व्याघ्रजातिर्महिष्यः।
व्याघ्री मृग्येणजातिस्तदनु पुनरपि श्वा हरिर्गौः प्लवङ्गो
नार्यश्वौ वा नरो गौः पुनरपि करिणीत्याश्विनादेस्तु योनिः॥

इति। अत्र कैश्चिद्विश्वाभिजितोर्नकुलः श्रविष्ठाभाद्रयोः सिंहो योनिरित्युक्तं। श्रीपतिः—

अश्वेभाजफणिद्वयं च विषभुग्भषस्ततो मूषिक
श्चाखुर्गौः क्रमशस्ततोऽपि महिषो व्याघ्रः पुनस्सैरिभः।
व्याघ्रैणौ मृगमण्डलः कपिरथो बभ्रुद्वयं वानरः
सिंह श्वो मृगराट्पशुश्च करटोऽयोनिस्तु भानामियम्॥

इति। अत्र सजातीययोः द्वे योनी उक्ते। तयोः प्रायेण पूर्वा पुंयोनिः अपरा स्त्रीयोनिरिति विवेकः कार्यः।

योनीनां शत्रुमित्रतामाह—

श्वा गौर्ना महिषो मृगाजकपयो व्याघ्रद्विषोऽरिश्शुनो बस्तो गौः प्लवगो मृगोऽप्यथ मिथो वैर्याखुभुङ्मूषिकम्। एणभं महिषाश्वमोतुभुजगं हस्त्यश्वमाखूरगं योन्योरत्र सुहृत्त्वमैक्यमपि च श्लाघ्यं विरोधोऽशुभम् ॥ १२ ॥

अत्र योनियोगे वधूवरयोर्योन्योरैक्यमतिशस्तं। भिन्नर्क्षयोरपि तयोः मित्रत्वं शस्तं। अपिशब्दादौदासीन्यमपि ग्राह्यं। वैरं न शुभमित्यर्थः। अत्र गुरुः—

एकयोनिषु संपत्त्यै दम्पत्योस्सङ्गमस्सदा।
भिन्नयोनिषु मध्यस्स्यात् अरिभावो न चेत्तयोः॥
उदासीने कृते योगे समं स्याद्धनपुत्रयोः।
महारियोनिषु कृतं कुलक्षयकरं भवेत्॥

इति। कस्य योनेःकश्शत्रुरित्यत्राह—श्वादयस्सप्त व्याघ्रस्य शात्रवः। शुनकस्य बस्ताद्याश्चत्वारः शत्रवः। अपिशब्दोऽनुक्तलोकप्रसिद्धशत्रुमित्रभावस्य समुच्चयार्थः। प्लवगो—वानरः। आखुभुङ्मार्जारः। एणो—मृगः। ओतुर्मार्जारः। एतदाखुभुङ्मूषिकमित्यादियोनिद्वन्द्वषट्कं मिथोवैरि—परस्परशत्रु स्यात्। अनयोर्महाशत्रुत्वमित्यर्थः। अथशब्दः कात्स्न्यार्थः; तेनान्यदपि कपिमेषादि महावैरयोनिद्वन्द्वं वर्जयेदित्युक्तं स्यात्। योनिसुहृत्त्वं गार्ग्येणोक्तं—

मृगस्य च सुहृच्छागो गावो मित्रं तथैव च
सर्पैणवानरं मित्रं गजाश्च श्वानमार्जारौ॥

गजमूषिकमित्रं स्यादजमूषिकमेव च ।
अश्वमानुषयोः प्रीतिः सर्पैणव्याघ्रमेव च ॥
अजस्य मानुषास्सर्वे प्रीतिर्मूषिकवानरम् ।

इति । आभ्यामन्यदौदासीन्यं । चशब्दोऽनुक्तसमुच्चयार्थः; तेन नृपभृत्यसंगमादिष्वेवं । अत्र श्रीपतिः—

गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणं च बभ्रूरगं
वैरं वानरमेषकं च सुमहत्तद्वद्विडालोन्दुरु ।
लोकानां व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं
दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभिः ॥

इति । दिनादियोगचतुष्टयमाह—

**पुंसि स्त्रीजन्मभेभ्यो दिनमवधविपत्प्रत्यरर्क्षप्रसूते माहेन्द्रस्तत्र तेभ्यो जलधिगिरिहरित्संख्यनक्षत्रजाते । हृदयार्धक्षेत्रजाते युवतिजनिगृहाद्राशियोगो वरीयानैक्ये वाऽन्योन्यमैत्र्यां मिथुनजनिगृहस्वामिनोर्भेशयोगः ॥ १३ ॥**

पुंसि स्त्रीजन्मत्रयाद्वधविपत्प्रत्यरेतरर्क्षेषु संपत्करादिषु जाते दिनयोगोऽस्ति । अत्र गुरुः—

स्त्रीणां संपदि भे क्षेमे साधके जन्मभाक् पुमान् ।
मैत्रे परममैत्रे च जातश्शोभनमावहेत् ॥
विपदं प्रत्यरं चैव वधं वैनाशिकं त्यजेत् ।

इति । मध्यमेषु विपत्प्रत्यरवधर्क्षेषु आद्यतृतीयांशान् विहायान्यांशकेष्वपि दिनमाहुः । अन्येषु वैनाशिकांशादन्येषु सर्वेष्वपि त्रिपञ्चसप्तसु आद्यान्त्यमध्यांशकान्मध्यमे त्यजेत् ।

पर्यायोऽन्यश्शुभस्त्यक्त्वा वैनाशर्क्षं परेऽशकाः ।
वधवैनाशिके योगे फलं कौशिकचोदितम् ॥
अग्निसार्पे सौर्यवायू चित्राऽऽप्ये मैत्रवासवे ।
वसुयाम्ये वारुणाग्नी वधवैनाशिके मृतिः ॥
पौष्णार्द्रे अर्यमेन्दू च शूर्पविष्णू सपत्नताम् ।
इन्दुभाग्ये अर्कमूले नैर्धन्यं वधनाशने ॥
दुष्पुत्रत्वं पित्र्यशूर्पे विश्लेषो दस्रवैष्णवे ।
विश्वपौष्णे तथा रोगः वैधव्यं ब्रध्नसौम्ययोः ॥
अश्वचादित्ये मरुद्विश्वे स्त्रीप्रसूतिं समश्नुते ।
आर्द्राऽऽर्यम्णे भाग्यमित्रे तिष्यचिमित्रे (चित्रे) सुखप्रदे ॥
आदित्यार्के वंशवृद्धिं तन्नाशं शाक्रवारुणे ।
ब्राह्मपित्र्यजपात्ब्राह्मे बहुपुत्रत्वमाप्नुयात् ॥
आप्यबुध्न्ये तु संप्रीतिः संपन्मूलाजपादके ।
सौभाग्यं याम्यपुष्ये स्यात् वधवैनाशिके फलम् ॥

इति । केचित् द्विपादिभेषु वधूजन्मभांशकात्परं दशाष्टादशषड्विंशकांशकेभ्यः परं जन्मर्क्षांशके सति न दोष इत्याहुः । फलं चान्यत्रोक्तं—

स्त्रीजन्मर्क्षात्पुमृक्षं चेद्विपत्प्रत्यरनैधने ।
विपद्वैरशुचोऽन्येषु स्वस्वनामानुगं फलम् ॥

इति । अथ माहेन्द्र उच्यते—तेभ्यः— स्त्रीजन्मभेभ्यः । तत्र—पुंसि जलधिशैलदिक्सङ्ख्यभेषु जाते सति माहेन्द्रो योगस्स्यात् । तथा च गुरुः—

चतुर्थतश्चतुर्थं स्यात् पौनःपुन्येन भात् स्त्रियः ।
पुन्तारा यदि माहेन्द्रं धनधान्यसुखावहम् ॥

इति । प्रथमचतुर्थादिमाहेन्द्रर्क्षनवके फलमन्यत्रोक्तं—

स्त्रीजन्मर्क्षात् पुमृक्षं चेत् विपत्प्रत्यरनैधने ।
क्षेमं सौख्यं समृद्धिं च नैरुज्यं प्रेमसंपदम् ॥
सुप्रजामायातिं पूजां माहेन्द्रर्क्षेषु विन्दति ॥

इति । ननु कथं द्वितीयपञ्चमाष्टममाहेन्द्रेषु वधतारायोगात्तत्र च 'नैधने शोकमाप्नुयात्' इति फलस्मरणादिदं फलाभिधानमिति । नैष दोषः । वधतारावशात् फलस्य तदंशनिष्ठत्वात् । तथा च गुरुः—

आद्यंशं विपदि त्याज्यं प्रत्यरे तु चतुर्थकम् ।
नैधने च तृतीयांशं विना शेषाश्शुभावहाः ॥

इति । तेषु वधांशवर्जं माहेन्द्रफलं युज्यते । दृश्यते दिवि प्रोदितत्वादिति दृश्यं—भचक्रस्य परार्धं । पुञ्जन्मभे स्त्रीजन्मराशेः सप्तमादिभषट्कान्तस्स्थिते राशियोगो वरीयान् स्यात् । यथाऽऽह भागिलः—

कन्यास्वजन्मभवनाद्द्वादशदशमाष्टनवमलाभेषु ।
जातस्य सप्तमे वा भयोगमृषयो वदन्तीष्टम् ॥

इति । तत्फलं चोक्तं—

आरोग्यं धनसंपत्तिः दम्पत्योर्द्वादशद्विके ।
सत्प्रजा मङ्गलप्रीतिः सुखमेकादशत्रिके ॥
सौभाग्यसुखसौख्याप्तिः धनं दशचतुर्थके ।
धनसंपद्वैधव्यं सत्प्रजा नवपञ्चमे ॥
पुत्रलाभस्सुखं प्रीतिः योगे स्यादष्टषष्ठके ।
सुतसौख्यधनावाप्तिस्संप्रीतिस्सप्तसप्तके ॥
एते तु राजयोगास्स्युः मैत्रे वश्येऽतिशोभना ॥

इति। एते राश्यधिपयोः शत्रुत्वे मध्यमा भवन्ति। यतोऽत्रिः—

एकादशत्रिके चैव दशमे च चतुर्थके।
दम्पत्योर्मध्यमौ योगौ मैत्रे वश्ये च शोभनौ॥

अन्येऽपि—

भवति च भवनाधिपयोः न शत्रुभावोऽस्ति चेत्कलहः।

इति। एतद्द्वादशद्विकादीनामुपलक्षणं। राशीशशत्रुत्वेऽपि समसप्तक-योगश्शुभ इति गुरुः—

समसप्तकं शुभं विन्द्याद्(?)न्यराशी तयोः पती।

एकादशत्रि(का)को दशचतुर्थश्च शुभ इत्यन्ये। तथा च मुहूर्तसारे—

एकादशतृतीये च तथा दशचतुर्थके।
ग्रहमै(त्रं)त्रीं विना कुर्यादुभयोस्समसप्तकम्॥

इति। जन्मांशकेशमैत्र्यामप्येको योग उत्तमः। यथाऽऽह गुरुः—

राशीशमैत्रभावे च शोभनो योग ईरितः।
स्त्रीपुंसोर्जन्मनक्षत्रद्विनवांशेशयोरपि॥

इति। मिथुनं—स्त्रीपुंसौ। तयोर्जनिगृहे जन्मराशितत्स्वामिनोरैक्ये—परस्परमैत्र्यां वा राशीशयोग उत्तमः। तथाच गुरुः;—

दम्पत्योर्जन्मराशिभ्यां यौ ग्रहावधिपौ तयोः
ऐक्ये वाऽन्योन्यमैत्रे वा सर्वसम्पदुपस्थिता।
उदासीने मध्यमं स्यादरिभावे न शोभनम्॥

तत्फलं चाहुः—

स्वाम्यैक्ये सर्वसंपत्तिः मैत्र्यां प्रेम परस्परम्।
साम्येऽल्पा प्रेमसौख्याप्तिः शात्रवे दुःखविप्रियम्॥

इति। अत्र केचित् यवनमतेन ग्रहमैत्रीमिच्छन्ति तस्यापि वराहमिहि-रादिभिरिष्टत्वात्।

वर्ज्यराशिफलान्याह—

**स्त्रीजन्मभाद्यदि च पुंसि कुटुम्बजाते वित्तक्षयस्तनयजे निरपत्यता च। षष्ठोद्भवे व्यसनरोगविपद्वियोगा दुःखं सहोदरभवे सुखजे विरोधः ॥ १४ ॥**

स्त्रीजन्मराशेः पुमान् द्वितीयराशौ जातश्चेत् द्विद्वादशाख्यो राशियोगः। तत्र धनक्षयः दारिद्र्यं फलं भवति। चकारात् निधनं च। स्त्रीजन्मराशेः पञ्चमराशौ जातश्चेत् पञ्चमनवमाख्यः। तत्र निरपत्यता-प्रजाऽभावः। चकारात् वैधव्यं च। षष्ठराशौ जातश्चेत् षष्ठाष्टमो नाम। तत्र व्यसनादीनि स्युः। तृतीयराशौ जातश्चेत् त्रिकैकादशो नाम। तत्र दुःखम्। चतुर्थराशौ जातश्चेत् चतुर्दशो नाम। तत्र विरोधः। अत्रात्रिः;—

मृत्युर्दुःखं च दारिद्र्यं वैधव्यं पुत्रनाशनम्।
स्त्रीराशेस्स्युर्द्वितीयादौ पुंराशेरन्यथा भवेत् ॥

इति। एषु पञ्चमनवमद्विद्वादशषडष्टमास्त्रयो राशियोगा एव वर्ज्या इत्यन्ये—

षष्ठाष्टमे मरणवैरिवियोगदोषा
द्विद्वादशे विधनताऽप्रजता त्रिकोणे।
प्रीतिः परा निगदिता समसप्तके स्यात्
शेषेष्वनेकविधसौख्यसुखार्थसंपत् ॥

इति। ततश्च त्रिकैकादशचतुर्दशौ योगौ मध्यौ। तौ च राश्योर्वश्यत्वे तत्स्वामिनोस्सुहृत्वे ऐक्ये वा शस्तौ स्तः। यत आहुः—

वश्यता[1] सुहृदभिन्नसुहृत्वं क्षेत्रयोस्तदखिलेष्वपि मेळः।

[1] वश्यतारासुहृद्भिन्नं सुहृत्वं पतित्वं क्षेत्रयोस्तदा। खलेष्वपि मे लाभ इति षष्ठाष्टमादिषु ॥

इति । षष्ठाष्टमादिदुष्टराशियोगा अपि क्वचित् ग्राह्या इत्यत्राह—

**असति जननतारावेधदोषे यदि स्यात् भवनपतिसुहृत्त्वं वश्यतैकाधिपत्यं । न खलु भवति दोषस्तर्हि षष्ठाष्टमत्वात् सति कथितगुणेऽस्मिन् नाऽशुभो राशियोगः ॥ १५॥**

वधूवरयोर्जन्मर्क्षवेधाख्ये वक्ष्यमाणे दोषे असति तद्राशिस्वामिनोस्सुहृत्त्वमेकाधिपत्यं वा तद्राश्योर्वश्यत्वं च यदि स्यात् एष षष्ठाष्टमत्वेन राशियोगो न दुष्यति। अपि च शुभ एव भवति। तथाच गुरुः—

षष्ठाष्टमर्क्षे नाशस्स्यान्न चेदेकाधिपत्यता
अन्योन्यमित्रभावो वा भवनाधिपयोर्यदि ।
वश्यभावस्तथाऽन्योन्यं ताराशुद्धिः परस्परम्
न च षष्ठाष्टमो दोषस्तदा षष्ठाष्टमश्शुभः ॥

इति । क्वचित् ग्रहमैत्रयाद्यभावे षष्ठाष्टमयोगो ग्राह्य इत्येके । यथाऽऽहाऽत्रिः—

षष्ठाष्टमेऽपि शुभदौ तुलान्त्यौ कुम्भकर्कटौ
मेषस्त्रियौ युग्मकोर्पी सिंहैणौ चापगोवृषौ ॥

इति । स्यादेतत्—कथमिह सिंहैणादिषु षष्ठाष्टमयोगश्श्रेष्ठ इत्युच्यते ? अपितु स्वामिनो वैरादतिकष्ट एव । यत उक्तं गुरुणा—

अरिषष्ठाष्टमे शक्र कृते परिणये तदा ।
रोगो वैरं वियोगश्च तदन्ते मरणं ध्रुवम् ॥

इति । अन्यत्रोच्यते—

पुंजन्म युग्मराशिश्चेत् प्रीत्यै षष्ठाष्टमं भवेत् ।

'षष्ठाष्टमेऽपि शुभदौ तुलान्त्यौ' इत्यादि। विशिष्याभिधानाददोष इति।

स्वामिनोर्मैत्र्यां राश्योर्वश्यत्वे वा सति द्विद्वादशः पञ्चमनवमौ वा अन्यो वा राशियोगश्शुभ इत्याह—सति कथितगुणेऽस्मिन् नाशुभो राशियोग इति। उक्तं च—

वश्ये चैकाधिपत्ये च मैत्रे च भवनेशयोः।
द्विकद्वादशषष्ठाष्टत्रिकोणेष्वपि शोभनम्।

इति। वश्यादौ सत्यपि द्विद्वादशयोगो न शुभ इत्यन्ये। तथाचात्रि.—

एकराश्योर्विवाहश्च समसप्तकयोश्शुभः।
वश्ये चैकाधिपत्ये च शुभं द्विद्वादशं विना॥

तत्र फलं भागिलेनोक्तं—

द्विद्वादशे विनाशे दारिद्र्यं दौर्मनस्यमायाति।
भवति च वियोगदुःखं दम्पत्योस्सप्तमे वर्षे॥

इति। विधिरत्ने—

द्विद्वादशाख्यदोषस्यादंशतो दूरतस्त्रियाः।
धृत्यंशोऽत्यष्टिरंशो वा पुंसोंऽशः कन्यकांशकात्॥

इति। एतच्चाष्टादशान्नवांशात्परं जातस्य तृतीयभावजत्वादुपपन्नम्। अपिचैवं पञ्चमान्नवांशादर्वागप्येकभावजत्वादनवमो योग इति। एवं भावकल्पनाऽङ्गीकारात् त्रिकोणे षष्ठाष्टकेऽप्यूह्यम्। यथा चतुष्पञ्चाशांशात्परं षष्ठाष्टमेऽप्येष दोषः। षट्त्रिंशादर्वाक् त्रिकोणे न दोषः॥ कन्याराशौ पुंराशौ युग्मभे सति द्वादशश्शुभ इत्यन्ये—

द्विद्वादशश्शुभो ज्ञेयो मीनादौ युग्मराशिषु।
मेषादावोजराशौ स्यान्निधनाय न संशयः॥

जन्मर्क्षस्य वेधमाह—

**अश्वीन्द्रौ यममैत्रभे हरिहरौ शूर्पानलौ वाय्वजौ**
**मूलाहीं पितृपूषणौ गुरुजले देवप्रसूविश्वभे ।**
**वुध्न्यक्षार्यमणौ दिनेशवरुणौ भाद्रर्क्षभाग्ये मिथो**
**वेधान्नार्हति योगमृक्षयुगलं वस्विन्दुचित्रात्रयम् ॥**

अत्र पौर्वापर्यमविवक्षितं । स्त्रीजन्मराशेः पुंजन्मराशिः षष्ठो यथा स्यात् स एव क्रमः । न पठितमात्रः । एतानि ज्येष्ठाश्विन्यादीनि द्वादश तारायुग्मानि त्रीण्यर्धतारायुग्मानि च अन्योन्यवेधात् न योगार्हाणि । एषु तारायुग्मेषु स्त्रीपुंसयोर्योगो न शुभ इत्यर्थः । अत्राधर्क्षेष्वपरार्धं वध्वाः पूर्वार्धं पुंसश्चेन्न दोषकृत् । तथा सति षष्ठाष्टमयोगस्या संभवात् । एतद्वेधप्रकारः पुरस्तात् वक्ष्यते । वेधफलमाह—

**जन्मर्क्षवेधे कथितेऽत्र जाते युक्तोऽपि वश्यादिगुणैर्बलिष्ठैः । पतिं च कन्यां च समूलघातं निहन्ति षष्ठाष्टमराशियोगः ॥ १७ ॥**

अस्मिन् उक्ते जन्मर्क्षवेधे सति स्त्रीपुंसयोः जन्मर्क्षराश्योः षष्ठाष्टमराशियोगः वश्यग्रहैक्यमैत्र्यादिभिर्बलवद्भिर्गुणैर्युक्तोऽपि तारावेधस्य प्राबल्यात् ग्रहाणां वश्यादिगुणान् बाधित्वा वधूवरौ समूलविनाशं निहन्ति । वश्यादिगुणेभ्योऽपि सवेधस्य षष्ठाष्टमयोगस्यैव प्राबल्यमित्यर्थः । तथा च गुरुः—

[1]वेधषष्ठाष्टमे जातो वैधव्यं संप्रयच्छति ।
दोषाणामपि सर्वेषां प्रचण्डोऽयमुदाहृतः ॥

---

[1] वेधषष्ठाष्टमो.

इति । अथ पूर्वक्षितिजगतस्य प्राग्लग्नगतस्य अदृश्यत्वादेकराशिजातयो राशियोगो न संभवेदतस्तत्राशुभं वाच्यमित्याशङ्क्य तत्र विभागं दर्शयति—

**एकर्क्षेऽपि वरस्य पूर्वमपरं वध्वास्तु भं पूजितं**
**त्याज्यं नेतरथाऽपि तत्परिहरेन्नक्षत्रमेकं तयोः[1] ।**
**तच्चान्ये शुभमामनन्ति मुनयश्शाक्रप्रचेतोमघा**
**मूलाऽऽर्द्रावसुरोहिणीयमपयो हस्ताहि पुष्यैर्विना ॥**

तयोरेकस्मिन् राशौ जन्मन्यपि तत्र पूर्वं वरजन्मनक्षत्रं तदग्रस्थं वधूजन्मर्क्षं यदि स्यात् तयोर्योगः प्रशस्तः । इतरथाऽपि पूर्वं वधूजन्मभं तदग्रस्थं वरजन्मभं यद्यपि स्यात् तथाऽपि योगो न निन्द्यः । अथ द्वयोरेकमेव जन्मनक्षत्रं सोऽधमो योगः परिहर्तव्यः । अत्राहुः—

एकराशौ हि भिन्नर्क्षे पूर्वं पुंसश्शुभप्रदम् ।
पश्चात् जन्म यदि स्त्रीणां व्यत्ययस्तु न शोभनः ॥

इति । एकर्क्षे विभिन्नराशिश्चेन्मध्यः ।

श्रोणाशूर्पमखाऽऽर्द्रैन्द्रबुध्नचाऽन्त्यादितिविश्वकाः ।
शुभा भैक्येऽपि खण्डत्वे न राश्यंशान् विनेतरः ॥

इति । अत्र नारदः—

एकराशिपृथग्धिष्ण्यं दम्पत्योः पाणिपीडनम् ।
उत्तमं मध्यमं भिन्नराश्येकर्क्षजयोस्तयोः ॥
एकर्क्षे चैकराशौ च विवाहः प्राणनाशनः ।
एकराशौ भिन्ननक्षत्रेऽपि नाड्यैक्यं न शुभकृत् ।

[1] द्वयोः.

यथोक्तं विवाहबृन्दावने;—

[1]अभिन्नमृक्षं यदि भिन्नराश्योरभिन्नराश्योरपि भिन्नमृक्षम् ।
प्रीतिस्तदानीं निबिडा नृनार्योश्चेत्कृत्तिकारोहिणिवन्न नाडी ॥

एकर्क्षेऽप्यंशभेदेन न दोष इत्यन्ये ;—

एकगृहसंभवानां भवति विवाहः सुखार्थसंपत्त्यै ।
यद्युभयोरेकर्क्षं न भवति यदि वांऽशको नैकः ॥

इति । तदंशेशमित्रत्वे शुभ इत्यन्ये ।

दम्पत्योर्जन्मनक्षत्रे भिन्नांशे भिन्नराशिगे ।
तदंशगे च मित्रत्वे विवाहस्सर्वसम्मतः ॥

इति । भिन्नराश्यंशकेऽपि वरस्य जन्मांशकः पूर्वश्चेत् शुभः । तथा-चाहुः—

भिन्नराश्यंशनक्षत्रे पूर्वं पुंसश्शुभप्रदम् ।
पश्चात् स्त्रियश्च जन्म स्याद्व्यत्ययस्तु विनाशकृत् ॥

इति । विवाहबृन्दावने—

पराशरः प्राह नवांशभेदादेकर्क्षराश्योरपि सौमनस्यम् ।
एकांशकत्वेऽपि वसिष्ठशिष्यो नैकत्र धिष्ण्ये किल नाडिभेदः॥

इति । अन्ये तु दम्पत्योरेकराशिकमेकनक्षत्रमपि ज्येष्ठादिद्वादशर्क्षाणि मुक्त्वा अन्यच्छुभं वदन्ति । तथा च सुबोधे—

रोहिण्यार्द्रा श्रविष्ठा च तिष्यमूलमघाश्च षट्
आषाढभरणीसर्पहस्तेन्दुवरुणाश्च षट् ।
दम्पत्योर्जन्मनक्षत्रमेकतारा सुदुःखदम्
अन्यत्सर्वं तु नक्षत्रमेकत्वेऽपि शुभावहम् ॥

इति । अन्ये तु ज्येष्ठाधनिष्ठारोहिणीपुष्याश्लेषाहस्तभानि शस्तान्याहुः ।

---

[1] नक्षत्रमेक यदि,

तद्यथा—

अजैकपान्मित्रवसुद्विदैवप्रभञ्जनाजार्कभुजङ्गभानि ।
मुकुन्दजीवान्तकशक्रभानि शुभानि योषिन्नरजन्मभैक्ये ॥

इति । अन्यैर्विभज्योक्तं—

पूर्वाषाढा तथाऽऽश्लेषा ज्येष्ठा वासववारुणम्
स्वातीमूलयमा भैक्ये विशेषेण तु वर्जिताः ।
अश्विनीकृत्तिका पूर्वा मैत्रं चित्रापुनर्वसू
सौम्यं च सप्त ऋक्षाणि पादभेदे शुभावहाः ॥

इति । कैश्चित् कन्यावरयोः जन्मर्क्षविशेषात् तद्बान्धवानां फलविशेष उक्तः, यथाऽऽह नारदः—

मूलाहीन्द्राग्निजाता स्त्री पत्युस्तताम्बिकाग्रजान् ।
सोदरं च क्रमाद्धन्यात्पुरुषो न तु दोषकृत ॥

अन्यैस्सविशेषमुक्तं—

सुतस्सुता वा नियतं श्वशुरं हन्ति मूलजः
तदन्त्यपादजो [1] नाऽपि नैवाश्लेषान्त्यपादजः ।
ज्येष्ठाद्यपादजो ज्येष्ठं हन्ति बालो न बालिका
विशाखा च तुलायुक्ता देवरस्य शुभप्रदा ॥
वैशाखी देवरं हन्ति पुच्छे वृश्चिकपुच्छवत् ।

इति । अथ स्त्रीपुंसादिजन्मेशयोरौदासीन्ये तन्मैत्रीनिबद्धस्य राशियोगस्यानिश्चयापाते तदापादनाय मैत्रीप्रकारमाह;—

**यो यस्य जन्मेशनिजत्रिकोणात् सुखार्थधीधर्ममृतिव्ययेषु । जातस्तदुच्चे च स तस्य मित्रं परेषु तत्स्वामिवशेन शत्रुः ॥ ११ ॥**

---

[1] नैव तथा.

यो नरो यस्य स्त्र्यादेर्जन्माधिपतिमूलत्रिकोणराशेः सुखादिषट्स्थानेषु तत्स्त्र्यादिजन्मेशग्रहस्योच्चराशौ च जातश्चेत्स नरस्तस्य स्त्र्यादेर्मित्रं भवति । परेषु—तदन्यराशिषु त्रिषट्सप्तदशायतनुस्थानेषु तन्नीचस्थानेषु जातः शत्रुर्भवति । एतन्मित्रत्वं शत्रुत्वं च तज्जन्माधिपग्रहवशेन द्रष्टव्यम् । एवं मित्रत्वे सति राशियोगो ग्राह्यः । शत्रुत्वे न संभवतीति । एतत्सत्यमतमाश्रित्योक्तम् ॥

अथ वश्याख्यं राशिमित्रत्वमाह—

**अळिमृगपती तौळीन्दूक्षे वधूमळिधन्विनौ वणिगधिपतिं वीणामीनौ मृगं युवतीन्दुभे । पुनरनिमिषं मेषोपान्त्यावजं मकरं क्रमात् इति पदमितान् राशीन् वश्यानजादिषु (मन्महे) मन्यते ॥**

अळिमृगपतीत्यादिद्वादशपदमितान् राशीन् मेषादिषु वश्यानाहुः । एतत् गुरुवाक्येनोक्तं भवति—

मेषस्य वश्यौ सिंहाळी कर्किजूकौ वृषस्य तु<br>
यमस्य कन्या वश्या स्यात्कर्किणश्चापवृश्चिकौ ।<br>
तुला सिंहस्य वश्या स्यात्पाथोने यममत्स्यभे<br>
मृगकन्ये तु जूकस्य कर्की स्याद्वृश्चिकस्य तु ॥<br>
मीनश्चापस्य वश्यस्स्यात् क्रियकुम्भौ मृगस्य तु<br>
मेषः कुम्भस्य वश्यस्स्यान्मकरो मीनवश्यकृत् ।<br>
एवं वश्यसमायोगे स्त्रीराशेः पुरुषस्य भे<br>
वश्ययोगः शुभः प्रोक्तः दम्पत्योः प्रेमकृत् परम् ॥

इतिः प्रकारवचनः, तेनान्ये प्रकारान्तरेणैतदाहुरिति ज्ञापितम् ।

तथा च रत्नः—

द्विपदवशगास्सर्वे सिंहं विहाय चतुष्पदाः

सलिलनिलया भक्ष्या वश्यास्सरीसृपजातयः ।

मृगपतिवशे तिष्ठन्त्येते विहाय सरीसृपान्

अकथितगृहेषूह्यं वश्यं जनव्यवहारतः ॥

इति । कैश्चित् राशीनां परस्परं वैरमुक्तं । तथा च वृन्दावने—

चापाजौ वृषभेण कुम्भमिथुनौ कर्केण मेषः स्त्रिया

शैलाग्नी सविषेण कार्मुकहरी नक्रेण नित्यं द्विषौ ।

तद्वत्कुम्भतुले झषेण वशगास्सिंहं विनाऽन्ये नृणां

तद्भक्ष्या जलचारिणो हरिवशास्सर्वे विना वृश्चिकम् ॥

इति । अथ स्त्र्यृक्षयोगमाह—

**स्त्रीतारकादिनवकत्रितये वरस्य जन्मर्क्षमृक्षनवके प्रथमेऽनभीष्टम् । मध्ये (च) तु मध्यमफलं चरमे प्रशस्तं न्याय्यं दिनादिषु च केचिदिमं (वदन्ति) स्मरन्ति ॥ २१ ॥**

स्त्रियाः स्त्रीजन्मताराादिताशनवकत्रितये प्रथमतारानवके वरस्य जन्मभमनिष्टकृत् । मध्ये मध्यमफलं अन्त्ये च तत् प्रशस्तम् । तथा-चोक्तं—

दूरस्थे प्रेमसौख्याप्तिः श्रेष्ठा मध्ये तु मध्यमा ।

आसन्ने त्वधमा स्त्र्यृक्षात् स्त्र्यृक्षयोगो वरर्क्षतः ॥

इति । केचिदिदं स्त्रीदीर्घाख्यं स्त्रीजन्मर्क्षाद्वरजन्मर्क्षे त्रयोदशर्क्षात् परे स्यादित्याहुः । यथोक्तं—“स्त्रीदीर्घं विश्वभात् परम्” ।

इति । केचिन्मुनयो दिनादिषु तारायोगेष्वपीममुक्तन्याय्यं स्मरन्ति ।

एतत् गुरुवाक्येनोक्तं भवति—

पर्याये प्रथमेऽन्त्ये च मध्ये च क्रमशो भवेत् ।
अधमोत्तममध्यास्स्युस्तारायोगा विवाहजाः ॥

इति । प्रथमे अधमः मध्ये मध्यमः अन्त्ये श्रेष्ठस्त्वृक्षयोग इत्यर्थः ।
अथ गणयोगमाह—

**दम्पत्योरशुभमेकवर्गजननं मध्या नरामर्त्यता**
**कष्टा निर्जरदैत्यता मृतिकरं रक्षोनरत्वं तयोः ।**
**अस्वप्नासुरवर्गजो यदि पुमान् स्त्रीमर्त्यवर्गे क्रमात्**
**योगावुत्तममध्यमावितरथा कष्टातिकष्टौ स्मृतौ ॥**

स्त्रीपुंसयोरेव मर्त्ययोगो मध्यम इत्युक्तं । तयोर्देवासुरवर्गजत्वं कष्टम् । देवजा स्त्री पुमानासुरजश्चेन्मध्यः; पुमान् देवजः स्त्री दैत्यजा चेत् कष्टतरा अतो देवासुरत्वं कष्टमित्युक्तम् । राक्षसमानुषत्वं मृतिकरमतिकष्टम् । स्त्रीराक्षसी, पुमान् मानुषश्चेदतिकष्टो योगः । पुमान् राक्षसः स्त्री मानुषी चेत् कष्टा भवति; अतो राक्षसमानुषत्वमतिकष्टमित्युक्तम् । एतदेव स्पष्टयति अस्वप्नासुरवर्गजो यदि पुमान् इत्यादिना । अस्वप्ना—देवाः—यद्यप्यसुरराक्षसशब्दौ भिन्नार्थौ तथाऽपि देवानां प्रतिपक्षत्वसाम्यादेकार्थौ द्रष्टव्यावित्ययं वर्गयोगः । अत्र गुरुः—

सहितदिनगणेऽतिशोभनं स्यान्नरसुरभे यदि मध्यमावहं स्यात् ।
असुरसुरगणेऽपि नाशयोगः सुररिपुमानुषभे च सर्वनाशः ॥

इति । अत्रिः—

देवासुरगणे पुंसि स्त्रीमर्त्ये श्रेष्ठमध्यमौ ।
अशुभो व्यत्यये त्याज्यस्स्त्रीराक्षसगणे शुभः ॥

इति । वर्गदोषस्तु राशियोगे सति शुभ इत्यत्रिः—

स्त्रीराक्षसं न दोषस्स्याच्चतुर्दशदिनात्परम् ।

इति । गणदोषादयो ग्रहमैत्र्यां नाऽशुभा इत्यन्ये—

न वर्गसिद्धिर्न गणो न योनिः द्विद्वादशं चापि षडष्टकं च ।
परेष्वदूरेष्वथवा त्रिकोणे मैत्री यदि स्याच्छुभदो विवाहे ॥

इति । एतच्च दम्पत्योरशुभमेकवर्गजननमित्यनेन सिध्यति । तद्यथा-एकस्मिन् ग्रहयोर्वर्गे—पक्षे मित्रत्वे दम्पत्योर्जननमुत्तमम् । अथवा एकस्य ग्रहस्य वर्गे राश्यादौ तयोर्जननमुत्तमम् ॥

इति । रज्जुयोगमाह—

**अश्विन्यादिकमादिमध्यमशिरोरज्ज्वाख्यमृक्षत्रयं रोहिण्यादिकमामनन्ति च शिरोमध्यादिरज्ज्वाह्वयम् । शिष्टं भत्रयमेवमेव निखिलं तत्रैकरज्जुस्थयोः संयोगो वरयोषितोरशुभदस्तद्व्यत्ययः पूजितः ॥ २३ ॥**

अश्विन्यादि भत्रयमादिमध्यमशिरोरज्ज्वाख्यम् । रोहिण्यादिकं तु व्यस्तं—शिरोमध्यादिरज्ज्वाख्यम् । शिष्टं—पुनर्वस्वादि भत्रयम् । एवं—अश्विन्यादिवदादिमध्यमशिरोरज्ज्वाख्यं । तथा मखादि भत्रयं रोहिण्यादिवत् शिरोमध्यादिरज्ज्वाख्यमेव परतोऽपि षट्कपूर्वत्रिकमश्विन्यादिवत् । अपरात्रिकं रोहिण्यादिवत् ज्ञेयम् । तत्र त्रिनाड्यात्मके फणिमन्दयातानुकारिणि दस्रादिलिखितसप्तविंशतिभे चक्रे स्त्रीपुंसयोः जन्मभे द्वे यद्येकरज्ज्वाश्रिते स्तः ततस्तयोर्योगो न शुभः । तद्व्यत्यये-

जन्मभयोर्भिन्नरज्ज्ववस्थानं चेच्छुभो योगः । अत्र श्रीपतिः--

नाड्यस्तिस्रो न्यस्तनिश्शेषधिष्ण्याः
तिस्रोऽश्विन्यादिभ्य एव प्रसूताः ।
सर्पाकारस्तत्र नाडीसमाजो
नक्षत्राणामेकरेखास्पृशां स्यात् ॥

तत्फलमन्यत्रोक्तम्—

वियोगदुःखदो नित्यं दम्पत्योरेकनाडिके ।
जन्मभे भिन्ननाडिस्थे यदि प्रेमसुखप्रदः ॥

इति । केचित् गोदावर्या दक्षिणतो नाड्यैक्यदोषो नास्तीत्याहुः—

गोदावरीदक्षिणतो यावच्च मलयानिलः ।
त्यजन्ति तेषु देशेषु नाड्यैक्यं न करग्रहे ॥

इति । अथैतत्पण्यस्त्रीविषयम्; यतो वेश्याभृत्यग्रामादीनां व्यत्यस्तमेतत् । तथा च पद्धतौ—

वेश्या वा भृतको मित्रं ग्रामं देशं पुरं तथा ।
एकनाडीगतौ यत्र तत्र विद्यान्महासुखम् ॥

इति । अथ वेधयोगमाह—

**गेहारम्भनिषिद्धवेधविरहः श्लाघ्योऽत्र जन्मर्क्षयोः तद्वर्गक्रमतः फलं विदधते वैधव्यमर्थक्षयम् । नानादेशपरिभ्रमव्यसनितां मृत्युं च पुत्रक्षयं वेधाः कण्ठकटीपदद्वयशिरःकुक्ष्युद्भवाः संज्ञया ॥ २४ ॥**

अत्र वधूवरयोगे तज्जन्मर्क्षयोः प्राग्दोषाध्याये "धातृश्रीनाथरुद्रानिलरविवरुणा" इत्यादिपञ्चवर्गात्मको यो वेध उक्तः तद्-

भावः श्लाघ्यः—पूज्यः; सुतधनादिफलप्रद इत्यर्थः। अथ यदि तज्जन्मर्क्षयोः स वेधदोषस्संभवेत् । स च तिर्यगूर्ध्वालिखितपञ्च-षड्रेखाभिः साग्राभिः कल्पितशिरःकण्ठकुक्षिकटिपादाख्यपञ्चाङ्गः। तेषूर्ध्वाधः क्रमन्यस्तभचक्रः। तत्र तज्जन्मभे यद्येकांशे भवतः ततो वेधस्स्यात् । तत्र यथोक्तक्रमेण कण्ठाद्यङ्गभगततारावेधा वैधव्यादीनि फलानि कुर्वन्ति। तद्यथा—कण्ठगतरोहिण्यादिभवर्गवेधो वध्वा वैधव्यं विधत्ते। कटिगतभरण्यादिभवर्गवेधो धनक्षयम्; पदस्थाश्विन्यादिभवर्ग-वेधो नानादेशपरिभ्रमणादि व्यसनयोगम्। शिरोगतमृगशीर्षादिभत्रय-वेधो वधूवरयोर्मरणम् । जठरगतकृत्तिकादिभवर्गवेधः प्रजाहानिम्। इति। अत्र गुरुः--

अत ऊर्ध्वं स्थिते रेखाद्वन्द्वानां त्रितयेऽथ वा।
द्वन्द्वानां शिरसो योगे तिर्यक् पञ्चारिरेख(या)योः॥
संयोगे वामतश्चोर्ध्वमश्विन्यादि क्रमान्न्यसेत्।
तिर्यग्रेखासु दम्पत्योः तारायोगो न शोभनः॥
उत्तमाङ्गस्थनक्षत्रे वैधव्यं तु प्रजायते।
गलोदरकटीपादरेखासु यदि संपतेत् ॥
वैधव्यमनपत्यत्वं नैस्स्वं देशान्तरभ्रमम्।
एकरेखाफलं चैवमन्यरेखासु शोभनम् ॥

इति। अयं रज्जुयोगः; प्रागुक्तो नाडीयोग इत्यन्ये। केचित् रज्जु-योगमन्यथाऽऽहुः; यथा—

आग्नेयात्पैतृकान्मैत्राद्वारुणाच्च त्रिकं त्रिकम्।
ऐन्द्रादिषु महादिक्षु त्रिकादेकं तदन्तरम्॥

शेषाश्च क्रमशः कोणे प्रदक्षिणगतिक्रमात
एकरज्जुर्भवेत् प्रत्यक् वधस्स्यादन्तरेऽपि वा ॥
भिन्नरेखागते नैव नक्षत्रे वेधिते तयोः ।
दम्पत्योरशुभो वेधे शुभदो वेधवर्जिते ॥

इति । राशीशमैत्र्यां सत्यां रज्जुदोषोऽपि न दुष्यति । यथाऽऽहुः—

न रज्जुदोषो नगणो न जातिः
षडष्टकः पञ्चनवश्च राशिः ।
एतांस्तु दोषान् हरते समस्तान्
यद्यस्ति कोचिद्ग्रहमैत्रमेकम् ॥

इति । ग्रहमैत्र्यां सत्यामपि शिरःकण्ठरज्जुवेधो वर्ज्य इत्येके—

स्त्रीराक्षसं कण्ठशिरस्स्थरज्जुं
द्विद्वादशं चाथ षडष्टकं च ।
राशीशमैत्रेऽपि विवर्जयन्ति
प्रायेण दोषश्रुतिगौरवेण ॥

इति । एवमेते दशयोगा उक्ताः । अथ लिङ्गयोगमाह—

**पुंल्लिङ्गे पुरुषोऽङ्गना यदि वधूः क्लीबर्क्षजाता क्रमात् स्यादत्युत्तममुत्तमं च नितरां कष्टं च तद्व्यत्यये । दृष्टं सङ्गमनं तयोः पुनरुभौ यद्येकलिङ्गोद्भवौ मध्यं पुंसि नपुंसके यदि वधूस्त्रीत्वेऽन्यथा निन्दितम् ॥ २५ ॥**

पुमान् पुन्नामभे स्त्री स्त्रीसंज्ञर्क्षे क्लीबर्क्षे वा यदि स्यात् तयोः स्त्रीपुंसयोः सङ्गमनं योगः क्रमादत्युत्तममुत्तमं च स्यात् ।

तद्वैपरीत्ये पुंसः स्त्रीत्वे स्त्रियाः पुंस्त्वे अतिकष्टम् । पुंसः क्लीबत्वे स्त्रियाः पुंस्त्वे कष्टं स्यात् । अथ पुनरुभौ स्त्रीपुंसौ पुंस्त्वे स्त्रीत्वे क्लीबत्वे वा एकस्मिन्नेव स्तस्तदा कष्टमेव । पुंसः क्लीबत्वे वध्वाः क्लीबत्वे मध्यम् । अन्यथा—पुंसः स्त्रीत्वे स्त्रियाः क्लीबत्वे निन्दितं कष्टं मेलनं स्यात् । अत्र गुरुः—

पुंसः पुँल्लिङ्गतारा चेत्स्त्रियाः स्त्रीलिङ्गभं यदि ।
उत्तमोत्तममादिष्टं ब्रह्मणा दम्पती विधौ ॥
विपरीतेऽधमः प्रोक्तः मध्यमस्त्वन्यथा यदि ।
नपुंसके च नक्षत्रे स्त्रीपुल्लिङ्गभयोर्युते ॥
दम्पत्योर्यदि नक्षत्रे उत्तमाधममध्यमे ।

इति । जातियोगमाह द्वाभ्याम्—

**क्रमाद्द्विजक्षत्रियवश्यशूद्रा वर्णानुलोमप्रतिलोमजौ च । ऋक्षाणि दस्रप्रभृतीनि षट् षट् भाद्वत्रयं विप्रनरेन्द्रवैश्याः ॥ २६ ॥ संयोगो वरयोषितोरतिशुभस्स्यादेकजात्युत्थयोः श्रेष्ठश्चोत्तमजातिजो यदि पुमान् स्त्री हीनजात्युद्भवा । कष्टा तद्विपरीतता यदि भवेन्मध्योऽनुलोमोद्भवैः स्त्रीपुम्भिः प्रतिलोमजैश्च न शुभो वर्णोद्भवानां क्वचित्॥२७॥**

विप्राद्युत्तमवर्णजेन पुरुषेण क्षत्रियादिहीनवर्णजायां स्त्रियामुत्पादितोऽनुलोमजः—मूर्धावसिक्तादिः । क्षत्रियादिहीनवर्णजेन विप्राद्युत्तमजायामुत्पादितः प्रतिलोमजः—सूतादिः । विप्रादितः प्रति-

लोमजान्ताः षट् जातयः क्रमादश्विन्यादिषण्णक्षत्राणि स्युः । एवं पुनर्वस्वादीनि षट् । तथा हस्तादीनि मूलादीनि च ततः पूर्वाभाद्रादीनि त्रीणि भानि विप्रक्षत्रियवैश्याः स्युः । अत्र विप्राद्येकजातिनक्षत्रजयोः वरवध्वोर्योगोऽतिशुभः । पुमान् विप्राद्युत्तमजातिनक्षत्रजः स्त्री क्षत्रियादिहीनजातिनक्षत्रजा यदि स्यात् तयोरपि योगश्श्रेष्ठः । अथ पुमान् हीनजातिजः वधूरुत्तमजातिजा स्यात् तयोर्योगः कष्टः । चतुर्वर्णोद्भवानां स्त्रीपुंसामनुलोमजैः योगो मध्यः । स च यदि पुमान् विप्रः स्त्री अनुलोमजा श्रेष्ठः । अन्यथा मध्यमः । चातुर्वर्णिकानां प्रतिलोमजैर्योगः क्वचिन्मध्यः क्वचित्कष्टः ; अथ मर्थ —पुमान् प्रतिलोमजश्चेत्कष्टः । स्त्री प्रतिलोमजा यदि मध्यः । अत्र गुरुः—

अश्विन्यादिषु षट्तारा ब्राह्मणाः क्षत्रिया विशः ।
शूद्रोऽनुऽलोमजातिश्च प्रतिलोमाः क्रमादमी ॥
पुनः पुनर्वस्वाद्यास्स्युष्षट्षट्तारास्त्रियो हरे ।
अजैकपादतस्तिस्रस्तारास्त्रैवार्णिका अपि ॥

एवं जातिविभागेऽस्मिन् नक्षत्रे दम्पतीरिते ।
एकजातिषु संयोगश्शुभस्स्यादुत्तमोत्तमः ॥
आनुलोम्येन संयोगा भिन्नजातिषु मध्यमाः ।
प्रातिलोम्येऽधमा योगा जातियोग उदाहृतः ॥

इति । अन्ये स्त्रीपुंसजन्मराशिभ्यां जातियोगमाहुः ; तथा च नारदः—

पुंराशिवर्णास्स्त्रीराशौ समा हीनेऽथ वा शुभाः ।

इति । अन्ये जन्मराशीशग्रहाभ्यां जातियोगमाहुः ।

पक्षियोगमाह—

**भारुण्डजः पिङ्गळकाकताम्रचूडाः शिखण्डीति खगाः क्रमेण । बाणाङ्गतर्केष्विषुसङ्ख्यभानां श्रेष्ठं द्वयोरेकविहङ्गमत्वम् ॥ २८ ॥**

पिङ्गळः—उलूकः । ताम्रचूडः—कुक्कुटः । दस्रप्रभृतीत्यनुवर्तते । अश्विन्यादिपञ्चकषट्षट्पञ्चपञ्चभानां भारुण्डादयः पञ्च पक्षिणः क्रमात् भवन्ति । तेषु स्त्रीपुंसयोर्द्वयोः एकपक्षित्वं श्रेष्ठम् । भिन्नपक्षित्वं मध्यमम् । पक्षिशत्रुत्वं वर्ज्यमित्यर्थसिद्धिम् । अत्र गुरुः—

भारुण्डः पिङ्गलः काकः कुक्कुटश्च मयूरकः ।
दस्रात् पञ्चाङ्गषट्पञ्चाशरताराः क्रमात् स्मृताः ॥
मध्यमं जन्मनक्षत्रे पक्ष्यन्तरदिने यदि ।
अशोभनोऽरिसंयोगः पक्ष्यैक्ये शोभनं द्वयोः ॥

इति । अत्रिश्च—

पक्ष्यैक्ये शुभदो योगः काकोलूकं परित्यजेत् ।

इति । केचिदेवमकारादिपञ्चस्वरयोगमपि कल्पयन्ति । यथोक्तं गुरुणा—

एषां पञ्च स्वराश्चैवमकाराः कल्पिताः क्रमात् ।

इति । नपपतिः—

एकस्वरे भवेत्साम्यं द्वितीये मध्यमो मतः ।
तृतीयः पोषको ज्ञेयः वर्ज्यस्तुर्योऽपरोभयम् ॥

इति । गोत्रयोगमाह—

**दस्रादिकानामृषयो मरीचिरश्रेष्ठो वसिष्ठो मुनिराङ्गिराश्च । अत्रिः पुलस्त्यः पुलहः क्रतुश्च क्रमेण**

**भानामभिजिद्युतानाम् ॥ २९ ॥ एकर्षिगोत्रोद्भवयोर्विपत्तिं करोति कन्यावरयोर्विवाहः । विभिन्नगोत्रोद्भवयोः श्रियं च स्वजन्मगोत्रैक्यमपीह जह्यात् ॥ ३० ॥**

अश्विन्यादीनां साभिजितामष्टाविंशतिभानां मरीच्यादयः सप्तर्षयः क्रमेण गोत्रप्रवर्तका भवन्ति । तेषु कन्यावरौ द्वौ यद्येकर्षिगोत्रजौ स्तः तदा विवाहो विपत्तिं—नाशं करोति । अथ भिन्नर्षिगोत्रजातयोः श्रियं—संपदं करोति । तथा च गुरुः—

मरीचिश्च वसिष्ठश्च साङ्गिराश्चात्रिरेव च ।
पुलस्त्यः पुलहश्चैव क्रतुश्च मुनयः क्रमात् ॥
अश्विन्यादिषु तारास साभिजित्सु विधानतः ।
चतुर्भिर्मण्डलैर्योज्या मुनयो गोत्रयोगतः ॥
एकगोत्रे भवेन्नाशो भिन्नगोत्रे शुभावहः ।
स्त्रीपुंसोर्जन्मनक्षत्रे संयुक्ते यदि वृत्रहन् ॥

इति । प्रकारान्तरेण गोत्रयोगमाह—स्वजन्मगोत्रैक्यमपीह जह्यादिति । अत्र जन्म—अभिजननम् । इह—विवाहे । स्त्रीपुंसयोः स्वपित्रभिजननभगोत्रयोरैक्यं वर्जयेत् । तयोः भिन्नत्वं श्रेष्ठम् । अयमर्थः—कन्यावरयोः विभिन्नपितृसंबन्धिगोत्रयोर्विवाहः । समानगोत्रयोराविवाह इति । तथा च स्मृतिः—

सप्तमात पञ्चमादर्वाग्बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा ॥

इति । अथ यदा "भजन्मगोत्रैक्यमपीह मध्यम इति पाठः । तदाऽयमर्थः—स्त्रीपुंसयोरेकाभिजननगोत्रयोः विवाहो विनाशकृत् । अने-

काभिजननगोत्रयोः शुभप्रदः। अत्राभिहितस्वजन्मर्क्षमुनिगोत्रयोरैक्यं यदि स्यात् मध्यो गोत्रयोगः इति। अथ भूतयोगमाह—

**अश्वादिकाश्शररसेषुरसेषुसंख्याः ताराः क्रमात् क्षितिजलाग्निमरुत्खरूपाः। अर्कादिराशिवशगानि वदन्ति केचित् तेजोऽम्बुवह्न्यवनिखाम्ब्वनिलात्मकानि॥ ३१॥ भूतैक्यमाहुश्शुभदं विवाहे वह्न्यम्बुयोगस्तु विवर्जनीयः। वह्नेः समीरेण भुवस्तु सर्वैः योगश्शुभोऽन्यैर्गगनस्य मध्यः॥**

अश्विन्यादिकाः पञ्च षट् पञ्च षट् पञ्चसङ्ख्यास्ताराः क्रमात् पृथिव्यादिपञ्चभूतात्मका भवन्ति। तथा च गुरुः—

> पृथिव्यापस्तथा तेजः पवनाकाशभूमिकाः।
> तारा बाणर्तुपञ्चर्तुभूताख्यास्तुरगादिकाः॥

इति। अन्ये सूर्यादिराशिगतानि प्रतिराशि सपादद्वयात्मकतया स्थितानि भानि तेज आद्यात्मकानि वदन्ति। तद्यथा—सूर्यराशिगतं सपादभद्वयं तेजोरूपं। चन्द्रराशिगतं जलरूपमाहुः। भौमराशिगतं सपादद्वययुगळं वह्निरूपं। बुधद्विराशिगतं पृथिव्यात्मकम्। गुरुद्विराशिगतमाकाशात्मकम्। शुक्रद्विराशिगतमम्ब्वात्मकम्। मन्द द्विराशिगतं वाय्वात्मकमाहुः। सूर्यादिराशयो वह्न्यात्मका इत्यर्थः। सूर्यादीनां वह्न्यात्मकत्वात् तदाश्रयास्तदात्मका इत्युक्तम्। अत्र सूर्य सिद्धान्ते—

> अग्नीषोमौ भानुचन्द्रौ भूतान्यङ्गारादयः।

इति । वराहमिहिरोऽपि—

शिखिभूखपयोमरुद्गणानां
वशिनो भूमिसुतादयः क्रमेण ॥

यत्पुनर्विधिरत्ने—

सूर्यस्य पुत्रो भूमिस्स्यात् कुजोऽग्निर्वित्सदागतिः ।
गुरुचन्द्रौ जलं जीवः खमेषां भवनं तथा ॥

इत्युक्तम् । तच्चिन्त्यं, बहुमतविरोधात् । अत्र दम्पत्योर्जन्मताराया: जन्मराश्योर्वा भूतैक्यं शुभम् । भिन्नभूतत्वे वह्न्यम्बुयोगो वर्ज्यः महावैरत्वात् । वह्निवायुयोगश्शुभः । भूमेः जलादिभिर्योगोऽपि शुभः। मध्य इत्यन्ये । तुशब्दात् वाय्वम्बुयोगो मध्य इति ज्ञेयम् । आकाशस्यैवान्यैरग्न्यादिभिर्योगो मध्यमः ।

दम्पत्योर्जन्मनक्षत्रे भूतैक्ये शोभनं द्वयोः ।
भिन्नभूतं समं धात्र्या आकाशो मध्यमोऽन्यगः ॥

इति । अत्रिश्च—

"वैरं जलाग्नि वाय्वम्बु मध्यमं शेष उत्तमम् ।

इति । उक्तयोगानां प्राबल्यमाह—

**माहेन्द्रयोनिदिनराशिगृहेशयोगाः सामान्यतोऽधिकबलाः कथिता दशभ्यः । अन्ये तु मध्यमबला मुनिगोत्रयोगाः श्रेष्ठो द्विजस्य तु परस्य तु राशियोगाः ॥ ३३ ॥**

उक्तेषु पञ्चदशसु योगेषु राशिवश्यादिभ्यो दशभ्योऽपि माहेन्द्रादय. पञ्च सर्वेषां सामान्येनाधिकबलाः । अन्ये दश वश्यादयो

मध्यमबलाः । तुशब्दादन्ये शास्त्रान्तरोक्ताः केचिद्योगिनीयोगाः बलाधिका इति ज्ञेयम् । वश्यादिषु गोत्रयोगोऽपि द्विजानामतिबलः । परेषां—शूद्रादीनां राशियोगः । तुशब्दात् द्विजानां च राशीशयोगोऽपि बलवत्तमः । यतस्तस्मिन् राशियोगे सति स्त्रीदूरक्षादयो अन्ये बहवोऽपि सन्त्येव तथा राशीशयोगेऽपि राशिगुणादयोऽन्ये दुर्बलास्स्युरिति । एतदुक्तं भवति—

ब्रह्माणी पूर्वदेवानामश्विन्याद्यष्टमं क्रमात् ।
आश्लेषाद्यं पुनस्तद्वत् मैत्राद्यं पुनरेव च ।
वारुणाद्यं क्रमादेव वैष्णवी पौष्णभाधिपाः ।
एवं योगिनिसंयोगे योगिन्यैक्ये सुशोभनम् ।
अन्ययोगिनिसंयोगे विनाशस्स्यान्न संशयः ।

इत्युक्तोऽयं योगिनीयोगो नवाष्टषट्तारादीनां योगे सति शुभो भवत्येव । तस्मिन्नसत्यशुभः स्यात् । आययोगस्तु—

अश्विन्याद्यष्टके भानां ध्वजाद्यष्टौ क्रमादायः ।
पुनर्ध्वजस्तथाऽऽश्लेषा मैत्रंवारुणमेव च ॥
पौष्णस्य सारमेयस्स्यादित्यायर्क्षे विधिः क्रमात् ।
स्त्रीनक्षत्रायमित्रायपुंतारायो भवेद्यदि ॥
आययोगश्शुभः प्रोक्तः शत्रुयोगो विनाशकृत् ।

इति । अयमपि दिनस्त्रीदैर्घ्याद्यभावे न शुभदः । तेषु सत्सु शुभ एव संभवति । दैवयोगोऽपि—

आययोगवदुक्तो हि दैवयोगः क्रमादयम् ।
नक्षत्रदैवदिग्देव मित्रभावे शुभावहः ।
शत्रुभावे द्वयोर्नाशो दम्पत्योर्जन्मभद्वये ।

इति । देवतानां शत्रुभावे इन्द्रासुरौ शिवकालौ वह्निवरुणौ पुष्पवत्सर्पौ विष्णवसुरौ ईशविरिञ्चौ इत्यादि प्रसिद्धम् । मित्रभावश्च—अग्निवायू शिवसोमौ शक्रविष्णू सूर्याचन्द्रमसौ, त्वाष्ट्रासुरावित्यादि प्रसिद्धम् । ताभ्यामन्यदौदासीन्यमवगन्तव्यम् । अन्ये पौष्णादिषट् द्वादशनवभानि पूर्वमध्यापरयोगिनोः कल्पयित्वा स्त्रीपुंसयोगस्य फलविशेषमाहुः । तद्यथा;—

षट् पौष्णतो द्वादश शङ्कराच्च
पुरन्दराद्भानि नव क्रमेण ।
पूर्वार्धमध्यापरभागयुञ्जि
चिरन्तनैर्ज्यौतिषिकैस्स्मृतानि ॥
पूर्वभाजि यदि भे पतिः प्रियो योषितामपरभागयोगिनि ।
स्त्रीनृणामथ च मध्ययोगिनी प्रेम नूनमुभयोः परस्परम् ॥

इति । केचिदन्यथाऽऽहुः—

पश्चार्धभागयोगिषु पुरुषः प्राग्भागयोगिषु स्त्री च ।
सुखरहिता समयोगिषु त्रिवर्गसिद्धिं वदन्त्येके ॥

इति । प्रागुक्तनिमित्तानुकूल्यमेको योगः । वधूवरयोर्मनोऽनुकूलत्वमन्यः । एवमेकविंशतिर्योगा विवाहे वधूवरयोरवगन्तव्यास्स्युः । एतेषु योन्यादीनां पञ्चदशाना मुख्यत्वम् । तेषु दिनादीनां दशानां प्राधान्यम् । तेष्वपि माहेन्द्रादीनां पञ्चानां प्राबल्यम् । तथाहि—राशिशयोगे सति गणजातिरज्जुवेधादीनां दौर्बल्यम् । राशियोगे सति स्वच्चृक्षादीनां . . . . . . योगे सति भगोत्रयोगिन्यायादीनामप्राधान्यमित्येतत्सर्वेषां सामान्यम् । मुनिगोत्रद्विजातीनां तु मुनिगोत्रयोगस्यापि प्राबल्यम् । माहेन्द्रादिष्वपि [1] द्विजानां राशिशयोगः । अ-

[1] राशीशयोग इत्यन्ये तेषां राशियोगो बलवान्.

न्येषां राशियोगो बलवान् । तथाचाहुः—विप्राणां राशीशयोगः। नृपाणां गणयोगः। वैश्यानां राशियोगः। शूद्राणां योनियोगः। इति। तथाचोक्तम्;—

विप्राणां ग्रहमैत्री स्यात् क्षत्रियाणां गणोऽधिकः।
वैश्यानां राशियोगस्स्यात् शूद्राणां योनिसंज्ञकः॥

इति। एवमुक्तानेतान् वधूवरयोगान् यथासंभवमेकविंशतिं अष्टादश पञ्चदश वा अर्धाधिकान् जन्मर्क्षाभ्यां; तदज्ञाने नामर्क्षाभ्यां; मिळिताभ्यां वा विचारयेत्। अथ तयोर्योगानुकूलप्रश्ने निमित्ते च शुभे जाते शुभदिनलग्ने वरः कन्यावरणं कुर्यात्। यथाऽऽहुः सप्तर्षयः—

पृच्छानिमित्तवरणप्रदानशचिपूजनानिषेकाद्यम्।
परिणयनमङ्गलानां प्रयोगलग्नं शुभं कार्यम्॥

इति। तद्विधानं नारदेनोक्तम्—

पञ्चाङ्गशुद्धदिवसे चन्द्रताराबलान्विते।
विवाहभस्योदये वा कन्यावरणमुच्यते॥
भूषणैर्गन्धताम्बूलफलपुष्पाक्षतादिभिः।
शुक्लाम्बरैर्गीतवाद्यैर्विप्राशीर्वचनैस्सह॥
कारयेत्कन्यकागेहे वरः प्रणयपूर्वकम्।

इति। सप्तर्षिमते कन्यकालक्षणमुक्तम्—

जातकानिमित्तयुक्तां शुभलक्षणलक्षितां कुलोद्भूताम्।
वरयेत्सुतसौख्यार्थी यवीयसीमात्म(न)नः कन्याम्॥

इति—

ततः कुर्यात् पिता तस्याः प्रदानं प्रीतिपूर्वकम्।
कुलशीलवयोरूपवित्तविद्यायुताय च॥
वराय रूपसंपन्नां दद्यात्कन्यां यवीयसीम्।

इति । सप्तर्षिमतेन कन्यावरणे वसुविष्णुश्विभानि त्याज्यर्क्षाणि । आप्याद्रीत्रिपूर्वाणि शस्तानीति यवनेश्वरः—

वसुविश्वेश्वरपूर्वाहरिमैत्रचश्वानिलेषु ऋक्षेषु ।
कुर्यात्कन्यावरणं फलेक्षुसितकुसुमभृन्नियमात् ॥

इति । तदेवं विवाहमुहूर्तं स्वीकृत्याथ सुदिने स्वगृहे वामभागे विवाहार्थं मण्डपं कुर्यात् । तद्विधानप्रकारो नारदेनोक्तः—

हस्तोच्छ्रितं चतुर्हस्तैश्चतुरश्रं समन्ततः ।
स्तम्भैश्चतुर्भिस्सुश्लक्ष्णं वामभागे स्वसद्मनि ॥
समण्टपं चतुर्दिक्षु [1] सोपानैरतिशोभितम् ।
प्रागुदक्प्रवणं रम्भास्तम्भहंसशुकादिभिः ॥
वि(सु)चित्रितं चित्रकुम्भैः विविधैस्तोरणादिभिः ।
भृङ्गारुपुष्पनिकरैः वर्णकैस्समलङ्कृतम् ॥
विप्राशीर्वचनैः पुण्यस्त्रीभिर्दीप्तं मनोरमम् ।
वादित्रनृत्तगीताद्यैर्हृदयानन्दनं शुभम् ।
एवंविधं तदारोहेन्मिथुनं साग्निवेदिकम् ॥

इति । अन्ये त्वाहुः—

कन्याया वरणं शुभं रविदिने भानूदये सोग्रभे
चन्द्रे मन्ददिनेऽर्कजे तनुगते सोमे च तीक्ष्णर्क्षगे ॥
वैवाह्ये भगणे सुलग्नदिवसे कुर्याच्च दानादिकम् ।

एकस्मिन् गृहे शुभार्थमेकमेव मण्डपं कार्यम् न द्वितीयम् । क्रियासङ्करस्य प्रतिषेधात् । अत्र भृगुः—

---

[1] समं चतुर्मण्डपं च.

एकस्मिंस्तु गृहे कुर्यादेकामेव शुभक्रियाम ।
अनेकां यस्तु कुर्वीत स नाशमधिगच्छति ॥

गृहभेदेऽपि नैकदिने—

नचैकजन्मनोः पुंसोरेकाहन्येव कन्ययोः ।
नूनं कदाचिदुद्वाहे नैकदा मण्डपद्वयम् ॥

इति । नाप्येकस्मिन् वर्षे । तथाचाऽऽहुः—

एकमातृप्रसूतानामेकस्मिन् वत्सरे सुधीः ।
मौञ्जीबन्धं विवाहं च व्रतबन्धं न कारयेत् ॥
भ्रात्रोर्द्वयोस्तथा स्वस्त्रोः भ्रातृष्वस्त्रोर्युगे तथा ।
समा नापि क्रिया कार्या मातृभेदे तथैव च ॥

अन्ये त्वाऽऽहुः—

पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्र(द्व)यम् ।
न कुर्याद्व्रतमुद्वाहं मङ्गले नाऽप्यमङ्गलम् ॥
विवाहस्त्वेकजन्यानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥

इदानीं विवाहयोग्यनक्षत्रादीन्याह—

**ज्योतिश्शास्त्रविशारदैर्निगदिताः पाणिग्रहे रोहिणीस्वातीपौष्णनिशेशनैरृतमघास्सावित्रमित्रोत्तराः । देशाचारबलेन नैरृतमघे केचिद्विदुर्मध्यमे स्त्रीजन्मत्रयमाहुरत्र शुभदं पुंवत् परास्तारकाः ॥ २४ ॥**

पाणिग्रहे विवाहे रोहिण्यादीन्येकादशनक्षत्राणि शुभानि । अन्यानि षोडश वर्ज्यानि ।

अत्र वसिष्ठः—

मखामृगशिरोहस्तस्वातीमूलानुराधभे ।
रेवत्यामथ रोहिण्यामुत्तरेषु तथा त्रिषु ॥
अनुकूले तु नक्षत्रे विवाहं कारयेत् बुधः ।
इतरेषु च ऋक्षेषु न कुर्याच्च विचक्षणः ॥

इति । प्रतिनक्षत्रं फलमुक्तं शौनकादिभिः—

अश्विन्यां धनरहिता सार्धं दयितेन दुःखिता त्वसती
देशान्तराणि गत्वा विनाशमायाति रोगार्ता ॥

यावज्जीवमेतत्फलम्—

याम्ये वित्तविहीना वैधव्यं प्राप्नुयात्तृतीयेऽब्दे ।
उत्सृष्टबान्धवजना मरणं समुपैति सा क्षिप्रम् ॥
आग्नेये परिणीता कन्या धनकनकभूषणोपेता ।
भवति च भर्तुर्दयिता यदि न मृता सप्तमे वर्षे ॥

षड्भिर्वर्षैर्विधवा वा—

प्राजापत्ये सुभगा भर्तृप्रियकारिणी सुखोपेता ।
प्राप्नोति पुत्रलाभं समतीते पञ्चमे वर्षे ॥
कन्या मृगशिरसि शुचिः प्रियंवदा भर्तुरनुकूला ।
वीरप्रजा गुणवती बन्धूनामर्चनीया च ॥

त्रिभिर्वर्षैः फलम्—

आर्द्रायां परिणीता दुःखयुता पापकृद्भवेत्कन्या ।
अन्ये वदन्ति वर्षाद्वैधव्यं याति म्रियते वा ॥
आदित्ये रोगार्ता वर्षत्रितयेन मृत्युमाप्नोति ।
नो चेत्पतिसन्त्यक्ता दासीत्वं याति नियमेन ॥
पुष्योढा वैधव्यं प्रयाति पतिवर्जिताऽथवा म्रियते ।
कृपणा गुरुविद्विष्टा ससपत्ना बन्धकी भवति ॥

चतुर्भिर्वर्षैः फलम्—

आश्लेषास्वप्यूढा कन्या पितृघातिनी दुराचारा ।
बन्धुस्वजनविहीना कुलटात्वं याति वा क्षिप्रम् ॥

सप्तभिर्वर्षैः फलम्—

पैत्रे पाणिगृहीता कन्या सुभगा सुतान्विता सुसुता ।
सहचारिणी च नित्यं भर्तुर्धर्मार्थकामानाम् ॥

पञ्चभिर्वर्षैः फलम्—

आर्यम्णे भोगयुता भर्तुः प्रियकारिणी सुखोपेता ।
विगतामयशोका स्यात्कन्या वर्षद्वयेऽतीते ॥
भाग्ये दौर्भाग्यवती मृतप्रसूतिश्च पञ्चमे वर्षे ।
दासीत्वं मरणं वा स्वयमेति विवर्जिता पत्या ॥
हस्ते समधीतकला पत्युर्दयिता मुदाऽन्विता दक्षा ।
विविधारम्भाप्तफला स्वगुरुकुलस्यार्चने निरता ॥

द्विवर्षात्फलम्—

त्वाष्ट्रे ग्रहाभिभूता मरणं समुपैति सोज्झिता पत्या ।
बन्धुस्वजनवियुक्ता दासीत्वं वा समायाति ॥

वर्षात् फलम्—

स्वातौ समस्तबान्धवपूज्या सुभगा मनोऽनुगा पत्युः ।
भवनाधिपत्ययुक्ता सर्वजनश्लाघनीया च ॥

मासेन फलम्—

ऐन्द्राग्ने परिणीता कन्या रोगान्विता निस्स्वा ।
अन्यं पतिविभ्रष्टा श्रयति पतिं पञ्चमे वर्षे ॥
मैत्रे निपुणा साध्वी पतिप्रिया धर्मसंयुता सुभगा ।
बहुपुत्रभृत्यबान्धवसमन्विता हर्षमुपयाति ॥

चतुर्भिर्वर्षैः फलम्—

ऐन्द्रे पतिना सार्धं दुःखान्यनुभूय कन्यका दशमे ।
वर्षे सा वैधव्यं समेति नोचेन्मृता नवमे ।
मूले पत्युर्दयिता प्रचण्डशीला विशीर्णारिपुपक्षा ॥
पत्युः कालान्तेतरि धनधान्यविवर्धिनी भवति ।

एकादशभिर्वर्षैः फलम्—

आप्येऽप्यसाधुवृत्ता नित्योद्विग्ना विवर्जिता पुत्रैः ।
प्रोज्झ्य पतिं निजमन्यं गृह्णाति नरं द्वितीयाब्दे ॥
विश्वेश्वरे धनाढ्या भर्तृसुखार्थावहा भवति ।
कीर्त्यन्विता सुशीला बहुभृत्या बन्धुमान्या च ॥

अष्टाब्दैः फलम्—

श्रवणे दुष्टाचारा कन्या नैकत्र परिणीता ।
शस्त्राद्वा मृत्युमुखं प्रयाति वर्षद्वयेऽतीते ॥
आसुरं त्वाष्ट्रभेऽपि स्यात् पैशाचं श्रवणे भवेत् ।

इति । ज्योतिषार्णवे—

वसुदेवे परिणीता कतिचिद्वर्षाणि वा भवति वश्या
शीलविहीना च पुनः कुलद्वयं नाशयत्येके ॥

चतुर्भिर्वर्षैः फलम्—

वारुण ईर्ष्यायुक्ता मद्यामिषतत्परा विगतलज्जा ।
कन्या विहाय शीलं मृत्युमवाप्नोति सलिलाच्च ॥

वर्षेण फलम्—

आजैकपदे क्रूरा निश्शौचा दुर्भगा विशीला च ।
दारिद्र्यवती नित्यं विधुरा वा जायतेऽवश्यम् ॥

त्रिभिर्वर्षैः फलम्—

आहिर्बुध्न्ये कन्या परिणीता मानिनी पतिविधेया ।
बहुकनकभूषणाढ्या यशस्विनी वीरजननी च ॥

अष्टाब्दैः फलम्—

पौष्णे सौभाग्यवती मृदुस्वभावाऽतिमानिनी धन्या ।
बहुधनवती च नित्यं भवति च कन्या चतुर्थेऽब्दे ॥

इति । अत्र केचित् चराद्यंशं फलपाककालमाहुः—

सदसत्फलस्य पाकः चरांशके षड्भिरेव वर्षैः स्यात् ।
वर्षत्रयात् स्थिरांशे द्विशरीरांशे फलं मासात् ॥

इति । पापाद्यनुक्रमेषु विवाहो वर्ज्य एव । यत उक्तम्—

कृत्तिका च भरण्यार्द्रा तिष्याश्लेषा पुनर्वसुः ।
अत्र पाणिग्रहं कृत्वा विधवां तां विनिर्दिशेत् ॥
चित्रा ज्येष्ठा विशाखासु पूर्वा योगास्त्रयस्तथा ।
अत्र पाणिग्रहं कृत्वा महाविघ्नं भविष्यति ॥
वारुणे वसुदैवत्ये श्रवणे वाऽश्विदैवते ।
अत्र पाणिग्रहं कृत्वा न सा भर्तरि तिष्ठति ॥
[1]अलाभे वा (?) वदत्येषु विवाहं प्रतिपद्य तु ।
दाम्पत्यं तु भवेन्नित्यं कृष्णाहिनकुलोपमम् ॥

इति । उक्तर्क्षेष्वपि शलाकादिवेधदुष्टं त्याज्यम् । तत्र एको वेधः प्रागुक्तः । अन्यः पट्टकालाख्यः शास्त्रान्तरोक्तो यथा—

प्रागादिदिक्षु सूर्यर्क्षात्प्रविशद्भत्रयं लिखेत् ।
मध्ये चैकं ततस्त्रीणि निर्गमेन विदिक्षु च ॥
साभिजित्कमिदं चक्रं पट्टकालसमाह्वयम् ।

1 अलाभेवाद्यतेषु

विवाहे चन्द्रसंयुक्तनक्षत्रेण फलं वदेत् ॥
पूर्वेण सततं लक्ष्मीराग्नेये स्त्रीकुलक्षयः ।
दक्षिणे पुत्रशोकाप्तिर्नैरृतौ पुत्रसंपदः ॥
पश्चिमे विधवा नारी वायव्ये परगामिनी ।
उत्तरे बहुपुत्रा स्यादीशे पुत्रार्थसुव्रता ॥
मध्ये कुलक्षयकरी फलमेतन्न चान्यथा ।
तस्मात्सर्वप्रयत्नेन चक्रमेतद्विलोकयेत् ॥

इति । अपि च—

त्रीणित्रीणि लिखेद्धानि ब्राह्मेन्द्रानलदिक्क्रमात् ।
सूर्यर्क्षादि लिखेच्चक्रं विवाहे लग्नभात् फलम् ॥
ब्रह्मस्थाने मृतिर्नार्याः पूर्वे लक्ष्मीर्भविष्यति ।
आग्नेये बहुदुःखानि याम्ये दासी सुभूषिता ॥
[1]मृतकन्याप्रजा भृत्या अवाच्या विधवा भवेत् ।
वायव्ये स्यात्परगामिन्युत्तरे बहुपुत्रिणी ॥
ईशे पतिव्रता नारी लग्नर्क्षेण समादिशेत् ।

इति । पूर्वं चन्द्रर्क्षस्य; इदं लग्नर्क्षस्येति विवेकः । केचित् बुधाः कोङ्कणादिदेशेषु देशाचारस्य प्रामाण्यमाश्रित्य मूलमधे मध्ये वदन्ति । मध्यत्वात् गणवत् लग्नयोगे तेऽपि ग्राह्ये अन्यथा त्याज्य इत्यभिप्रायः । अत्र विवाहे स्त्रीजन्मनक्षत्रत्रयं शुभमाहुः । परा—अन्यास्तारकाः पुंवत् । विपत्प्रत्यरनैधनवैनाशिकर्क्षाणि वर्ज्यानि । अन्यानि ग्राह्याणि । पुंस आद्यं जन्मर्क्षं नेष्टम् । अन्ये तु ग्राह्ये विपत्प्रत्यरवैनाशिकर्क्षाणि वर्ज्यानि । अन्यानि शुभानीति प्रागेवोक्तम् । अत्र गुरुः—

हित स्त्रीजन्मसु प्रोक्तो विना पुंसास्त्रिजन्मतः ।
क्रमात् भाना तु शेषाणि स्वनामसदृशं फलम् ॥

---

[1] मृतकन्याप्रजायातुह्यवाच्या

जन्मर्क्षादिषु प्रत्येकं फलमुक्तम्—

जन्मर्क्षगे प्रमुदिता भर्तारं द्वेष्टि विभवाढ्या ।
धनधान्यकनकभूषणयुक्ता संपत्करे शशिनि ॥
चन्द्रे विपत्करस्थे कलहोद्वेगाद्युद्भवः स्त्रीणाम् ।
क्षेमर्क्षे विगतभया हृदयानन्दावहा धनोपेता ॥
प्रत्यरभे शशिनि भवेत् वैरं शोकामयादिसंप्राप्तिः ।
साधकसंस्थेऽप्यचिरादाज्ञाकर्मप्रसिद्धिश्च ॥
नैधनभे धवरहिता दुःखयुता निधनमाप्नुयान्नारी ।
मैत्रे पत्युर्दयिता सुखवित्तसुतान्विता सुशीला च ॥
परमे मैत्रे सुभगा पत्युः प्रियकारिणी सुखोपेता ।
सितपक्षे चन्द्रबलात् सर्वासु बलान्विता भवात ॥

इति । यत्पुनरुक्तम्—

आधानर्क्षं शुभं प्रोक्तं दम्पत्योः परिणायने ।
कदाचित्कर्मतः पुंसां द्वयोर्जन्म न शोभनम् ॥

इति । तच्चिन्त्यं बहुमतविरोधात् । तथा हि भरद्वाजः—

विवाहं कारयेन्नित्यं युवत्यास्त्रिषु जन्मसु ।
जन्मांशादिषु सर्वेषु कन्योढा पतिवल्लभा ॥

इत्यादि बहुसंमतम् । यत्तु—

ग्रहदोषयुते कैश्चिन्न देयमिति निश्चितम् ।

इत्युक्तम् । तत्तु गौरीवयसि द्रष्टव्यम् । यत उक्तं—

गौरीवयसि चैवोक्ते ग्राहयेत् . . . . . .

यत्पुनरुक्तम्—

लग्नगतं जन्मर्क्षं निशाकराधिष्ठितं च नक्षत्रम् ।
त्याज्यं यात्रायां तत् परिणयकाले विपश्चिद्भिः ॥

इति । तत् जन्मलग्नस्यापि जन्मर्क्षसमफलत्वातिदेशपरं पुंजन्मविषयम् । चन्द्रस्तद्द्वयोः जन्मोपचयर्क्षेषु शुभः । अनुपचयर्क्षेष्वशुभः । तथाच गुरुः—

स्त्रीपुंसोरशुभर्क्षेषु दृष्टांशेष्वपि दोषहृत् ।
द्वयोरुपचये चन्द्रो जन्मर्क्षेष्वपि शोभनः ॥

इति । रत्नोऽपि—

अनुपचयस्थे चन्द्रे शुभसंस्था यदि च भास्करप्रमुखाः ।
तदपि न सुखानि विन्दति नारी सौभाग्यविभ्रष्टा ॥

इति । अन्यैः स्त्रीजन्मादिषु फलमुक्तम्—

जन्मनि चन्द्रे सुभगा चित्रज्ञा पुत्रिणी प्रणीतिपरा ।
याते द्वितीयभवनं मानार्थसुखैर्विहीना च ॥
याते तृतीयभवनं व्यपेतशोकामया स्वजनपूज्या ।
शशिनि चतुर्थे वन्ध्या बान्धवसुखवर्जिता कन्या ॥
पञ्चमगे सुतहीना षष्ठे सर्वार्थसंपदोपेता ।
सप्तमगे हिमरश्मौ कन्या सौभाग्यसंयुक्ता ॥
अष्टमगे नष्टसुखा नित्योद्विग्ना विगर्हिता सद्भिः ।
नवमे धर्मसुखोना दशमे पत्युर्विधेया स्यात् ॥
भवगे सुखधनभोगिन्यन्ते मानोज्झिता पतिद्विष्टा ।
अष्टकवर्गस्पष्टं भावाश्रयजं फलं वाच्यम् ॥
अनुपचयस्थोऽपि शशी सौम्यसुहृद्भागगश्शुभदः ।
भवति विवाहे स्त्रीणां सितपक्षे द्वित्रिकोणगतः ॥

इति । एतत् द्वयोरपि समम् ।

"चन्द्रताराबलं वीक्ष्य लग्नपञ्चाङ्गजं बलम्" ।

इति नारदवचनात् । विशेषस्तु योषितो गुरुबलं पुंसो भानुबलम् इति । तथा च नारदः—

विवाहे बलमावश्यं दम्पत्योर्गुरुसूर्ययोः ।
चेत्पूजा यत्नतः कार्या दुष्फलप्रदयोस्तयोः ॥

बृहस्पतिश्च—

कन्यकालग्नजन्मेन्द्वोः द्वादशाष्टमषष्ठगः ।
चतुर्थदशमे जीवो जन्मभ्रातृगतोऽशुभः ॥
अन्यत्र शुभदो जीवो गौरीवयसि सप्तमे ।
पुंसो भानुस्त्रिषष्ठाये शुभोऽन्यत्र न शोभनः ॥

इति । अपि च—

उत्तरायणगस्सूर्यो द्वितीयनवपञ्चगः ।
. . . . . . . शुक्लपक्षे च चन्द्रमाः ॥

इति[1] । योषितोऽपि सूर्यबलं ग्राह्यमित्यन्ये—

लब्ध्वा बृहस्पतिबलं सूर्यबलं शशिबलं च कन्यानाम् ।
कार्यस्तु विवाहविधिः निरुपहते शुभफले धिष्ण्ये ॥

इति । विवाहस्य कन्यानामुपनयनत्वात् तद्वदिहापि यथासंभवं द्रष्टव्यम् ॥ अत्रात्रिः—

"उपनीतिस्स्त्रिया एतत् वैधव्यं कर्मगे गुरौ" ।

---

1 ज्योतिषार्णवे—

जन्माष्टमरिपुस्थाने पापा वैधव्यदुःखदाः ।
शुक्रे च निधनं याति सप्तमं च धरासुते ॥
षष्ठं शुक्र व्ययं सूर्ये तृतीयं सुरपूजिते ।
गते सूर्यजनौ जन्मविशेषेण विवर्जयेत् ॥
द्वादशाब्दात्परं सर्वे सवत्र शुभदाग्रहाः ॥

इति । [इत्यधिकः]

इति। इहापि ग्रहदौर्बल्ये कालात्यये शान्तिं कृत्वा कार्यं स्यात्। तथाच वामनः—

रवौ गुरौ चाशुभगोचरस्थे
स्त्रियोऽपि पर्यस्तफलं लभन्ते।
तथाऽपि कालात्ययमाकलय्य
पूजाभिषेकैर्भविता विवाहः॥

इति। सप्तमाष्टमवर्षयोः कन्यानां गुरुबलमवश्यं ग्राह्यम्। तथाचोक्तम्—

सप्तमाष्टमयोरेव शुभगोचरता मता।

इति। ततः परं तत्कालात्यये तद्दौर्बल्येऽपि स्वर्क्षाद्यवस्थानाभावे द्वादशाब्दात्परं दौर्बल्ये सत्यपि शान्तिमन्तरेणापि विवाहः कार्यः। तत्र कालप्राबल्यात् सर्वत्रापि गुरुबलमस्त्येव, यत उक्तं गुरुणा—

सर्वत्रापि शुभं दद्यात् परं गुरुः।

इति। तत्रापि शान्तिः कर्तव्यैवेत्यन्ये।

द्वादशाब्दात्परं शान्तिं कृत्वा कन्यां प्रदापयेत्।

इति वचनात्। अन्यत्सर्वमुपनयनप्रकारेण द्रष्टव्यम्॥ गोचारबलादपि लग्नबलं प्रधानमिति रत्नः—

शशाङ्कजीवार्कबलेन केचित् विवाहमिच्छन्त्यपरे विलग्नात्।
न गोचरोक्तं हि बलं प्राधानं प्रधानमाहुर्यवना विलग्नम्॥

इति। अत्र स्त्रीपुंसयोर्जन्मलग्नयोः चतुर्थद्वादशाष्टमेभ्योऽन्यत् इष्टम्। तत्र लग्नद्वितीयतृतीयराशयः सत्रिकोणास्त्रयस्त्रयः आत्मापेक्षकपोषकसंज्ञा ग्राह्याः। चतुर्थाष्टमान्त्यराशयो वधकाख्या वर्ज्या इति। तत्र वराहमिहिरः—

आत्मापेक्षकपोषकवधका इति राशयोऽर्थतोऽभिहिताः।

दद्युश्शुभमशुभं वा निर्देश्यं जन्मलग्नाभ्याम् ॥

इति । वामदेवोऽपि—

ये छिद्रबन्धुव्ययगाः प्रसूतेर्विधोर्विलग्नाच्च वधूवरस्य ।

ते राशयः प्राप्य विलग्नरेखां भावाद्विशुद्धा अपि मृत्यवे स्युः ।

इति । एष्वपि चतुर्थद्वादशेष्वपि केचित् गृह्णन्ति । तथा च वराहमिहिरः—

चतुर्थद्वादशे लग्ने कार्ये यदि गुणान्विते ।
अष्टमं तु न कर्तव्यं यदि सर्वगुणान्वितम् ॥

इति । तत्र लग्नाष्टमे धनहानिः; जन्माष्टमे मरणमित्युक्तं सप्तर्षिभिः—

दम्पत्योर्द्वादशमं लग्नं नेष्टं तथाऽष्टमं च गृहम् ।
लग्नेन्दुस्थानाभ्यां धनापहं जीवितक्षयदम् ॥

इति । षष्ठमत्र शुभमेव । यस्मादाहुः—

कन्यास्वजन्मराशेरुपचयभवनं विलग्नभं श्रेष्ठम् ।
मृत्युश्चाष्टमभवने शेषाणि समानि भवनानि ॥

इति । यथोक्तं;—

अष्टमाब्दात्तु परतः स्वर्क्षस्वोच्चगतो यदि ।
अशुभोऽपि शुभं दद्याच्छुभदस्तेषु किं पुनः ॥

इति । अन्यत्रापि—

स्वतुङ्गराशिगो गुरुः त्रिषड्व्ययायरन्ध्रगः ।
चतुर्थकर्मगोऽपि वाऽप्यभीष्टसंपदावहः ॥

इति । विवाहलग्नयोग्यराशीनाह—

**कन्यातुलानृमिथुनान्यतिपूजितानि मध्याः**

कुलीरझषचापवृषा विवाहे । तेऽप्युत्तमाश्शुभयुता-स्सगुरुं च सिंहं कुम्भं मृगं च सासितं शुभमाहु-रेके ॥

कन्यातुलायुग्मराशयस्त्रयस्तदंशाश्च विवाहे श्रेष्ठाः । कर्किमीन-धनुर्वृषभराशयः मध्यफलाः । ते मध्यराशयोऽपि शुभैर्युक्ता उत्तम-फला भवन्ति । सिंहकुम्भमकरराशयस्त्रयः स्वाधिपतिमित्रेण शुभेन युताश्चेत् शुभास्स्युरिति केचिदाहुः । अतस्तेऽपि मध्या इत्यर्थः । उक्तं च मुहूर्तसारे—

श्रेष्ठास्तौलियमाङ्गनाझषधनुर्गोकर्किकण्ठीरवा
मध्यास्सौम्ययुतास्तथोर्ध्ववदनास्सर्वे विवाहे हिताः ॥

विधिरत्नेऽपि—

कन्यातुलावृषभयुग्ममृगेषु कुम्भे
पाणिग्रहश्शुभतमो न परत्र किञ्चित् ॥

इति । ज्योतिषार्णवे वर्णक्रमाद्राशय उक्ताः—

कर्किकन्यावृषे शुक्रे जीवे चैव विशेषतः ।
पापपूर्वे मृगे कुम्भे सिंहे च शुभसंयुते ॥
ब्राह्मणानां तु वैवाह्यं विशेषेण शुभप्रदम् ॥
मेषवृश्चिकसिंहेषु शुभयुक्तेषु भूभृताम् ।
गोकुम्भयोर्बुधे युक्ते वैश्यानां च तथैव च ॥
शूद्राणां चापमकरकर्कटेषु तथैव च ।
वणिग्भागेऽपि सौख्यं स्यात् दम्पत्योः परिणायनम् ॥

इति । नारदोऽपि—

शुभेक्षितयुताश्शस्ता उद्वाहेऽखिलराशयः ।

इति । यद्यपि नारदेन शुभदृष्टियुतास्सर्वे राशयो ग्राह्या इत्युक्तम्; तथाऽपि मेषवृश्चिकौ न ग्राह्यौ 'ऋते धरणिनन्दनमन्दिराभ्याम्' इत्युक्त-त्वात् । गुरुणा प्रतिराशि फलमुक्तम्—

जारसक्ता क्रिये लग्ने गोत्रभ्रष्टा वृषोदये ।
कुलद्वयशुभा प्रोक्ता या तूढा जितुमोदये ॥
नृशंसा कुलटा कर्क्यां सिंहे वन्ध्या सकृत्प्रजाः ।
पतिश्वशुरयोः प्रीता कन्यायां सुरतप्रिया ॥
तुलोदये धनाढ्या स्याद्वृश्चिके नित्यमस्थिरा ।
कुलटा चापपूर्वार्धे प्रौढा चातिसती परे ॥
परसक्ता मृगे कुम्भे मीने दुश्चारिणी द्वयोः ।
बलिनो राशयस्सर्वे यथोक्तफलदास्सदा ॥

इति । एषामंशकेऽप्येतदेव फलम् । यत उक्तं शौनकेन—

मेषोदयांशके वा परिणीता कन्यका पतिं त्यक्त्वा ।
भुङ्क्ते पुरुषत्रितयं परिभूता सर्वलोकेषु ॥
वृषभे दारिद्र्यवती गोशीला गोहिता पराभिरता ।
मिथुनोदये तु कन्या कुलद्वयस्यार्चिता भवति ॥
कर्किण्युदयारूढे कुलटा दाक्षिण्यवर्जिता क्रूरा ।
त्यक्त्वा सा पतिभवनं प्रयाति देशान्तराण्याशु ॥
सिंहे लग्नोपगते सकृत्प्रसूताऽपि पितृगृहे कन्या ।
निवसत्यतिप्रचण्डा भर्तुश्च द्वेषिणी भवति ॥
कन्यायां पतिदयिता श्वश्रूश्वशुरप्रिया धनोपेता ।
गृहदेवतार्चनपरा मान्या स्वकुलद्वयस्यापि ॥
तौलिन्युदयोपगते सुभगा साध्वी धनान्विता सुसुता ।

सव्यवहारे कुशलाऽतुलमानकलास्वभिज्ञा च ।
लग्नेऽळिनि प्रचण्डा रोदनशीला सदा तीक्ष्णा ॥
भवति च भर्तुर्दयिता भिन्नरहस्या च नियमेन ।
उदये धन्विनि कुलटा भर्तारं प्रेष्यवत् सदा मनुते ॥
केचिद्वदन्ति सुभगां साध्वीं चैव प्रजायुक्ताम् ।
मकरोदये तु कन्या परिणीता कामतत्परा विसुखा ॥
लुब्धा न याति तृप्तिं पुरुषाणां वृद्धभावेऽपि ।
कुम्भे विलग्नयाते व्यभिचरति महाकुलेऽपि संभूता ।
स्वप्नेऽप्यालस्यवती पररन्ध्रनिरीक्षणे सक्ता ॥
मीने सौभाग्यवती प्रहसितवदनाऽन्यसक्ता च ।
नित्यं भवति च चपला न याति तृप्तिं च कामस्य ॥

इति । सर्वराशिष्वपि कन्यातुलायुग्मांशा ग्राह्या इति यवनेश्वरः—
षष्ठतौलिमिथुनांशकैश्शुभैरप्रशस्तभवनोदयेष्वपि ।
स्त्रीकरग्रहविधिः प्रशस्यते शुक्रसौम्यगुरुसंयुतेषु च ॥

इति । धनुरंशोऽप्यन्यैर्मन्यत इति श्रीपतिः—
कोदण्डतौलिमिथुनप्रमदांशकेषु
प्राप्नोति सौख्यमधिकं दयिता स्वभर्तुः ।
शेषेष्वपत्यधननीचसुखोज्झिता स्यात्
पापेऽधिकाभिभवकृत् प्रवदन्ति केचित् ॥

इति । यदुक्तम्—
द्विपाद्राश्यंशलग्नं स्याच्छुभमन्यगृहोदये ।
द्विपाद्राशेः परांशोऽपि न शुभः प्राग्विलग्नतः ॥

इति । तत् कुम्भांशादन्यांशविषयम् । अन्यत्र तेषामेव प्रशंसनात् ।

स च—

लग्नांशः स्वपतियुतस्स्यादायुस्सुतविवृद्धये पुंसाम् ।
नारीणामस्तांशस्स्वस्वामिनिरीक्षितश्चैव ॥
पश्येद्यदांशाधिपतिर्विलग्नं लग्नेऽथवा स्यादुदयांशसिद्धिः ।
अस्तांशनाथस्मरभं विलग्नात् पश्येत्तदाऽस्तांशविवृद्धिरुक्ता ॥

इति । लग्नान्मेषालिकुम्भांशा विशेषेण वर्ज्याः । ज्योतिषार्णवे—

कुम्भालिमेषभेष्वेषु युगपज्जीवशुक्रयोः ।
यदि स्यात्तं तु नेच्छन्ति सूरयोऽशेषु सर्वथा ॥

इति । स्वस्वांशयोः स्वस्वामिदृष्टियोगाभावे फलमुक्तं श्रीपतिना—

उदयगतनवांशस्स्वामिदृष्टो युतो वा
न भवति यदि मृत्युः स्यात्पुरस्ताद्वरस्य ।
परिणयसमये द्वे नैवमस्तोदयांशाः
स्वपतिसहितदृष्टो मृत्युकारी च वध्वाः ॥

इति । मेषेऽपि पापराशिष्वपि तुलाद्यंशका ग्राह्याः । राशेरंशस्य प्राबल्यात् । यदाऽऽहुः—

सर्वेषां दिवसपतिर्बलवान् तस्माच्च कालहोरेशः ।
तस्मादप्यधिकबलं लग्नं तस्मान्नवांशको बलवान् ॥

अपि च—

नवांशतो भवेल्लग्नं नवांशे वेधकल्पनम् ।
बलाबलं नवांशेऽपि दृष्टिः प्रोक्ता नवांशतः ॥

इति । विलग्ने विवाहोक्तमेव नक्षत्रं शस्तम् । तथा च गुरुः—

विलग्नस्थोऽपि नक्षत्रो विवाहे कथितश्शुभः ।
अन्ये च न शुभास्सर्वे चन्द्रनक्षत्रवच्छुभाः ॥

इति । अत्र लग्नर्क्षचन्द्रमुहूर्तर्क्षाणां त्रयाणामानुगुण्यमतिशुभम् ।

तथा च रुद्रः—

नक्षत्रवत् क्षणानां फलमुक्तं द्विगुणितं स्वनक्षत्रे ।
त्रिविधं तदेव मुनिभिर्निर्दिष्टं स्वर्क्षलग्नेषु ॥

इति । होराफलमुक्तम्—

रविहोरायां कन्या परिणीता दुर्भगा दरिद्रा च ।
शशिहोरायां सुभगा धनमानवती भवेन्नियमात् ॥

इति । द्रेक्काणद्वादशांशसप्तांशत्रिंशद्भागादिफलं वाराधिपग्रहवत् । तथा चाहुः—

द्रेक्काणो लग्नगतः शुभग्रहस्य स्त्रियः शुभं कुरुते ।
त्रिंशद्भागश्चैवं फलं च विद्याद्दिनाधिपवत् ॥

इति । मेषादिराशिगतनवांशफलमन्यैरुक्तम्—

वेश्या भ्रष्टचरित्रा सुभगा [1]वध्वन्तगा सरोगा च ।
धन्या धनिनी चपला दक्षा मेषांशकैः क्रमशः ॥
क्षुद्रा नीचोपगता कुलटाऽप्यसती विवर्जिता पत्या ।
मुदिता कुलटा क्षुद्रा धनिनी चपला च वृषभांशैः ॥
धनिनी कामाचारा भोगवती नीचगा मृतापत्या ।
विमुखा विधवा पापा प्रसन्नवदना च मिथुनांशैः ॥
परकर्मरता विधवा धर्मज्ञा भर्तुराश्रिता विधना ।
शस्तपती रोगार्ता दुष्टा विकला च कर्क्यंशैः ॥
वेश्या पुत्रविहीना सुभगा दुःखाश्रिता पतिघ्नी च ।
दक्षाऽऽढ्या निर्लज्जा पतिव्रता च सिंहांशैः ॥
पापा परोपतप्ता सुतहीना तस्करा तथा वन्ध्या ।
समुखा विमुखा दैवं सङ्क्रान्ता बहुधना च कन्यांशैः ॥

[1] वध्वन्त्यगा.

सत्यवती धनहीना धर्मवती मातुलोपगा क्रूरा ।
कामपरा भूभारा वन्ध्या दक्षा तुलांशैश्च ॥
निस्त्रिंशकरा दुष्टा मान्या सुभगा च साहसोपेता ।
धर्मज्ञा रोगाढ्या नीचा दूती च वृश्चिकांशैः स्यात् ॥
दासी विटतापसिका महाधना दुर्भगा परासक्ता ।
धर्मपरा सत्यवती निस्स्वा मान्या च चापांशैः ॥
पुंश्चल्यधना वन्ध्या बन्ध्वन्ता बन्धुवर्जिता चैव ।
सुभगा कुलटा हिंस्रा मुदाऽन्विता चैव मकरांशैः ॥
सद्वृत्ताऽऽलस्यवती कुशला क्षुद्रैर्वियुक्ता च ;
क्रोधान्विता कुलान्ता पापा सुभगा घटांशैस्स्यात् ॥
असमाप्ता रुग्ग्रस्ता समाप्तवित्ता धनान्विता प्रेष्या ।
प्राज्ञा परवेश्मरता वेश्या कुलटा च मीनांशैः ॥
द्वादशभागाश्च शुभा द्विपदां प्राप्ताश्शुभोपेताः ।
स्वस्वामिना बलवता निरीक्षितास्तत्सुहृद्भिरपि ॥

इति । भागिलश्चाह—

पञ्चभिरिष्टैरिष्टं पुष्टमनिष्टैरनिष्टमादेश्यम् ।
स्थानादिबलसमेतैः चतुर्भिरपि चोच्यते यवनैः ॥
चन्द्रादित्यौ बलिनौ शेषा यदि यत्र तत्र स्थाः ।
तत् पञ्चभिर्न शुभदं शक्यं चन्द्रार्करक्षिता कन्या ॥

केचिदाहुः—स्त्रीणां विवाहे जन्मतो युग्मोऽब्दः शुभः इति । तथाच नारदः—

युग्मेऽब्दे जन्मतस्त्रीणां शुभदं पाणिपीडनम् ।

इति । सप्तर्षिमतेऽपि—

युगवर्षे सुखसंपत्तेजोवृद्धिश्च जायते स्त्रीणाम् ।

तासां ह्यानिर्विषमे विपरीतमिदं तु पुरुषाणाम् ॥

इति ।

वित्तं बलं प्रतापं सौभाग्यं चोत्तरायणे भवति ।
याम्यायने विनाशो दम्पत्योर्भवति नियमेन ॥

इति । एतदष्टमाब्दादर्वाक् द्रष्टव्यम् । परतो नवमादिष्वयुग्मेष्वपि विवाहः कार्यः । युग्माब्दस्य विकल्पत्वात् । तथा च वराहमिहिरः—

"व्यासो वर्षमनोजमिच्छति" ।

इति । अत्र मासेषु बहूनि मतानि सन्ति । तेषु प्रसिद्धानि कानिचित् प्रागेवोक्तानि । अन्यानि यथाऽऽहुः—

उत्तरायणमासाः शुभाः इतरेभ्यः शरद्वर्षर्तुमासवर्जमिति माण्डव्याः । माघफाल्गुनवैशाखाज्येष्ठा इति देवलः । अत्र वराहमिहिरः—

. . . . . . . रैभ्योऽयनं चोत्तरं ।
स्त्रीनामानमृतुं विहाय मुनयो माण्डव्यशिष्या जगुः ॥

इति । सप्तर्षिमते—

शस्तोऽतीव ज्येष्ठो वैशाखः फाल्गुनस्तथा माघः ।
न च मार्गशिराषाढौ शुभप्रदौ देवलमतेन ॥
पौषश्रावणकार्तिकचैत्राश्वयुजाश्च भाद्रपद्युताः ।

नेष्टा इति शेषः । प्रतिमासफलमप्युक्तं यथा—

चैत्रे कामाचारा नित्यं चासक्तमैथुना ह्यसती ।
धनधान्यपरित्यक्ता दौर्भाग्यवती भवेत्कन्या ॥
वैशाखे पतिदयिता धनभोगयुताऽतिमानिनी दक्षा ।
ज्येष्ठे सुभगा धनिनी भर्तुः प्रियकारिणी भवति ॥

आषाढेऽप्यतिचण्डा निश्शौचा मानिनी सुखोपेता ।
आषाढे चैव वैशाखे द्रव्याढ्या सा वधूर्भवेत् ॥

इति । वसिष्ठः—

श्रावणमासे विधवा पुत्रधनैर्वर्जिता भवति ।
भाद्रपदे दुश्शीला मृतप्रजा पतिविवर्जिता चैव ॥
आश्वयुजेऽप्यतिवक्रा परकर्मरता मृतसुता च ।
कार्तिकमासे तीक्ष्णा शोकपरा धनवती पतिप्रेष्या ॥
पौषे कार्तिकमासे च सुव्रता सा भवेत् (?) ।

इति वसिष्ठः ।

मार्गशिरे कलहपरा परगृहनिरता सुखार्थवती ॥
पौषे निरहङ्कारा सोन्मादा पतिविवर्जिता चैव ।
माघे सच्छीलवती पतिव्रता पुत्रिणी धनोपेता ॥
फाल्गुनमासे दक्षा सुतसुखसौभाग्यसंपदोपेता ।
भवति समाक्रान्तपरा कन्या वर्षत्रयेऽतीते ॥

इति । सौरमासमाश्रित्य विवाहे वर्ज्यमासाः अत्रिणोक्ताः—

चापकर्कटकस्त्रीषु गतेऽर्के न विवाहयेत् ।
तुलासिंहे त्यजेदर्के विवाहं सिंहगे गुरौ ॥

इति । कुम्भमासेऽपि श्रेष्ठ इत्यन्ये । तथा च श्रीपतिः—

मेषोक्षवैणिकमृगाननकुम्भसंस्थे
प्रद्योतने करतलग्रहणं प्रशस्तम् ॥

इति । एवं स्थिते तत्र गुरुणा व्यवस्था उक्ता—

कदाचित्कुम्भमासेऽपि वर्ज्यं गुरुदृगुज्झिते ।

इति । इदमत्रागतम्—मेषवृषभयुग्ममकराश्चत्वारश्श्रेष्ठाः । कीटकुम्भमीनास्त्रयो मध्याः । अन्ये पञ्च त्याज्या इति । यत्तु चाप-

मीनयोरर्के सिंहे गुरौ च विवाहादि त्याज्यमिति । तत्तु नर्मदाया उत्तरत एव देशेषु न दक्षिणेष्वित्याहुः । तथा च ज्योतिषार्णवे—

रविराशिगते जीवे जीवराशिगते रवौ ।
विवाहादि न कर्तव्यं नर्मदायास्तथोत्तरे ॥
नर्मदोत्तरभागे तु सिंहस्थे देवमन्त्रिणि ।
विवाहादि न कर्तव्यं नायं दोषस्तु दक्षिणे ॥

अन्यत्र—

नर्मदा (स्मामि)? स्वामिपर्यन्तं सिंहस्थे च बृहस्पतौ ।
प्रवेशं च प्रतिष्ठां च विवाहं च न कारयेत् ॥

अन्ये त्वाहुः—

नीचारातिगते जीवे भौमे चन्द्रे तथा भृगौ ।
जिते च सप्तमस्थाने विन्ध्यदक्षिणतश्शुभम् ॥
नीचक्षेत्रगते जीवे शत्रुक्षेत्रगते तथा ।
दशमासेषु दोषस्स्यादत ऊर्ध्वं शुभप्रदम् ॥

इति—

. . . . . . . . . . . विष्णुस्वापे विवर्जयेत् ।

तथा च वराहमिहिरः—

हरौ प्रसुप्ते न च दक्षिणायने न चैत्रमासे न च पुष्यसंज्ञिते ।
तिथौ च रिक्ते शशिनि क्षयं गते रवीन्दुभौमार्किदिनेषु चाशुभम् ॥

इति । एतत्फलमुक्तं सप्तर्षिमते—

वित्तं बलं प्रतापं सौभाग्यं चोत्तरायणे भवति ।
याम्यायने विनाशो दम्पत्योर्भवति नियमेन ॥

दक्षिणायनेऽपि देवस्वापमासा निन्द्यतमाः; तथा च नारदः—

अप्रबुद्धो हृषीकेशः यावत्तावन्न मङ्गलम् ।

इति । देवस्य स्वापप्रबोधकालोऽप्याषाढसितद्वादश्यादिकार्तिकसित-द्वादश्यन्तः । तथा च स्मृतिवाक्यम्—

विष्णुश्शेते तथाऽऽषाढे भाद्रे च परिवर्तते ।
कार्तिके प्रतिबुध्येत शुक्लपक्षे हरेर्दिने ॥

इति । तत्र म्लेच्छानामेव विवाहः । तथा च सप्तर्षिमते—

कुरुतश्शिशिरवसन्तौ श्रियमोजो हि द्विजातिमुख्यानाम् ।
वैश्यक्षत्रिययोरपि धनप्रतापावहो ग्रीष्मः ॥
शूद्राणां हेमन्तः शिशिरो धनधान्यसंपत्त्यै ।
वर्षासु म्लेच्छानां परिणयनं शुभकरं भवति ॥

इति । पक्षफलं च तत्रैवोक्तम्—

सितपक्षः शुभफलदः स्त्रीणां धनधान्यवृद्धिदो भवति ।
नाशाय कृष्णपक्षः शस्तो वा पञ्चमीं यावत् ॥

इति । वराहमिहिरः—

श्रेष्ठं पक्षमुशन्ति शुक्लमसितं चान्त्यत्रिभागं विना ।

तिथीनां फलं च प्रत्येकं तत्रैवोक्तम् ।

प्रतिपत्कल्याणकरी तिथिर्द्वितीया भवेत्प्रीत्यै ।

अन्ये त्वाहुः—

शुक्लपक्षे द्वितीयायां सप्तम्यां कारयेत् सदा ।
ब्राह्मणः पुत्रकामी सन् न कुर्यादन्यवर्णजः ॥
यदि कुर्याद्ध्रुवं तत्र राजपीडा भविष्यति ।

इति ।

सौभाग्यदा तृतीया भवति चतुर्थी विनाशाय ।

अन्यत्र—

चतुर्थ्यां यदि कुर्यात्तु धनाढ्योऽपि कृशो भवेत् ।

पञ्चम्यां सुखसंपत्तिस्तेजो(श्शोक)वृद्धिश्च जायते ॥
स्त्रीणां षष्ठ्यां(?) वित्तायस्सप्तम्यां जायते सुखम् ।

अन्यत्र—

षष्ठीं च सप्तमीं चैव न कुर्यात्त्वरितोऽपि सन् ।
यदि कुर्यात्पुनश्शीघ्रं विवाहमधिगच्छति ।
अष्टम्यनर्थफलदा नवमी शोकामयप्रदा भवति ॥

अन्यत्र—

अष्टम्यामपि सिद्धिस्स्याच्छुभग्रहानिरीक्षणात् ।
धनपुत्रांश्च लभते क्रूरैर्दृष्टे विपर्ययः ॥
आनन्दाय च दशमी स्त्रीणामेकादशी सुतार्थकरी ।

अन्यत्र—

एकादश्यां दशम्यां च भार्या रोगमवाप्नुयात् ।
त्वरितस्तत्र कुर्वीत जीवशुक्रनिरीक्षणात् ॥
द्वादश्यायासकरी धनसुतसुखदा त्रयोदशी शुभदा ।

अन्यत्र—

द्वादशीमष्टमीं चापि वर्जयीत प्रयत्नतः ।
निस्स्नेहत्वं च पुत्रेषु शरीरपतनं भवेत् ।
विविधोपद्रवभयदा चतुर्दशी कुलविनाशकरी ।
पञ्चदशी कन्यानां धनसुतकामप्रदा विवाहेऽपि ॥
नाशाय कृष्णपक्षे तिथयः षष्ठ्यादयस्सर्वाः ।

इति । वारफलं च तत्रोक्तम्—

सूर्यदिने त्यक्तधवा हृतविभवा बन्धुवर्जिता क्षुद्रा ।
चान्द्रे सौख्यसमेता ससपत्नी वक्रतामेके ॥

भौमदिने मृतपतिका विवर्जिता बन्धुभिर्दुराचारा ।
सौम्यदिने पुत्रवती परिणीता कन्यका भवति ॥
गुरुदेवतार्चनपरा गुरुवारे पुत्रवित्तसंयुक्ता ।
सौभाग्यशीलयुक्ता शुक्रदिने बन्धुमान्या च ॥
रविसुतदिवसे कन्या परिणीता वातरोगिणी निस्स्वा ।
केचिद्वदन्ति सुभगां वार्धक्ये याति पञ्चत्वम् ॥

इति । गार्ग्यः—

भौमवारे स्त्रियो नाशः पुरुषस्य शनेर्दिने ।
रविवारे तु दारिद्र्यमन्ये वारास्सुशोभनाः ॥
यद्वा शुभग्रहैर्दृष्टस्सूर्यः कार्यं न नाशयेत् ।

इति । रल्लः—

क्रूरग्रहदिनवाराः न शोभनाः सौरमेकमपहाय ।
व्यतिपातविष्टिवैधृतवर्जं शुभदाः करणयोगाः ॥

इति । एषां वर्षमासवर्गेष्वप्येवम् उक्तं च—

वर्षादिष्वप्येवं कुर्वन्ति फलानि भास्करप्रमुखाः ।
द्रेक्काणनवांशकपाः त्रिंशद्भागाधिपाश्चैव ॥
दिवसपतिस्सर्वेषां बलवान् तस्माच्च कालहोरेशः ।
तस्मादप्यधिकबलो लग्ने यस्यांशकः प्राप्तः ॥

इति । दिवा विवाहः श्रेष्ठः । रात्रावप्यनिन्द्यः । यथाऽऽहुः—

गुरुदेवतार्चनपरा दिवसोढा कन्यका भवति ।
रात्रौ चालस्यवती पितृपूजनतत्परा नियता ॥

इति । नित्ययोगफलं च तत्रैवोक्तम्—

विष्कम्भो व्याघातः कर्मविनाशाय भवति वज्रश्च ।
गण्डातिगण्डशूला नारीणां रोगभयदास्स्युः ॥

परिघः परिभवकारी व्यतिपातस्सुतसुखार्थनाशकरः ।
वैधृतयोगश्च तथा मरणामयदुःखकृद्भवति ॥
प्रीत्यादयस्तु शेषास्सर्वे योगास्स्वनामसदृशफलाः ।
यच्छन्ति शुभानि शुभाः फलानि लग्ने कुमारीणाम् ॥

इति । करणफलं च—

विष्ट्याः प्रमुखे मरणं मध्ये हानिं भयं च भद्रान्ते ।
षट्स्वप्यन्येषु भवेत्करणेषु शुभावहं लग्नम् ॥
शकुनादिध्रुवकरणैः ध्रुवं विनाशः कुलद्वयस्यापि ।
वैधव्यं मरणं वा विवाहितायास्तृतीयेऽब्दे ॥

इति । ग्रहाणां गोचरशुभस्थानपरिगणनामाह—

**अष्टासु शुक्रो नवसु ज्ञजीवौ त्रिष्वर्कभौमौ त्रिषु वाऽमृतांशुः । चतुर्षु सूर्यात्मजसैंहिकेयौ स्थानेष्वभीष्टाः कथिता विवाहे ॥३६॥**

विवाहकर्मणि शुक्रोऽष्टासु—लग्नादिपञ्चमनवमादिषु स्थानेषु शुभः । बुधगुरू नवसु—सप्ताष्टान्त्यवर्ज्यस्थानेषु शुभौ । रविभौमौ त्रिषट्-लाभस्थानेषु । चन्द्रोऽपि त्रिषु—द्वित्र्यायस्थानेषु । मन्दराहू च त्रिष-डायाष्टमेष्वभीष्टौ स्तः । अत्र वराहमिहीरः—

सप्ताष्टान्त्यबहिश्शुभैरुडुपतावेकादशद्वित्रिगे
पापैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे त्वष्टमौ ॥

इति । रत्नः—

क्रूरास्त्र्यायषडष्टगाश्शुभकरा नेष्टोऽष्टमे भूसुतः ।
चन्द्रस्त्र्यायधनस्थितश्शुभफलः प्रोक्तः परैश्चाम्बुगः ॥

सौम्यो द्वादशसप्तमाष्टमगतो नेष्टश्च षष्ठे भृगुः।
दुश्चिक्ये गुरुभार्गवौ न शुभदौ केश्चिच्छुभोऽन्त्ये गुरुः ॥

इति । एतत्स्पष्टीकरणाय प्रतिस्थानफलं वक्ष्यमाणःआदौ शुभानां गोचारफलमाह—

**भर्तृस्नेहवतीं प्रभूतविभवां प्रीतां च बन्धुप्रियां पुत्राढ्यां जितशात्रवां विरहिणीमल्पायुषं सुव्रताम् । स्वाचारां सुधनां विहीनविभवां कुर्वन्ति कन्यां क्रमात् उद्वाहे वपुरादिराशिषु शुभाः षष्ठे कविर्वैरिणीम् ॥ ३७॥**

शुभाः—बुधगुरुशुक्राः लग्नादिभावेषु स्थिताः भर्तुः स्नेहादिगुणयुक्तां कुर्वन्ति । लग्ने भर्तरि स्नेहवतीं भर्तृस्नेहवतीं च । द्वितीये शीलधनसंपन्नां । तृतीये कुलद्वयमान्यतया संतुष्टाम् । चतुर्थे बान्धवप्रियां । षष्ठे बुधगुरू शत्रुविजयिनीं कुरुतः । शुक्रः पतिवैरिणीं करोति । सप्तमे बुधो वान्ध्येन अपत्यविरहितां । गुरुर्दुश्चारित्रतया शुक्रः सापत्न्येन पतिविरहिणीं करोति । अष्टमे त्रयोऽप्यल्पजीवितां कुर्वन्ति । नवमे सद्धर्मपतिशुश्रूषणादिव्रतयुतां। दशमे स्वाचारां सत्कर्मारम्भयुतां सदाचारयुक्तां एकादशे धनलाभयुतां । द्वादशे धनस्य ज्ञानस्य वा व्ययेन निर्धनां कुर्वन्ति । तथाचोक्तम्—

सौम्ये भर्तृपरायणा सुगृहिणी स्वस्वामिपक्षार्चिता
बन्ध्वच्र्या च सुतान्विता च विजितस्वद्वेषिपक्षा तथा ।
वन्ध्या चासुभिरुज्झिता सुकृतिनी मायाविनी च क्रमात्
भूरिद्रव्यवती बहुव्ययपरा लग्नादिभावस्थिते ॥

इति । अन्यत्र—

लग्ने सौम्यस्सुभगां पतिव्रतां मानिनीं सुखोपेताम् ।
कुरुते धनोपयातः चिरायुषं पुत्रपौत्राढ्याम् ॥
सहजस्थस्सोमसुतः पतिपक्षसमर्चितां सुविभवां च ।
बन्धुभवनोपयातः शीलवतीं बन्धुमान्यां च ॥
तनयस्थः पञ्चानां तनयानां मातरं कुरुते ।
षष्ठे शत्रुविनाशं [1]दम्पत्यो रतिमनुशयं च तथा ॥
. . . . . . . पञ्चदशाब्दैर्वियोगमित्यन्ये ।
जामित्रगतो वन्ध्यां विकृतसुतां वा पतिद्विषं विधनाम् ॥

सप्ताब्दैः पतिं त्यजेदित्यन्ये ।

सौम्यश्चाष्टमसंस्थो मृतिं त्रिमासैश्च वैधव्यम् ।

ज्योतिषार्णवे—

मन्दार्कज्ञाः शुभा रन्ध्रे शेषास्सर्वे मृतिप्रदाः ।
व्ययस्थाः जीवशुक्रज्ञाः शुभाश्शेषा व्ययप्रदाः ॥

इति ।

नवमे शशिजस्सधनां विंशेऽब्दे तापसीं करोत्ये(के)ताम् ।
दशमस्थः कुहकज्ञां विंशत्यब्दैरुदारां च ।
आयगतो ज्ञः कुरुते बहुसुतसौभाग्यवित्तवतीम् ।
व्ययगश्चासद्व्ययिनीं प्रव्रजितां द्वादशाब्दे च ।

इति । गुरुस्त्वाह—

सप्तमेऽर्थक्षयस्सौम्ये निधने नियमस्थिता ।
नवमे दानशीला स्याद्दशमे सुकृशाङ्गिनी ॥
एकादशे धनैर्युक्ता द्वादशे विधवा बुधे ।

इति । [2]बलस्यानेकमत्यश्रवणाद्दशमाष्टमयोर्बुधो मध्यमफल इति युक्तम् ।

---

[1] दम्पत्योरनुशयं च तथा । [2] फलस्यानेकमताश्रयणा

प्राग्लग्ने देवगुरौ भर्तुर्दयितां सुतान्वितां साध्वीम् ।
धनगो धनैरुपेतां कुरुते च पतिव्रतां कन्याम् ॥
दशमे वित्तविहीना विमुखा मुदिता धनान्वितेत्यन्ये ।
वित्ताढ्या बन्धुगते कुलद्वयानन्दजननी च ।
जनयत्यष्टौ पुत्रान् तनयस्थे शोभना जीवे ।
नष्टरिपुश्शत्रुगते कुलवृद्धिकरी पतिरता च ॥
सप्तमगे देवगुरौ भ्रष्टचरित्रा विवर्जिता पत्या ।

सप्तमे देवरतेति वसिष्ठः ।

मृत्युस्थे विगतधना गुरावदीर्घायुषी भवति ।

सप्तदशाब्दाद्वियोग इत्यन्ये ।

गुरुदेवतार्चनपरा नवमस्थे वाक्पतौ सुखोपेता ।
दशमस्थे तु धनाढ्या कलास्वभिज्ञा सुमङ्गलोपेता ॥
एकादशगे साध्वी भर्तुर्दयिता धनान्विता दक्षा ।
व्ययगे शौचाचारभ्रष्टा गोत्रद्वयापकृता ॥
लग्नस्थे भृगुतनये सुभगा चाप्नोति चैकपत्नीत्वम् ।
वित्तगते धनलुब्धा कृपणा वा जायते कन्या ॥
दुश्चिक्यगते सुभगा रमयति भर्तुः कनीयसा कैश्चित् ।
बन्धुगते बन्धुहिता गोत्रोच्छ्रयकारिणी भवति ॥
पञ्चमगे बहुपुत्रा नचातिविभवाऽतिमायिनी ह्यलसा ।
कुरुते षष्ठे शुक्रो बन्ध्वन्तां वैरदां भर्तुः ॥
जामित्रगते शुक्रे प्रख्याता भवति कन्यका वेश्या ।

त्र्यब्दादित्यन्ये ।

मृत्युस्थानोपगते म्रियते भ्रमते विना देशात् ।
धर्मगते धर्मपरा सौभाग्यधनान्विता भवति ॥

दशमस्थे सुकृतरता जिह्मा ह्यसती धनाढ्या च ।
लाभस्थे सुखमाशु प्राप्नोति समीहितानि च धनानि ॥
व्ययगे विनष्टवित्ता केचित् सौख्यान्वितामाहुः ॥

इति । पापानां गोचारफलमाह—

**मृत्युं निर्धनतां श्रियं सुखसुहृद्भङ्गं तनूजक्षयं वृद्धिं शत्रु(भ)जयेन भर्तृमरणं रोगं च धर्मच्युतिम् । दौश्शील्यं विभवं व्ययं च भवनेष्वात्मादिषूग्रग्रहाः कुर्वन्ति क्रमतस्तमोऽर्कतनयावारोग्यमत्राष्टमे ॥ ३८ ॥**

ग्रहाः—सूर्यभौमशनिराहुकेतवः पञ्च लग्नादिभावेषु मरणादि कुर्वन्ति । सर्वे लग्ने वध्वाः पुंसो वा मृत्युं, द्वितीये धनहानिं दारिद्र्यं वा, तृतीये धनसंपदं, चतुर्थे सुखबन्धुक्षयं, पञ्चमे अपुत्रतां वा, षष्ठे सुतसुखधनादिवृद्धिं शत्रुक्षयं च, सप्तमे वैधव्यं कुर्वन्ति । अष्टमे रविकुजौ रोगं कुरुतः । राहुमन्दावारोग्यं केतुश्च । नवमे सर्वे व्रतसुकृतादिधर्मभ्रंशं, दशमे दौश्शील्यं दुर्वृत्ततां च, लाभे धनलाभसंपदं, द्वादशे धनस्य व्ययं हानिं च कुर्वन्ति । अत्राष्टमे सूर्यो दीर्घायुःप्रद इति केचित् । उक्तं च—

लग्नेऽर्के विधवा स्यात् अथवा वर्षेऽष्टमे निधनमेति ।
धनगे वित्तविहीना परकर्मरता विशीला च ॥
. . . . . . . सधनाऽप्यब्दाष्टके दरिद्रा स्यात् ।

इत्येके ।

दायादप्राप्तधना पूजार्हा भास्करे तृतीयस्थे ।

बन्धुगते बन्ध्वन्ता सुखमानविवर्जिता चैव ॥
तनयगते सुखहीना सुतहीना शोचते प्रसूता च ।

त्रयोदशादूर्ध्वमपत्यसंपदित्यन्ये ।

षष्ठे सधना सुभगा पतिगोत्रविवृद्धये भवति ।

त्र्यब्दान्महदैश्वर्यमिति ।

सप्तमसंस्थे सूर्ये विधवा दुश्चारिणी सरोगा च ।

अब्दादेतत्फलम् । सूर्येण मृतपुत्रा सेति वसिष्ठः ।

अष्टमगे वृद्धपतिं मृतमप्यन्वेति साऽतिदीर्घायुः ।

त्र्यब्दात् द्वयोस्सह मरणमित्यन्ये ।

अष्टमे सत्वरं मृतिः ।

इति गुरुः ।

धर्मगते कृशधर्मा त्रयोदशाब्दात्परं सधर्मा स्यात् ।
कर्मस्थे तु विशीला विधर्मनिरता भवेन्नित्यम् ॥
लाभगते लब्धधना त्रिवर्षतो मानसंयुता चैव ।
व्ययगेऽपगतलज्जा विगतधना मुक्तहस्ता च ॥

इति ।

सद्यः करोति विधवां लग्नस्थो भूमिजस्स्वनिधनं वा ।
धनगः प्रणष्टवित्तां राजाभिभवादिना कुरुते ॥

अब्दाद्वह्निभयमित्यन्ये—

सहजस्थः क्षितितनयः सौभाग्येनान्वितां करोत्यचिरात्
बन्धुजनाविप्रयुक्तां पातालमुपागतोऽब्देन ॥
तनयोपगतः कुरुते महीसुतस्तनयवर्जितां निस्स्वाम् ।
रिपुभवनगतः कुरुते कुलवृद्धिं शत्रुनाशं च ॥

अष्टाब्दाद्धनागम इति ।

जामित्रगतः क्रूरामुपपातककारिणीं कुवृत्तां च ।
निधनस्थेऽसृक्स्रावं त्रयोदशाब्दात्कुजः कुरुते ॥
कुजोऽष्टमस्थो वैधव्यं दद्यात्पापापवादतः ।

इति । गुरुः—

धर्मगतो वक्रमतिं पतिद्विषं रोगिणीं पराभिरताम् ।

त्र्यब्दादिति ।

कुरुते दशमोपगतः क्रव्यादां शाकिनीमथवा ।

पञ्चाब्दादिति ।

एकादशगः कुरुते पतिप्रियां रत्नभूषणोपेताम् ।

षडब्दादिति ।

व्ययगः प्रलीनवृत्तां कुरुते साल्पायुषं भौमः ।

त्रिमासैर्महाहानिमिति ।

लग्नस्थे रवितनये रमयति नीचोत्थितान् बहून् पुंसः ।
याते द्वितीयभवनं धनहीना रोगिणी चैव ॥
दुश्चिक्यगते सौरे मानधना भोगसंयुक्ता ।
हिबुकस्थे रवितनये स्वल्पवयस्का प्रवासिनी कन्या ॥
हृद्रोगार्ता सुतगे रविपुत्रे नष्टपुत्रा च ।
एकादशाब्दादिति ।
षष्ठगते निहतपरा भर्तुः प्रियकारिणी नियता ।
षडब्दैः कन्याप्रजेति केचित् ।
जामित्रगते मन्दे पतन्ति गर्भा अनेकशस्त्रीणाम् ।
निधनस्थे बहुसंपत्सुखवित्तपरिच्छदा भवति ॥

धर्मोपगते सौरे व्रतोपवासादिवर्जिता कृपणा ।
दशमे पापाभिरता विफलारम्भा विशीला च ॥

षडब्दात् पापकृदिति केचित् ।

आयगते सूर्यसुते त्रिवर्गसिद्धिर्धनागमस्सततम् ।
व्ययगे धनं समस्तं कामासक्ता क्षयं नयति ।

मद्यपेत्यन्ये । राहुकेत्वोरपि मन्दवत् फलम् । तथाच श्रीपतिः—

स्यात्पुंश्चल्यधनाऽर्थवत्यथ वयोहीनाऽथ हृद्रोगिणी
निर्दुष्या निजगर्भपातनरता नीरुक् च भग्नव्रता ।
दुश्शीला बहुवित्तवत्यपि सुरापानप्रसक्ताऽङ्गना
प्राग्लग्नाद्रविनन्दनेन शिखिना स्वर्भानुना च क्रमात् ॥

इति । अष्टमराहुः शुभ इति केचित् । तथाच विधिरत्ने—

अधत्ते भुजगस्तनूजाविहतिं वित्तक्षयं संपदं
निस्सापत्न्यमसुव्ययं सधनतां वैधव्यमात्मक्षयम् ।
वन्ध्यात्वं विधवात्वमर्थनिचयं दुश्चारिणीं च क्रमात्
लग्नादाविति भाषते मुनिवरो मृत्युं च तत्संग्रहे ॥
लग्ने प्रवासस्तनये च मृत्युः
केतौ सचन्द्रे प्रसवोपघातः ॥

इति । जामित्रे वसिष्ठेन विशेष उक्तः—

केतुनाऽऽक्रन्दशीला स्यात्सौरेण विधवा भवेत् ।
राहुर्जामित्रमास्थाय दुर्भगत्वसमा भवेत् ॥

इति । एवं शुभानामशुभानां च भावफलमुक्त्वा सर्वग्रहाधारबलस्य लग्नवत् सर्वेषां शुभाशुभफलदातृत्वविषयस्थानावधिभूतस्य चन्द्रस्य

तावत् भावफलमाह—

**लग्ने वधूं हतधवां विसुतां तनूजे कन्याप्रजां च नवमे दशमे भुजिष्याम् । चन्द्रः करोति भृगुपुत्रवदन्यराशौ तद्बान्धवक्षयकृदम्बुनि कैश्चिदुक्तः ॥**

लग्ने स्थितश्चन्द्रो वधूं विधवां करोति । पञ्चमे सुतरहिताम् । नवमे कन्यकाप्रसूतिम् । दशमे परप्रेष्यकारिणीम् । अन्यराशिषु शुक्रवत् फलमित्यर्थः । द्वितीये बहुधनसंपन्ना, तृतीये कुलद्वयप्रीतिकारिणी, चतुर्थे बन्धुप्रिया, षष्ठे पतिवैरिणी, सप्तमे ससापत्न्यात् भर्तुर्विरहिणी, अष्टमे आयुर्हीना, लाभे बहुधनलाभवती, द्वादशे धनक्षययुता स्यात् । कैश्चित् - शौनकादिभिः चतुर्थे बन्धुबान्धवक्षयकर इत्यर्थः । अत्र श्रीपतिः—

प्राणस्य च्युतिरर्थसंपदुभयप्रीतिश्च बन्धून्नतिः
वैपुत्र्यं च सवैरता च नियतं सापत्न्यमात्मव्ययः ।
स्त्रीसूतिः परकर्मकृत्त्वमधिका लब्धिः क्षयस्संपदाम्
स्यादिन्दावुदकोत्सुके तु कथितो बन्धुक्षयः कैश्चन ॥

इति । भागिलोऽपि—

लग्नस्थे हिमरश्मौ व्याचारा धनविवर्जिता विसुखा ।
त्रयोदशे मासे मृत्युरिति शौनकः ।
धनगे धनधान्यवती मुदाऽन्विता वत्सरत्रयात्परतः ।
चन्द्रे तृतीयगृहगे धनसौभाग्यान्विता सततम् ॥
बन्धुगते बन्धवन्ता श्वश्रूश्वशुरोज्झिता त्रिषट्काब्दात् ।
त्र्यब्दाज्जनयत्येकं सुतं ततो न प्रसूयते सुतगे ।
रिपुभवनगते चन्द्रे बन्धूनामन्तकृत् भवति ।

त्यब्दात्तयोः प्राणसंशय इति शौनकः ।

सप्तमगे शशिनि भवेत् ससपत्नी कन्यकाजननी ।
मृत्युगते मृतपतिका मरणं समुपैति वा त्रिभिर्मासैः ।
धर्मगते हिमरश्मौ कन्याजननी विवर्जिता पतिना (ना) ॥

षट् पुत्रीः प्रसूय सप्तमं सुतमिति शौनकः ।

अप्राप्तारम्भफला दशमे त्र्यब्दे पतिद्विष्टा ।
लग्नादेकादशगे चन्द्रे लाभान्विता सुखोपेता ॥
उद्धृत्य धनं खादत्यसद्व्यया द्वादशे चन्द्रे ।

इति । चतुर्थे सदसत्फलविप्रतिषेधदर्शनान्मध्यः । स च शुभदृष्टः शुभप्रदः । तथा च सप्तर्षयः—

बन्धुस्थाने चन्द्रः स्वजनेष्टा सस्वभागिनीं कुरुते ।
गर्गमते मध्योऽसौ श्रेष्ठस्स्यात्सौम्यदृग्योगे ॥

इति । तत्रापि पापमध्यगतश्चेद्वर्ज्यः—

द्यूनचतुरश्रसंस्थे पापद्वयमध्यगे निशानाथे ।
विलयं प्रयाति नियतं देवैरपि रक्षिता कन्या ॥

लग्नचन्द्रयोः फलसाम्याच्चन्द्रस्यापि पापजामित्रपापदृग्योगा वर्ज्या इत्याह—

**इन्दोः कामे दशशतकरे वल्लभेनोज्झिता स्या-**
**त्तस्मिन् वध्वा दयितमरणं भूमिपुत्रो विधत्ते ।**
**वीर्योपेतौ रविजशशिजौ प्रेयसो दुर्बलत्वं पापा-**
**चारा युवतिरशुभैर्दृष्ट इन्दौ युते वा ॥ १० ॥**

इन्दोः सप्तमं भर्तृस्थानं। तत्र सहस्रकरस्तिष्ठति चेत् तत्र विवाहिता वधूः स्वपत्या त्यज्यते। तत्र भौमो वध्वा वैधव्यं करोति। तत्र स्थितौ बलाढ्यौ सौरसौम्यौ तत्पत्युः रोगादिना दौर्बल्यं कुरुतः। यथोक्तम्—

सप्तमगोऽर्कश्चन्द्रादसृक्स्रुतिं भर्तृविरहं वा।
वैधव्यं निधनं वा शिखिकोपं भूमिजः कुरुते॥
मन्दः परसन्तापं पतिविभ्रष्टामपुत्रां च।
पतिदौर्बल्यक्लिष्टां सोमसुतो दुर्भगां समाचष्टे॥
देवगुरुर्बन्ध्यवन्तां पत्युर्द्विष्टां च दुर्भगां कुरुते।
भृगुपुत्रस्सप्तमगः चन्द्रात् कुलटां करोति वेश्यां वा॥

इति। गुरुशुक्रयोरपि दुष्टत्वमुक्तम्। तदप्याचार्येण नातिकष्टत्वादुपेक्षितम्। तथा ह्युक्तम्—

प्राग्लग्नाच्चन्द्राद्वा सर्वे जामित्रगा न शुभदास्स्युः।

तत्रापि केचिदाहुः—शुभग्रहो नातिकष्टफलः इति। यत् पुनरुक्तं सप्तर्षिमते—

क्रूरो वा यदि वा सौम्यो लग्नाच्चन्द्राच्च खेचरः।
एको वा यदि जामित्रे पत्युः प्राणहरो भवेत्॥

इति। तत्तु प्रोद्यल्लग्ननवांशाच्चन्द्राक्रान्तनवांशाद्वा [1] चतुष्पञ्चांशानां विषयम्। [2] यतस्तदन्त एव जामित्रभावमवतिष्ठते। तत्र सर्वे नेष्टाः। जामित्रेऽपि तदंशाद्बहिस्स्थिताः शुभाशुभप्रदाः पापा एव पापप्रदाः। तथा च वामदेवः—

जामित्रगा नेष्टफलास्तु सर्वे लग्नाच्छशाङ्काच्च वदन्ति केचित्।

---

[1] चतुःपञ्चाशांशविषयम्. [2] यदस्तं तत एव जामित्रभावमध्यमवतिष्ठते.

इष्टास्तु सौम्यास्सुतसौख्यदास्ते कृतेषु सङ्ख्यांशबहिस्स्थताश्चेत् ॥
रत्नोऽपि—

दिनास्तराश्यंशकले च तावद्भागो भवेद्द्यूनमथाधिकं वा ।
ग्रहोदयक्षेत्रविभागजातजामित्रवेधः परमस्स तावत् ॥

इति । जामित्रगतग्रहं शुभः पश्यति चेन्न दोषः । यथाऽऽहुः—

सुखत्रिकोणाम्बरपूर्वलग्ने त्वनीचगोऽनस्तमितश्च पश्येत् ।
जीवस्सितो वा शशिजस्तदानीं जामित्रराशिं न वदन्त्यनिष्टम् ॥
वर्गोत्तमस्थे निजतुङ्गराशौ यद्वांऽशके द्यूनममत्र पश्येत् ।
एकोऽप्यमीषां शुभभावसंस्थः भिनत्ति जामित्रगताननिष्टान् ।

इति । यद्यप्यविशेषेण लग्नेन्द्वोर्जामित्रदोष उक्तः । तथाऽपि लग्न-जामित्रस्य ग्रहशुद्धिमत्तयेष्टत्वात् चन्द्रजामित्रदोष एवायं भङ्ग इत्यव-सेयम् । यस्मादुक्तं सप्तर्षिमते—

शशिनो जामित्रस्थः क्रूरग्रहजनितदोषमपहन्ति ।
जीवस्सौम्योऽथ भृगुः त्रिकोणकेन्द्राश्रितं पश्यन् ॥

यद्वा गान्धर्वादिषु विहितगोधूळिलग्नविषयमपि भवति । अथ राजा-श्रितादीनामत्यात्ययिकविवाहलग्नविषयम् । विवाहलग्ने पापैः दृष्टे युते वा सति स्त्री पापाचारा स्यात् । चन्द्रस्य ग्रहयोगफलमुक्तं रत्नेन—

वैधव्यमर्केण कुजेन मृत्युं वान्ध्यं बुधेनाङ्गिरसाऽतिपापम्
शुक्रेण सापत्न्यमथार्कजेन दास्यं कपालीत्वहिकेतुनेन्दौ ॥
द्व्याद्यैर्युते मृत्युमुपैति कन्या पापैस्तु सौम्यैः कुलटा नृशंसा ।
प्रव्रज्यता यात्यचिरेण मिश्रैः जामित्रगैश्चन्द्रविलग्नयोश्च ॥

इति । चन्द्रग्रहयोरेकर्क्षांशकलायोग एवैतत्फलम्—

एकर्क्षकलांशगतो यथोक्तफलदश्शशी ग्रहवशेन ।

अन्यर्क्षगतस्स्वप्ने मनसा वा भावनं कुरुते ॥
अन्यर्क्षे स्वांशे वा शनिभार्गवसौम्यसूरिभिस्साधेम् ।
न भवति दोषाय शशी प्रदक्षिणं याति यदि चैषाम् ॥

इति ।

स्वोच्चत्रिकोणभगतै स्स्वभवनमित्रर्क्षसंश्रितैश्चैव ।
सूर्यादिभिर्ग्रहैस्स्यात्परिणयनं राजमहिषिणाम् ॥
नीचारिगृहोपगतैर्ग्रहैर्विवाहस्सुखार्थनाशाय ।
भवति द्रेक्काणांशकयोगानामेतदेव फलम् ॥
एकोऽपि राजमहिषीं कुर्यादिह उच्चगस्सुहृद्दृष्टः ।
उपचयगः परिणयने संयुक्तस्स्वाधिमित्रेण ॥
उक्तं ग्रहस्य वर्गे स्वदिने द्विगुणं स्वकालहोरायाम् ।
त्रिगुणितमभीष्टयोगे स्वांशेऽपि फलं समायाति ॥
दम्पत्योरशुभकरस्सौम्योऽपि विलग्नगोऽरिवारगतः ।
मित्रदिने शुभफलदः पापोऽपि निगद्यते यवनैः ॥
उदयास्तमये सूर्याद्दक्षिणभागेतरस्थितो यश्च ।
कुरुते स लग्नयातः पापाविष्टं फलं ह्यचिरात् ॥
यच्छति भावाश्रयजं फलं ग्रहो बलयुतोऽधिमित्रांशे ।
वर्गोत्तमे तु सुतरां मेषूरणगोऽतिपुष्टफलम् ॥

अतश्च—

स्वोच्चत्रिकोणस्वगृहादिसंस्थितो मित्रभवनगः खेटः ।
चेष्टादिबलयुतो वा यत्नाद्योज्यश्शुभस्थाने ॥
नेष्टश्शुभोऽपि लग्ने नीचारिगृहोपगश्च शत्रुदिने ।
क्रूरोऽपि सुहृद्दिवसे स्वोच्चादिगतश्शुभो भवति ॥

तत्रापि—

लग्नबलाच्छारीरं चन्द्रबलान्मानसं ग्रहास्सर्वे ।
दद्युर्भावाश्रयजं शुभमशुभं वा फलं नियमात् ॥

इति ।

**इन्दोर्धनाष्टमगतौ क्रमशो विवाहे सौम्याशुभौ जनयतो मृतिमेव वध्वाः । क्रूरग्रहेऽष्टमगते विधवा भवेत्सा चन्द्रेऽङ्गनाऽळिवृषसिंहगतेऽल्पपुत्रा ॥**

चन्द्रात् द्वितीये शुभः अष्टमे पापश्च यदि स्तः तदा वध्वाः स्वयं मृतिः, यदा चन्द्राष्टमे क्रूरस्तिष्ठति द्वितीये न शुभः तदा वैधव्यं स्यात्, कन्याकटकवृषसिंहस्थे चन्द्रे पञ्चमस्थे सति अपुत्रत्वम् । अत्र वराहमिहिरः—

क्रूरेऽष्टमे विधवता निधनेश्वरांशे
यस्य स्थितो वयसि तस्य समे प्रदिष्टा ।
सत्स्वर्थगेषु निधनं स्वयमेव तस्याः
कन्याऽळिगोहरिषु चाल्पसुतत्वमिन्दौ ॥

इति ।

**चन्द्रे भौमगृहे कुजादिकथितत्रिंशांशकेषु क्रमात् दुष्टा दास्यवती सुशीलविभवा मायाविनी दोषिणी । शुक्रर्क्षे बहुदूषणाऽन्यपतिगा पूज्या सुधीर्विश्रुता ज्ञर्क्षे छद्मवती नपुंसकसमा साध्वी गुणाढ्योत्सुका ॥ ४२ ॥**

**स्वच्छन्दा भर्तृघातिन्यतिमहितगुणा शिल्पिनी साधुवृत्ता चान्द्रे जैवे गुणाढ्या विरतिरतिगुणा ज्ञातशिल्पाऽतिसाध्वी । मान्दे दास्यन्यसक्ता श्रितपतिरसती शिल्पविद्यार्कभे स्यात् दुर्भाषा हीनवृत्ता धरणिपतिवधूः पुंविचेष्टाऽन्यसक्ता ॥ ४३ ॥**

चन्द्रे कुजादिराशिषु विषमेषु राश्यादेरारभ्य समेषु राश्यन्तादुत्क्रमेण कुजरविसुतजीवसौम्यशुक्राणां कथितेषु शरशरनागगिरीषुसङ्ख्यत्रिंशांशकेषु स्थिते सति विवाहिता दुष्टादिका भवति । यथा मेषे वृश्चिके च कुजाद्यंशकेषु दुष्टादिकानि पञ्च । शुक्रर्क्षे तुलायां वृषभे च बहुदूषणादीनि । अन्यं पतिं गच्छतीत्यन्यपतिगा पुनर्भूः । पूज्या—गुणवती । सुधीः—गेयादिकलासु प्रशस्तबुद्धिः । ज्ञर्क्षे—मिथुने कन्यायां छद्मवतीत्यादि । छद्म—कैतवं । नपुंसकसमत्वं—रतिधाष्टर्यादिहीनता । औत्सुक्यं—सर्वत्र सकामता । चान्द्रे-कर्कटे । स्वच्छन्दा—स्वैरिणी । भर्तृघातिनी वैधव्यवती । शिल्पिनी चित्रलेखनादिशिल्पकुशला । जैवे—चापे मीने च । विरतिरल्परतिः । अतिगुणा—गुणाधिका । ज्ञातशिल्पा—शिल्पज्ञा । मान्दे—कुम्भे मकरे च । अन्यसक्ता—नीचरता । श्रितपतिः—पतिशुश्रूषारता । अर्कभे दुर्भाषा—परुषभाषिणी । हीनवृत्ता—असती । पुंविचेष्टा—पुरुषवद्व्यानादिचेष्टा । अन्यसक्ता—अगम्यपुरुषरता । अत्र वराहमिहिरः—

कन्यैव दुष्टा व्रजतीह दास्यं साध्वी समायुक्तचरित्रयुक्ता ।
भूम्यात्मजर्क्षे क्रमशोंऽशकेषु वक्रार्किजीवेन्दुजभार्गवानाम् ॥

दुष्टा पुनर्भूस्सगुणा कलाढ्या ख्याता गुणैश्चासुरपूजितर्क्षे ।
स्यात्कापटी क्लीबसमा सती च बौधे गुणाढ्या प्रविकीर्णकामा॥
स्वच्छन्दा पतिघातिनी बहुगुणा शिल्पिन्यसाध्वीन्दुभे
स्वाचारा कुलटाऽर्कभे नृपवधूः पुंश्चेष्टिताऽगम्यगा ।
जैवेऽनल्पगुणाऽल्परत्यतिगुणा विज्ञानयुक्ताऽसती
दासी नीचरताऽर्किभे पतिरता [1]दुष्टप्रजाः स्वांशकैः ॥

अन्ये त्वाहुः—

नरेन्द्रभोग्या मलिना व्यथार्ता सुशीलहीना च मृतप्रसूतिः ।
माहेयराशौ क्रमशोंऽशकेषु सितज्ञजीवार्कजभूमिजानाम् ॥
स्याद्भोगिनी दुश्चारिता सुरूपा मृतप्रजा शुक्रगृहे पतिद्विट् ।
बौधे धनाढ्या सुकला पतीष्टा सुतप्रसूतिश्च मितप्रसूश्च ॥
चान्द्रे मृतप्रजा शिल्पिन्यल्पायुः कृच्छ्रजीविनी ।
नष्टपुत्राऽथ सूर्यर्क्षे रोगिणी कार्यचोरिणी ॥
राजभोग्या दरिद्रा च विदेशस्था च जीवभे ।
पुत्रिणी लोकपूज्याऽर्थवती निस्स्वा पदाधिका ॥
प्रभुशीला व्रतभग्ना नैकाभ्या दुर्भगाऽप्रजा मान्दे ।

इति । दुष्टयोगान्तरमाह—

**प्राप्तौ कविक्षितिसुताावितरेतरांशं इन्दोः स्मरेऽपि कुरुतः स्त्रियमन्यसक्ताम् । यद्यत्फलं हिमकरात्कथितं समस्तं लग्नादपि प्रबलतो भवतीह तत्तत् ॥ ४४ ॥**

शुक्राङ्गारकावितरेतरांशं—अन्योन्यस्य नवांशं प्राप्तौ—शुक्रो भौमस्यांशं भौमः शुक्रस्यांशं प्राप्तो यदि भविष्यति अयमेको योगः।

---

[1] दुष्टप्रजा चांशकैः.

तथा चन्द्रात्सप्तमे शुक्रमन्दौ यदि स्तः अयमन्यो योगः । अस्मिन् योगद्वयेऽपि स्त्री जारिणी भवति । अत्र गुरुः—

अन्योन्यांशे सितारौ चेत् जारसक्ता भवेत्सदा ।
तथैव सप्तमे चन्द्रादुच्चरेद्भर्त्रनुज्ञया ॥

इति । ईदृशाश्चान्ये योगा अन्यैरुक्ताः—

लग्नेन्दू चरभवने बलिनः पापग्रहान्विताः केन्द्रे ।
योषिद्ग्रहसन्दृष्टा भर्तृबहुत्वं प्रकुर्वन्ति ॥
द्विशरीरगे विलग्ने चन्द्रः क्रूरेक्षितः करोत्यन्यत् ।
शुभदृष्टस्स्थिरभवने गतश्शशी शुभकरस्स्त्रीणाम् ॥
शुभभवनसन्निविष्टैश्शशिभूमिजभार्गवैः कुमारीणाम् ।
सौख्यं धनं प्रतापं पुरुषस्स्ववशानुगो भवति ॥
रविगुरुशशाङ्कसुतशनिबलयोगाद्भवति वश्या स्त्री ।
स्त्रीपुरुषैर्बलवद्भिः त्रिवर्गशुद्धिस्तु दम्पत्योः ॥

इत्यादयः । अथ विवाहयोगानाह—

**क्षते सूर्यो जीवो वपुषि निधने दानवगुरुः स एवान्यो योगो भवति दशमे शीतकिरणः । स एवान्यो योगो भवसहजयोः सूर्यजकुजौ शुभे जीवो लाभे दिनकरसुतो भ्रातरि कुजः ॥ ४५ ॥**

**विलग्ने वागीशो रिपुदशमयोर्मन्दमिहिरौ रिपौ पापः कश्चिद्बुधभृगुसुतौ धर्मनिरतौ । वसिष्ठोक्ता योगाष्षडिह कथिताश्श्लोकचरणैः विवाहे जीवोक्तान् कतिचिदथ वक्ष्यामि शुभदान् ॥ ४६ ॥**

षष्ठे सूर्यः लग्ने गुरुः अष्टमे शुक्रश्चेदेको योगः। अत्रैव दशमे चन्द्रश्चेदन्यो योगो भवति। षष्ठे रविः लग्ने गुरुः अष्टमे शुक्रः दशमे चन्द्रश्चेदन्य इत्यर्थः। अत्रैव एकादशे मन्दे तृतीये कुजे सति अन्यो योगो भवति। यथा—षष्ठे रविः लग्ने गुरुः अष्टमे शुक्रः दशमे चन्द्रः एकादशे मन्दः तृतीये कुजश्चेत् अन्यो योग इति। नवमे गुरुरेकादशे शनिः तृतीये कुजश्चेत् चतुर्थो योगः। लग्ने गुरुः षष्ठे मन्दः दशमे सूर्यश्चेत् पञ्चमः। षष्ठे पापेष्वेकास्थितः नवमे बुधशुक्रौ तिष्ठतः षष्ठो योगः। एते पद्ये एकैकपादैरभिहिताष्षड्योगा इह विवाहे वसिष्ठेनोक्ताः। तथा च तद्वाक्यम्—

मेषूरणगतश्चन्द्रो विलग्ने तु बृहस्पतिः।
आदित्यष्षष्ठगश्चैव भृगुरष्टमगो भवेत्॥
अस्मिन्निह समायोगे यदि पाणिग्रहो भवेत्।
विपुलां श्रियमर्थं च लभते नात्र संशयः॥
मेषूरणगतस्सूर्यः षष्ठे चैव शनैश्चरः।
जीवो होराविलग्नस्थो जामित्रे च शुभेक्षिते॥
अस्मिन्नेव समायोगे विवाहात्संप्रपद्यते।
यानवाहनरत्नानि वस्त्राण्याभरणानि च॥

इत्यादि।

**नन्दो नाम बलान्विते शशिसुते लग्ने स्वराशि-**
**स्थिते तद्वागधिपेक्षिते भृगुसुते योगस्तु भद्राह्वयः।**
**जीवाख्यस्तु तथाविधे सुरगुरौ शुक्रज्ञयोः कण्टके**
**वागीशेन्दुजयोः श्रितैकगृहयोःजीमूतनामा परः॥**

**योगोऽन्यस्स्थावराख्यो वपुषि भृगुजवागीश्वराभ्यां बलिभ्यां शुक्रज्ञाभ्यां जयाख्यः त्रिभिरपि विजयो नाम योगाधिराजः । वित्ते जीवस्तनूजे कविशशितनुजौ षष्ठगोऽर्कश्शुभाख्यो वागीशेन्द्वर्कमन्दैः तनुसहजनभष्षष्ठगैर्मङ्गलाख्यः ॥ ४८ ॥**

**बलशालिनि सद्ग्रहे तनौ सहजारातिभवेष्वसद्ग्रहे । प्रबलाख्य इतीह कीर्तिता दश योगाः शुभदाः करग्रहे ॥ ४९ ॥**

स्वराश्यादिनिजवर्गगते बलाढ्येऽनस्तगे सौम्ये लग्ने सति नन्दो नाम योगः । तद्वत् स्ववर्गगते बलाढ्ये गुरुदृष्टे शुक्रे लग्ने सति भद्राख्यः । तथा स्ववर्गस्थे बलाढ्ये लग्ने सति शुक्रबुधयोः केन्द्रे सतोः जीवाख्यः । यत्र कुत्र राशौ सह स्थितयोः गुरुबुधयोः लग्ने सतोः जीमूताख्यः । क्वचिद्राशौ सहस्थितयोः शुक्रजीवयोरुदये स्थावराख्यः । तथा क्वचिद्राशौ सहस्थितयोः शुक्रबुधयोरुदये जयाख्यः । क्वचिद्राशौ स्थितानां बुधगुरुशुक्राणां त्रयाणामुदये विजयो नाम योगश्रेष्ठः । तत्काललग्नाद्वितीये जीवे, पञ्चमे शुक्रबुधयोः, षष्ठे रवौ च सति शुभो नाम । षष्ठे मन्दे, दशमे रवौ, तृतीये कुजे, गुरावुदये मङ्गलो नाम योगः । अथ त्रिषडायेषु एकस्मिन् पापे स्थिते बलाढ्यस्य कस्यचिच्छुभस्योदये प्रबलाख्यो योगः । एते दश योगा गुरुणोक्ता विवाहे सुतसुखसंपदादिशुभप्रदा भवन्ति । तथा च गुरुः—

बुधे स्वराशिगे लग्नेऽनस्तगेऽतिबलैर्युते ।

विवाहे शुभदो योगो नन्दो नामातिशोभनः ॥
शुक्रो वाऽतिबलैर्युक्तः स्वराशावुदितो यदि ।
बलिना गुरुणा दृष्टो भद्रयोग उदाहृतः ॥
स्वर्क्षेऽतीवबलैर्युक्ते जीवे लग्नगते तदा ।
बुधे सिते वा केन्द्रस्थे योगो जीवाह्वयश्शुभः ॥
बुधजीवौ यदि क्वापि राशावतिबलान्वितौ ।
सहितावुदितौ योगो जीमूतो नाम शोभनः ॥
शुक्रजीवौ यदा लग्ने सहितौ बलिनौ तदा ।
योगोऽयं स्थावरो नाम विवाहसमये शुभः ॥
यदा शुक्रबुधौ सार्धमुदितौ प्रबलौ तदा ।
विवाहेऽतिशुभो योगो जयो नाम शुभप्रदः ॥
यदा ज्ञजीवशुक्राश्च सहिता बलिनस्तदा ।
लग्नगा यदि योगोऽयं विजयो नाम योगराट् ॥
गुरौ धने ज्ञशुक्रौ द्वौ पञ्चमेऽरिगृहे रवौ ।
बलिनौ न स्मरे कश्चित् योगोऽतीव शुभप्रदः ॥
सोमे तृतीयगे मन्दे षष्ठे वैकादशे गते ।
दशमेऽर्के गुरौ लग्ने योगोऽयं मङ्गलप्रदः ॥
लग्नगश्शुभदः कश्चित् त्रिषष्ठायेषु पापकः ।
बलिनौ तौ शुभकरौ योगोऽयं दोषहा बली ॥

इति । कैश्चित् सौम्यादीनामुदयेनैव नन्दादयस्सप्त योगा उक्ताः । तथा च वराहमिहिरः—

सौम्यविलग्ने नन्दः शुक्रे भद्रस्तथा गुरौ जीवः ।
आद्यन्ताभ्यां जीमूतस्स्थावर इति मध्यमान्ताभ्याम् ।

बुधशुक्राभ्यां तु जयः सर्वैर्विजयो भवत्युदयसंस्थे ॥

इति । तत्फलं च तेनैवोक्तम्—

ऊढा नन्दे कन्या देवीशब्दं समाप्नुयादचिरात् ।
भवति च नरेन्द्रजननी भर्तुः प्राणप्रिया कन्या ॥
भद्रे पाणिग्रहणं यदि नाम कुमारिका समुपयाति ।
सा त्वचिरान्नृपशब्दं करोति भर्तुः कुलस्यर्द्धिम् ॥
परिणीता जीवाख्ये कन्या विजयाय कीर्त्यते भर्तुः ।
प्राप्नोति सा त्रिवर्गं कुलद्वयं चापि नन्दयति ॥
जीमूते परिणीता विपुलान् भोगान्महाफलान् भुक्त्वा ।
दृष्ट्वा वनस्थतनयान् सह भर्त्रा याति देवत्वम् ॥
स्थावरयोगे कन्या पाणिग्रहमेति विपुलमैश्वर्यम् ।
भर्तुर्निधानलाभं प्राप्य कुलस्योन्नतिं कुरुते ॥
पाणिग्रहमेति जये जघन्यकुलजाऽपि भर्तुरैश्वर्यम् ।
आवहति सदा कन्या निषेव्यमाणा सपत्नीभिः ॥
विजये यात्युद्वाहं प्राप्नोति सुतां यशोऽर्थलाभं च ।
वंशस्य च प्रतिष्ठां परतो मरणाच्च सुरलोकम् ॥

इति । अथ सूर्यादीनां पापानामुदयेन व्यालादयः पञ्च पापयोगा उक्ताः—

दिनकरयोगाद्व्यालः भौमेन रसातलः क्षयश्शशिना ।
तमसा तमो निरुक्तस्तथा च केतौ कृतान्तश्च ॥

तत्फलम्—

व्यालाद्येषु च पञ्चसु विधवा शोच्या दरिद्रा च ।
क्षपयति च बन्धुवर्गं क्षीणायुर्नारिणी चोढा ॥

इति । एते व्यालादयः पञ्चयोगाः परिहर्तव्याः । अत्रानुक्ताश्शा-

स्त्रान्तरेषूक्ता योगा यथा—

कन्याविलग्नेऽत्र तृतीय इन्दुर्मृगास्यसंस्थौ सितवाक्पती स्तः ।
आनन्दयोगं प्रवदन्ति भर्तुरानन्दकारीह पितुस्तथैव ॥

बालेन्दुरायादितृतीयगेषु भास्वन्महीनन्दनमन्दगेषु ।
स्वबन्धुदत्तार्थचया पतिं स्वं प्रीणाति साध्वी शुभबन्धुपुत्रा ॥

धर्मोदयप्रागुदयस्थितेषु जीवोशनस्सोमसुतेषु हस्ती ।
कन्या स्वभर्तुर्मदमत्तकुम्भभृङ्गावलीहस्तघटां विधत्ते ॥

लाभाम्बरबन्धुगतैस्सौम्यैर्योगो ध्वजोऽत्र परिणीता ।
सुतसुखधनधान्याढ्या सौभाग्यवती च नियमेन ॥

लग्नस्थितेषु द्युचरेषु सत्सु पापेषु लग्नाद्बहिरास्थितेषु ।
विवाहिताऽस्मिन् शुभबान्धवाढ्या साध्वी सुपुत्रा च भवेत्कुमारी॥

पाताळधर्माम्बरसंस्थितेषु सर्वेषु सौम्येषु विवाहिता स्त्री ।
भवेत्त्रिवर्गप्रतिपत्तियुक्ता कुलद्वयानन्दविधायिनी च ॥

लाभेऽर्कभौमौ रिपुभेऽर्कसूनुश्श्रीवत्सयोगो हिमगुस्तृतीये ।
सौम्यास्तु लग्नेऽत्र विवाहिता स्त्री सुतार्थकल्याणकरीह भर्तुः॥

मनुष्यभोदये दृष्टे शुभैर्बलसमन्वितैः ।
चन्द्रे शुभतरे तस्मिन् विवाहश्शोभनप्रदः ॥

चन्द्रलग्ने न (तु) वीक्ष्येत भौमेन दशमे सिते ।
इन्द्रावपरिवेषस्थे मृत्युवर्जं शुभो भवेत् ॥

गुरौ बलयुते लग्ने कर्मणीन्दौ शुभान्विते ।
एकादशे रवौ शुक्रे दशमेऽतीव शोभनः ॥

लग्नात्तु पञ्चमस्थौ वा ज्ञशुक्रौ पापके रिपौ ।
केन्द्रत्रिकोणगे जीवे योगश्शुभफलप्रदः ॥

त्रिधर्मैकादशस्थाश्चेदारजीवार्कजाः क्रमात् ।
बलवन्तो विवाहस्य योगोऽयं संपदालयः ॥
केन्द्रत्रिकोणभवने यदि सौम्य एकः
स्वोच्चस्ववर्गसहितो बलवान् प्रदीप्तः ।
पापस्तथाविधगुणस्त्रिषडायगश्चेत्
योगो विवाहसमये बहुपुत्रदाता ॥
हिबुकधर्मसुतोदयकर्मसु त्रिदशराजगुरौ यदि वा सिते ॥
यदशुभं शुभतां समुपैति तच्छुभफलं नितरामभिवर्धते ।

इत्यादयो गुरुभागिलवराहमिहिरादिभिरुक्ता योगाः प्राग्वदूह्याः । अन्ये ग्रहगोचरादिकमनपेक्ष्यैव अभिजिद्गोधूळिलग्नयोः विवाहः कार्य इत्याहुः । तथा च नारदः—

चतुर्थमभिजिल्लग्नमुदयर्क्षात्तु सप्तमम् ।
गोधूळिकं तदुभयं विवाहे पुत्रपौत्रदम् ॥

इति । अत्रोदयर्क्षं सूर्योद्गमराशिः । गोधूळिलग्नं क्वचिद्देशे कैश्चिदेव विवाहे गृह्यते । तथा च श्रीपतिः—

प्रायेण गोपास्सह हीनवर्णैः प्राच्याश्च सन्ध्यासमये विवाहम् ।
शंसन्ति शान्ति समुपैति यावन्न गोखुरोत्खातरजोवितानम् ॥

इति । नारदोऽपि—

प्राच्यानां च कलिङ्गानां मुख्यं गोधूळिकं स्मृतम् ।
अभिजित्सर्वदेशेषु मुख्यं दोषविनाशकृत् ॥

इति । नात्र सूर्यजामित्रदोषः नापि राश्यादिदोषः । तथा च वराहमिहिरः—

गोपैर्यष्ट्या हतानां खुरपुटदळिता या तु धूळिर्दिनान्ते
सोद्वाहे सुन्दरीणां विपुलधनयशश्श्चायुरारोग्यदा स्यात् ।

तस्मिन् काले न ऋक्षं न च तिथिकरणे नैव लग्नं न योगः
ख्यातं पुंसां सुखार्थं शमयति दुरितान्युत्थितं गोरजोऽत्र ॥

यत् पुनरुक्तं सप्तर्षिमते—

सन्ध्याद्वयेऽप्यसौम्या मरणं समुपैति चोज्झिता पतिना ।
रात्र्यर्धे च दिनार्धे नारी सुकुमारिका भवति ॥

इति; तत् विप्रादिविवाहविषयम् । शूद्रादीनां गोधूलिकविवाहे तन्नास्ति । यथोक्तं भागिलेन—

अशुभं शुभतां याति राशिदोषश्च निन्दितः ।
विवाहलग्नवच्छेषं गोधूलिं प्राह भागिलः ॥

इति । अन्ये गोधूलिलक्षणमेवमाहुः—

यावद्दिनान्ते दिशि पश्चिमायां पश्येत्तृतीयं रविबिम्बभागम् ।
ततः परस्तात्तु मुहूर्तमेके गोधूलिकं कालविदो वदन्ति ॥

अत्र भागिलेन तदृतुवशादुक्तम्—

गोधूलिं त्रिविधां वदन्ति मुनयो नारीविवाहादिके
हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे ।
ग्रीष्मेऽर्धास्तमिते वसन्तसमये भानौ गते दृश्यतां
सूर्ये चास्तमुपागते भगवति प्रावृट्छरत्कालयोः ॥

इति । अन्ये सर्वकार्येष्वपि गोधूलिकं प्रशंसन्ति—

ईषत्सन्ध्यामतिक्रान्तं किञ्चिदुद्भिन्नतारकम् ।
विजयो नाम कालोऽयं सर्वकार्येषु साधकः ॥

इति । लग्नचन्द्राभ्यां केचिदनिष्टयोगा भागिलेनोक्ताः । ते यत्नतो वर्ज्या इति तेऽप्युच्यन्ते—

अदृश्यदृश्यार्धगतैर्विलग्नादसौम्यसौम्यैः क्रमशश्च चक्रम् ।

चन्द्राच्च तत्रोद्वहनं प्रपन्ना भवत्यजस्रं विटवृत्तिसक्ता ॥
केन्द्रैरसद्भिः क्रमशो [1]निरूढैः पापो विलग्नादमृतद्युतेर्वा ।
प्रौढाऽत्र नारी पितृवेश्मसंस्था भर्तारमुत्सृज्य मृतिं प्रयाति ॥
क्रूरेषु वित्तव्ययगेषु लग्नाद्धनुर्भवेत्सत्सु मृतिस्थितेषु ।
प्रौढा ह्युपैति व्यभिचारिणीत्वं विषेण शस्त्रेण पतिं विहन्यात् ॥
सितार्कमन्देष्वरिबन्धुरिप्फस्थितेषु योगः परशुः प्रोदष्टः ।
विवाहिता स्त्री श्रयतीह जारं स्ववंशविच्छेदमुपैति चाशु ॥
धनव्ययस्थोऽयमतिग्मरश्मिः मृतौ शशी पञ्चमगः कुसूनुः ।
कूर्मस्तदानीं विमुखाऽनपत्या विवाहिता स्याद्विधवा च कन्या ॥
भौमार्कचन्द्रास्सुखरिप्फरन्ध्रसंस्था यदा स्युर्मुसलं तदा स्यात् ।
उद्वाहयात्रागृहसंप्रवेशं कुर्वन्नवाप्नोति वधं सबन्धनम् ॥

इति । शुभयोगाश्च—

गुरुशुक्रावुदयगतौ चन्द्रोच्चे षट्त्रिलाभगाश्शेषाः ।
कुर्वन्ति बलोपेता नृयानगमनाद्यवश्येन ॥
धर्मदशायव्ययगैः शशिरविबुधभार्गवैः शनिष्षष्ठः ।
सहजस्थः क्षितितनयो गुरुर्द्वितीयेऽत्र परिणीता ॥
बहुरत्नगोधनाढ्या [2]सर्वस्वजनप्रिया भवति ।
पारमुपयात्यवश्यं स्वजातिविहितक्रियाणां च ॥
आयतृतीयसुखगौ शनिभौमौ सूर्यवाक्पती ज्ञश्च ।
भृगुचन्द्रौ नवाष्टमगतः परिणयनं राज्यदं स्त्रीणाम् ॥
[3]त्रिसुतसुखनिधनगै रविसुरगुरुभौमभार्गवैश्चोढा ।
कुरुते पतिं धनपतिं जनयति पुत्रान् यशोयुक्तान् ॥

1 निरुढैः 2 सर्वस्वजना भवति भर्तुः. 3 स्त्रीसुतसुखानि धनगैः.

दशलाभारातिसुतेष्ववस्थिता गुरुकुजार्किरविशुक्राः ।
नच सप्तमेऽस्ति कश्चिद्यदा तदा भवति कुलमुख्या ॥
भृगुजीवौ सूर्यकुजौ द्वितीयदुश्चिक्यगौ शनिष्षष्ठे ।
आये शशी विवाहे करोति सेनापतेः पत्नीम् ॥
नवदशषडायसंस्थै रविजीवकुजार्कजैर्विधौ सहजे ।
परिणीता शास्त्रज्ञं जनयति पुत्रं क्षितीशं वा ॥
क्रूरैष्षष्ठाष्टमगैः चतुर्थगैः सद्ग्रहैः कन्या ।
प्राप्ता पाणिग्रहणं न वेत्ति संख्यां स्वविभवस्य ॥
मेषोपगते सूर्ये मीने गुरुभार्गवौ शशी सिंहे ।
मिथुनोदयेऽष्टमेऽर्के सकुजे पृथ्वीश्वरी भवति ॥

इत्याद्याः । अन्ये जातकेषु दृष्टा ऊह्याः ।

एवं हि जातकोक्ताः संख्याऽऽकृतिराजयोगाश्च ।
परिगग्रकाले स्त्रीणां विचिन्तनीयाः प्रयत्नेन ॥

इति । शास्त्रान्तरदृष्टं योगान्तरमाह—

**वयसि बुधस्सहजे कुजमन्दौ भृगुतनयो निधने विधुरस्ते । द्विषति रविश्च भवेद्यदि दिष्टया परिणयने शुभदः किल योगः ॥५०॥**

चतुर्थे बुधः तृतीये कुजः शनिर्वा अष्टमे शुक्रः सप्तमे चन्द्रः षष्ठे रविश्च तिष्ठेदित्ययं योगः यदि संभवेत् विवाहे शुभदः स्यात् । किलेत्यसंभवे वर्तते । तथाहि—तृतीयराशौ बुधस्य कदाऽप्यवस्थानं न संभवेत्; तथाऽपि पूर्वशास्त्रानुशारेण योगोऽयमुक्तः । तथाच वसिष्ठः—

विलग्नस्थो भवेज्जीवः शुक्रश्चाष्टमसंस्थितः ।

चन्द्रमास्सप्तमे चैव षष्ठे चैव दिवाकरः ॥
तृतीये वक्रसौरी च चतुर्थे बुधसंयुते ।
अस्मिन्नेव समायोगे यदि पाणिग्रहो भवेत् ॥
धर्ममर्थं च कामं च पुत्रपौत्रमनन्तकम् ।
पश्येतां दम्पती नित्यं जीवेतां च शतं समाः ॥

इति । औत्पातिकं भवतीति वा । तदुक्तं दिष्टचेति । अथवा शुद्धराशावपि योगवशादागतो ग्रहश्शुभप्रद इति ज्ञापयितुम् । तथाहि—अत्र योगे विधुरस्ते इति सप्तमे चन्द्रश्शुभद उक्तः । एवं सर्वत्र योगेषु द्रष्टव्यम् । तत्तच्छुद्धस्थानेषु तत्तद्योगवशादागतो ग्रहो न दोषदः । इति । एतत् प्रागेव प्रतिपादितम् ।

अथानिष्टस्थानेषु योगवशाद्यथा ग्रहः सर्वेषु शुभदः; स्वोच्चादिस्थेऽपि तथा लग्नशुद्धस्थानाभ्यामन्यत्र शुभ इत्याह—

**उपनयनविवाहक्षौरभुक्त्यादिकार्ये फलमुदितमनिष्टस्थानगैर्यत् ग्रहेन्द्रैः । भवति न तदनिष्टं स्वोच्चवर्गस्थितैस्तैरुदयमुदिततच्छुद्धराशींश्च हित्वा ॥**

उपनयनविवाहादिकार्येष्वनिष्टस्थानगैः शुभैरशुभैश्च ग्रहैर्यदनिष्टं फलमुक्तं तदा ते ग्रहाः स्वोच्चस्वर्क्षादिवर्गगता यदि स्युः तर्हि तैः कृतं तदनिष्टं फलं न भवति शुभं भवति । तथाचोक्तम्—

अशुभा येऽफलाःप्रोक्ता ग्रहैर्लग्नादिभावगैः ।
प्रध्वंसाभावतां तेऽयुः स्वोच्चवर्गशुभेक्षितैः ॥

इति । एतच्च लग्नात्तत्तत्कर्मोदितादष्टमसप्तमादिशुद्धस्थानादन्यत्र वेदितव्यम् । तथाहि—स्वोच्चादिस्थोऽपि ग्रहोऽनुक्ते लग्ने शुद्धस्थानेऽपि योगादृते न ग्राह्यः ।

अध्यायमुपसंहरति—

**श्लोकैर्गुणश्लाघिभिरेकयुक्तैः पञ्चाशता निर्मित-मूर्तिरित्थम् । प्राप्तस्समाप्तिं सुमुहूर्तशास्त्रे पाणि-ग्रहाध्याय इहाष्टमोऽयम् ॥ ५२ ॥**

**इति विद्यामाधवीये मुहूर्तदर्शने विवाहाध्यायोऽष्टमः**

अथ विवाहात् चतुर्थदिने प्रथमर्तुकालाच्चतुर्थदिने वा रात्रौ संवेशनं कार्यम् । तत्र पर्वादि वर्ज्यम् । यथोक्तं कालदीपे—

संवेशनं तुर्यदिने चतुर्दशीपर्वाष्टमीसङ्क्रमजन्मवर्जिते ।
कन्यां विनैवं तदसंभवे भजेदुद्वाहकाले हरिवारुणानपि ॥

इति । ज्योतिषार्णवेऽपि—

मासान्तमब्दायनान्तं दम्पत्योर्जन्मतारकाम् ।
रिक्ताविष्टिस्थिरर्क्षाणि प्राप्तकालेऽपि वर्जयेत् ॥

विवाहपटलेऽपि—

प्राग्लग्नाद्विपद्वा खे गुरुज्ञसितवीक्षितेऽथवा युक्ते ।
चन्द्रे चोपचयस्थे प्रथमाभिगमं प्रशंसन्ति ॥
ऋतुकालेष्वप्येवं गच्छेत्प्रमदां शुभोदये पुरुषः ।
पुत्रवती शुभलग्ने जामित्रे सौम्यवीक्षिते चैव ॥

सूर्याद्युदये फलमुक्तं सप्तर्षिमते—

सूर्ये प्राग्लग्नगते रोगाढ्या दुर्भगा दरिद्रा च ।
विगतप्रज्ञा चन्द्रे शिखिराहुयुते विशेषेण ॥

भौमे तु बन्धकी स्याद्रक्तस्रावातुराऽथवा भवति ।
सौम्ये तु पुत्रिणी स्यादभिन्नमन्त्रा सुनिपुणा च ॥
जीवे गुरुजनभक्ता पुत्रवती वल्लभा भवेद्भर्तुः ।
शुक्रे स्थिराऽतिसुभगा पुत्रवती रोगहीना च ॥
मन्दे प्राग्लग्नगते गर्भस्रावातुरा पराभिरता ।
स्त्रीरोगपीडिताङ्गी न शर्म शोकातुरा याति ॥

चन्द्रे सूर्यादिसंयुक्ते प्रागुक्तमेव फलम् । केचित् शुक्रेण काणनेत्रा राहुणा विनिवृत्तगर्भखिन्ना शशानि युत इत्याहुः । अन्यत्सर्वं विवाहकालोक्तमत्रापि योज्यम् । यत आहुः—

उक्तं पाणिग्रहणे चतुर्थिकायोगसंपदा योज्यम् ।

इति । अपि च—

चराश्श्रेष्ठास्स्थिरा नेष्टा श्शुभास्सर्वे शुभान्विताः ।
विवाहवत् समाख्यातं वारवर्गांशकादिकम् ॥

इति । अन्ये च गुणराशिराश्युदययोनिमैत्रीजामित्रयोगाः प्रकारान्तरेणोक्ताः—तथा च ज्योतिषार्णवे गुणयोगस्तावत्—

इन्द्वर्कजीवा ज्ञसितौ कुजार्कौ च यथाक्रमम् ।
सत्वादिगुणसंयुक्ता गुणैक्ये शुभमादिशेत् ॥
सात्विकं राजसं श्रेष्ठं राजसं तामसं समम् ।
सात्विकं तामसं शून्यं विवाहेषु विशेषतः ॥

इति । राशिस्वभावयोगश्च क्रूरसौम्यौ . . . . . ।
तथा मेषान्तयोरैक्यं . . . . . . . शुभावहम् ॥
असौम्यपुरुषं मध्यं योषित्कार्यं कनीयसम् ।

इति । राश्युदययोगश्च—

मूर्धपृष्ठोदयर्क्षाणां त्वैक्यं प्रीतिसुखावहम् ।

मूर्धपृष्ठं विवर्ज्य स्यादुभयोः से(?) न दोषः ॥

इति । योनियोगश्च—

मृगमीनौ विहङ्गाख्यावळी कर्किसरीसृपौ ।
वृषाजसिंहाः पशवो नराश्शेषास्तु राशयः ॥
योन्यैक्ये चोत्तमं विद्यात् मध्यमं पशुमानुषम् ।
सरीसृपविहङ्गानां पशुयोगः कनीयसम् ॥
तिर्यङ्मनुष्यसंयोगः [1] . . . . . . . . : ।

**इति मुहूर्तदीपिकायां विद्यामाधवीयव्याख्यायां विवाहाध्यायोऽष्टमः**

[1] इत ऊर्ध्वं कियानपि ग्रन्थो गळितस्स्यात्

# नवमो वास्त्वध्यायः

अथ कृतोद्वाहस्य गार्हस्थ्यात् गृहस्थेन च देवद्विजपूजनस्यावश्यकत्वात् तस्य चैकत्र वसतिमन्तरेण दौष्कर्योद्विवाहानन्तरं निवासार्थं गृहं विधातव्यमिति वास्त्वध्यायमाह—

**गेहारम्भं कुम्भमृगास्यौ वृषमेषौ सिंहेन्द्वृक्षे कीटतुले च क्रमशोऽर्के । प्राप्ते माहेन्द्रादिषु काष्ठासु विदध्यात् शिष्टं तस्मिन् मासचतुष्कं परिहार्यम् ॥ १ ॥**

कुम्भमृगास्यादिस्थिरचराख्यराशियुग्मचतुष्टयस्थेऽर्के क्रमेण प्राच्यादिचतुर्दिक्षु गेहारम्भं कुर्यात् । शिष्टद्विस्वभावाख्यराशिचतुष्टयस्थेऽर्के तत्संज्ञं सौरमासचतुष्कं तस्मिन् गृहारम्भं परिहार्यम्—त्याज्यम् । अयमर्थः—मकरकुम्भस्थेऽर्के प्राग्गृहं मेषवृषस्थे दक्षिणगृहं कर्किसिंहस्थे पश्चिमगृहं तुलावृश्चिकस्थ उत्तरगृहं कुर्यात् । मीनमिथुन कन्याचापस्थे सर्वदिग्गृहं वर्जयेत् इति । तथाचोक्तम्—

मृगकुम्भस्थिते भानौ मुखं पश्चिमतश्शुभम् ।
वृषमेषगते सूर्ये मुखं दक्षिणतश्शुभम् ॥
सिह्मकर्कटयोरर्के प्राङ्मुखं शुभदं तथा ।
तुलावृश्चिकयोरर्के मुखमुत्तरतश्शुभम् ॥
चरस्थिरर्क्षगे कार्यं विधिनाऽनेन मन्दिरम् ।
द्विस्वभावे न कुर्वीत सर्वं गृहमशोभनम् ॥

इति । ज्योतिषार्णवे—

मीनगे मिथुनस्थेऽर्के केचिदिच्छन्ति सूरयः ।

इति । केचित् पूर्वपश्चिममुखानां दक्षिणोत्तरमुखानां गृहाणामविशेषमाहुः । तथा च श्रीपतिः—

कर्किनक्रहरिकुम्भगतेऽर्के पूर्वपश्चिममुखानि गृहाणि ।

मेषतौलिवृषवृश्चिकयाते दक्षिणोत्तरमुखानि च कुर्यात् ॥

अन्येषां दिग्गृहाणां मासव्यत्ययो न ग्राह्यः । यदाह श्रीपतिः—

अन्यथा यदि करोति कुबुद्धिर्व्याधिशोकधननाशनमेति ।

इति । कुम्भमृगास्यावित्यादिषु स्थिराणां प्रथमाभिधानं तेषां मुख्यत्वकथनार्थम् । अनन्तराभिधानं चराणां मध्यमत्वकथनार्थम् । तथा च सनत्कुमारः—

स्थिरराशौ भवेत्सूर्यश्शोभनस्सर्वदा गृहे ।

चरे तु मध्यमः प्रोक्तो द्विस्वभावे तु निन्दितम् ॥

इति । द्विस्वभावेषु तेषु सर्वाणि गृहाणि वर्ज्यानीत्युक्त्वा तेषु फलविशेषश्चोक्तः—

मीने तु व्याधिपीडा स्यान्मिथुनेऽग्निभयं भवेत् ।

कन्यायां धनहानिस्स्याच्चापे वंशविनाशनम् ॥

इति । वास्तुशास्त्रे चैत्रादिषु वास्तुनिवेशस्य फलमुक्तम्—

शोको धान्यायतिपशुहतिद्रव्यवृद्ध्यर्थनाशौ

युद्धं भृत्यक्षतिरथ धनं श्रीश्च वह्नेर्भयं च ।

लक्ष्मीप्राप्तिर्भवति च शुभं सद्मनां सन्निवेशे

सद्भिः प्रोक्तं फलमिति पुरा मास्सु चैत्रादिकेषु ॥

इति । अन्ये चैत्रज्येष्ठप्रोष्ठपदमासेषु शुभमाहुः । तथा च श्रीपतिः—

आषाढचैत्राश्वयुजोर्जमाघज्येष्ठेषु सप्रोष्ठपदेषु नूनम् ।

निकेतनानां घटने नृपाणां योगेश्वराचार्यमतेन शस्तम् ॥

इति । अपरे चाषाढमार्गशीर्षफाल्गुनेष्वशुभं ; श्रावणे शुभमाहुः । तथा च सनत्कुमारः—

चैत्रे वित्तसमावाप्तिः वैशाखे धनसञ्चयः ।
ज्येष्ठे स्वनिधनं प्रायः आषाढे धननाशनम् ॥
श्रावणे भृत्यसंपत्तिः भाद्रे मासे प्रजासुखम् ।
आश्विने कलहो नित्यं कार्तिके च धनागमः ।
मार्गशीर्षे महाभीतिः पौषे वह्निभयं भवेत् ॥
माघे बहुसुतप्राप्तिः फाल्गुने रत्नसञ्चयः ।
क्रमाच्चैत्रादिमासेषु फलं वास्तुनिवेशनम् ॥

इति । माघफाल्गुनवैशाखश्रावणमार्गशीर्षकार्तिकाः षण्मासाः वास्तुकर्मण्यतिशुभाः । तथा च नारदः—

सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः ।
मासास्स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः ॥

इति । नक्षत्राण्याह—

**मित्राजान्त्यगुरूत्तरा रजनिकृद्धस्ताः प्रशस्तास्स्मृताः चित्रामूलसमीरणादितिवसुक्षीराधिपा मध्यमाः । सन्त्याज्यानि चराणि भानि सुधियः प्राहुर्गृहारम्भणे देशग्रामपुरादिकेष्वतिशुभास्ताराः स्थिरोर्ध्वाननाः ॥ २ ॥**

गृहारम्भे मैत्राद्या नव ताराश्शस्ताः । चित्रादयः षट् मध्यमाः । अन्यानि द्वादश भान्यशुभान्याहुर्मुनयः ।

उक्तं च—

तिस्रश्चोत्तरसंज्ञिता मृगशिरो मैत्रं तथा रोहिणी
तिष्यः पौष्णभमर्कभं च नवमं श्रेष्ठं गृहारम्भणे ।
स्वातीमूलपुनर्वसूशतभिषक्चित्राश्रविष्ठाश्च षट्
मध्यान्यत्र तु शिष्टमृक्षनिवहं त्याज्यं मुनीन्द्रा जगुः ॥

इति । केचिदश्विनीश्रवणे च गृहे गृह्णन्ति । तथा च नारदः—

मृदुध्रुवक्षिप्रचरे रिक्ताऽमावर्जिते तिथौ ।
व्यर्कारवारलग्नेषु नैधने शुद्धिसंयुते ॥

गृहं कुर्यादिति शेषः । अन्ये मघामपीच्छन्ति—

ब्राह्ममैत्रैन्द्रवादित्यतिष्यस्वात्युत्तराकरे ।
पित्र्ये पौष्णे स्मृतो गर्भः सद्युक्तर्क्षे स्थिरोदये ॥

गर्भः—प्रथमशिलान्यासादिः । अत्र सोमवारो मध्यमः । तथाचात्रिः—

जीवमन्दज्ञशुक्राणां वारेष्विन्दोस्तु मध्यमम् ।

इति । देशग्रामनगरसभाप्रासादेषु स्थिरास्तारा अतिशुभाः । ऊर्ध्वा-स्याख्याः स्थिरताराभ्योऽन्याः—तिष्यश्रवणत्रयार्द्राः पञ्च तराश्शुभाः । केश्चित् प्रतिदिग्गृहं भान्युक्तानि—

ब्रह्मादित्येन्दुतिष्येषु प्राच्यां गेहं समारभेत् ।
मघानिलार्यमर्क्षेषु याम्याशायां गृहं शुभम् ॥
विश्ववैष्णवमूलेषु प्रतीच्यां पितृभेषु च ।
कौबेर्यां विष्णुहिर्बुध्नचवाजिवारणभेषु च ॥
सर्वदा शुभदं प्रोक्तं गृहारम्भणकर्मणि ।

इति ।

त्र्युत्तरादितिभं मैत्रमूलवारुणरोहिणी ।

चन्द्रर्भं चोत्तमा ह्येते ग्रामारम्भादिकर्मणि ॥
पुष्यानिलमघाऽऽदित्या मध्याश्शेषा विवर्जिताः ।
ओजाश्च तिथयश्श्रेष्ठाः नवमीकामवर्जिताः ॥
द्वितीया दशमी षष्ठी युग्मास्वपि च शोभनाः ।

इति । तथाच तत्तत्समं तत्तत्फलमित्यत्रोक्तम् ॥ अथ राश्यादिकमाह—

**मूर्धोदयोर्ध्ववदनास्थिरसंज्ञराशीनत्युत्तमान् गृहविधौ शुभदान् स्थिराख्यान् । मध्यानथाहुरुभयानधमांश्चराख्यान् स्वेष्टास्पदेषु विहगाश्शुभदा न मृत्यौ ॥ ३ ॥**

मूर्धोदयोर्ध्वास्यस्थिराह्वसंज्ञात्रययुक्तान् राशीन् गृहविधाव त्युत्तमानाहुः । केवलं स्थिराख्यं शुभदं वदन्ति । उभयान् राशीन् मध्यान् ; चराख्यानधमानाहुः । अत्र केवलं मूर्धोदयानां केवलोर्ध्वास्यानां च शुभत्वम् । उभयोदयानां तिर्यगास्यानां च मध्यमत्वम् । पृष्ठोदयानामधोमुखानां च अधमत्वं अर्थसिद्धम् । अयमत्राशयः— उत्तमोत्तमयोगोऽत्युत्तमः । उत्तममध्यमयोग उत्तमः । उत्तमाधम योगो मध्यमः । मध्यमाधमयोगोऽधमः । अधमाधमयोगोऽत्यधमः ।

इति । उक्तंच वराहेण—

चरा वर्ज्याः स्थिराः पूज्याः द्विस्वभावास्तु मध्यमाः ।
जीवदृष्टियुतास्तेऽपि पूजिताश्शुभकर्मणि ॥
मूर्धोदयोर्ध्ववक्त्राख्या नृ (ग्राम्या) न ग्राम्या(?) स्थिरराशयः ।
श्रेष्ठाः पृष्ठोदयाख्यास्स्युरधोवक्त्रास्तु निन्दिताः ॥

इति । पृष्ठोदयोऽपि वृषभोऽतिशुभः । अत्रात्रिः—

अगुणोऽपि वृषश्श्रेष्ठः किं पुनश्शुभसंयुतः ।

इति । ग्रहाश्शुभा अशुभाश्च स्वेष्टस्थानेषु शुभाः । अष्टमे सर्वेऽपि न शुभाः । अत्र श्रीपतिः—

पापैस्त्रिषष्ठायगतैस्त्रिकोणकेन्द्रान्वितैस्साधुभिरालयस्य ।
वदन्ति निर्माणमथाष्टमस्थः क्रूरस्तु भर्तुर्मरणं करोति ॥
द्व्यङ्गे स्थिरे वा भवने विलग्ने सौम्यग्रहैर्युक्तनिरीक्षिते च ।
कर्मस्थितैर्वीर्ययुतैश्च सौम्यैर्निर्माणमाहुर्भवनस्य सन्तः ।
क्षपाकरे नैव गृहं पुरस्थे कुर्याद्वसेत्तत्र न जातुकर्ता ॥
पतन्ति कन्या अपि पृष्ठसंस्थे यत्नेन तत्रादिममत्र चिन्त्यम् ॥

इति । ज्योतिषार्णवे—

स्वोच्चमित्रगतैस्सौम्यैर्दृष्टयुक्तैरपापकैः ।
उत्तरोत्तरसौख्यं स्याद्ग्रामारम्भे पुरादिके ॥

सप्तमे शुक्रो वर्ज्यः । अत्रिः—

केन्द्रेषु शुभदास्सौम्याः कामशुक्रविवर्जिताः ।
सर्वग्रहवियुक्तं स्याद्व्ययं निधनभं गृहम् ॥

अथ नक्षत्रवेधफलं प्रागुक्तम् । अथ भौमादिषु कतिपयर्क्षस्थेषु क्वचित् गृहारम्भे फलविशेष उक्तः—

पौष्णाचार्यमखाद्वयाग्निदिनकृन्मूलेषु भौमे स्थिते
गेहं निर्मितमेति वह्निदहनं स्याच्च प्रजानां क्षयः ।
ज्येष्ठा भाद्रपदद्वयान्तकमरुन्मित्रेषु मन्दे कृतं
रक्षो यक्षगृहं गृहं भवति तद्वान्यग्रहे चोत्तमम् ॥
सौम्याम्बुश्रवणोत्तरात्रयफणिब्रह्मर्क्षगे वाक्पतौ
गेहं निर्मितमास्पदं क्षितिभुजां जातोऽत्र राजा भवेत् ।
चित्राश्वीश्वरपाशिशूर्पवसुभे शुक्रे स्थिते तद्दिने
देवानां सदनं च नाट्यभवनं सन्तुष्टिकृन्निर्मितम् ॥

इति । सूर्ये कृत्तिकास्थे च न कार्यम् । तथा च सर्वसिन्धौ—

कृत्तिकास्थे रवौ केचित् भरणीस्थे रवौ परे ।
उभयस्थे रवावन्ये न वाञ्छन्ति गृहक्रियाम् ॥

इति । अथ वास्तुपरीक्षार्थं मुख्यां प्लवाख्यभूपरीक्षामाह—

**उदक्प्लवा श्रियं दत्ते वृद्धिं पूर्वप्लवा मही । प्रत्यक्प्लवा दरिद्रत्वं विपत्तिं दक्षिणप्लवा ॥ ४ ॥**

उदगादिप्लवा भूमिः निवासिनां संपदादिफलं करोति । अर्थात् वायवीशविदिक्प्लवा शस्ता । अन्यविदिक्प्लवा नेष्टा । तथाचाहुः—

वायुकोणप्लवा क्षेममानन्दं प्रागुदक्प्लवा ।
अग्निप्लवाऽनलं दद्यात् श्मशानं निरृतिप्लवा ॥

इति । केचिद्दक्षिणपश्चिमप्लवे वैश्यशूद्रयोश्शुभे आहुः—तथा च वास्तुशास्त्रे—

दक्षिणप्लवनं वास्तु नेष्टं वैश्यादृते सदा ।
नगरं वर्धते तत्र चन्द्रवत् क्षयमेति च ॥
पश्चिमप्लवनं वास्तु शूद्राणां शुभमावहेत् ।
धनधान्यक्षयं रोगं शूद्रादन्यत्र सा वहेत् ॥

इति । तथाच वराहमिहिरः—

उदगादिप्लवमिष्टं विप्रादीनां प्रदक्षिणेनैव ।
विप्रस्सर्वत्र वसेदनुवर्णमथेष्टमन्यत्र ॥

इति । अन्ये प्रागुदगीशप्लवैव सर्वेषां शुभदेत्याहुः । तथाच नारदः—

अत्यन्तवृद्धिदं नृणामीशानप्रागुदक्प्लवम् ।
अन्यादिक्षु प्लवं नेष्टं शश्वदत्यन्तहानिदम् ॥

इति ।

प्रासादादौ शुभा ग्राममध्यस्था सर्वतःप्लवा ।

इति । अथ प्रागादिनिम्नत्वेन वीथिभेदान् प्रकल्प्य वास्तुभेदमाह—

**गोवह्निप्रेतनागाम्बुधान्येभधनसंज्ञिताः । वीथ्यः प्रागादिनिम्नत्वात्क्रमाद्वास्तोः प्रकीर्तिताः ॥ ५ ॥**

प्राच्याद्यष्टदिक्षु नीचत्वेन तदन्यदिक्षूच्चत्वेन वास्तुभूमेः गवाद्या अष्टौ वीथ्यः स्युः । यथा—प्राचीनिम्नमन्यदिगुन्नतं गोवीथिकं नाम वास्तु; गवां वृद्धिकृत् । आग्नेयदिङ्निम्नमन्यदिगुन्नतमग्निवीथिकं नाम; अग्निभयकृत् । दक्षिणानिम्नं प्रेतवीथिकंनाम; मृत्युकृत् । नैरृतनिम्नं नागवीथिकं नाम; नागभयकृत् । पश्चिमनिम्नं जलवीथिकं नाम; दारिद्र्यकृत् । वायव्यनिम्नं धान्यवीथिकं नाम; वसुकृत् । उदङ्निम्नं गजवीथिकं नाम; श्रीगुणकरम् । ईशाननिम्नं धनवीथिकं नाम; पुत्रपौत्रादिधनकृत्स्यात् । मध्यनिम्नं सिंहादिवीथिकं नाम; समृद्धिकृत् । उक्तं च—

अम्भोधान्यद्विरदनरगोवह्निकीनाशनागाः
प्रागाद्युच्चा इति निगदिताः मध्यनिम्नोऽथ सिंहः ।
स्याद्दारिद्र्यं धनाप्तिर्वसुगुणनिलयः पुत्रपौत्रादिवृद्धिः
गोवृद्धिर्वह्निपीडा मरणभयमथो नागपीडा समृद्धिः ॥

इति । केचिदेतदेव प्रागादिदिक्षु निम्नत्वेन प्रत्यगादिदिक्षून्नतत्वेन ब्राह्ममुखार्गळश्मशानाग्रथसुपथदीर्घायुःपुण्यकृन्नामान्यष्टौ वास्तूनि प्रकल्प्य तत्फलान्याहुः—

ब्राह्मं कर्मवतां श्रेष्ठमसुखं कलिवैरकृत् ।
आर्गळं पातककरं श्मशानं कुलनाशनम् ॥

आपथं क्षयकृन्नृणां सुपथं कुलवृद्धिदम् ।
दीर्घायुरायुश्श्रीकारी पुण्यकृद्द्विजसौख्यदम् ॥

इति । मध्ये निम्ना सिंहवीथिकतया समृद्धिकृदिति यद्यप्युक्ता तथाऽपि सा त्याज्या वह्न्यादिप्लवसहपाठात् । उक्तं च प्रयोगमञ्जर्याम्—

शूर्पाकारा भुजगकुटिला मत्स्यपृष्ठा षडश्रा
शूलाकारा पशुमुखनिभा नागपृष्ठा त्रिकोणा ।
मध्ये निम्ना यमपिशितभुग्वह्निदिक्षु स्वभावा-
न्निम्ना भूमिर्द्विजगृहविधौ निन्दिता शर्कराढ्या ॥

इति । या च क्रमनिम्नतया प्रदक्षिणावर्तेव भूः दृश्यते सा शुभा । अत्र विश्वकर्मा—

क्षेत्रं प्रदक्षिणीकृत्य यत्र गच्छति वै नदी ।
सा भूः प्रदक्षिणावर्ता पुत्रपौत्रविवर्धिनी ॥

इति । वास्तुशास्त्रे—

चतुरश्रगतं वास्तु करोतीह कुलक्षयम् ।
त्रिकोणं वर्तुलं वास्तु मरणायैव कल्पते ॥
प्रदक्षिणोदकं वास्तु पुत्रपौत्रविवर्धनम् ।
मानवानां समं वास्तु जयं कीर्तिं करोति च ॥

एवं प्लवशुद्धां परीक्ष्य तृणवर्णगन्धरसैः परीक्षयेत् । तत्र वराहमिहिरः—

कुशयुक्ता शरबहुला दूर्वाकाशान्विता क्रमेण मही ।
अनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका च ॥

अन्ये—

मधुरा कटुका तिक्ता कषाया च मही क्रमात् ।
अनुवर्णं शुभा भूमिः लवणा सर्वनिन्दिता ॥

सितपीतरक्तकृष्णा विप्रादीनां प्रशस्यते भूमिः ।
गन्धश्च भवति यस्या घृतरुधिरान्यान्यमद्यसमः ॥

अन्ये—

[1]धूळिरान्नपिशितगन्धा विप्रानुपूर्वतः ।
अब्जाश्ववसुधान्यादिगन्धा वा शस्यते मही ॥

इति । सर्वजनशुभदा अन्यैरुक्ता यथा—

शस्तौषधद्रुमलता मधुरा सुगन्धा
स्निग्धा समानसुषिरा च महीसुराणाम् ।
अप्यध्वनि श्रमविनोदमुपागतानां
धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ॥
प्रदक्षिणावर्तजला मनोरमा
गवां नृणां प्रागुदगीशदिक्प्लवा ।
अपाङ्किला सोत्पलकुन्दकेतकी·
वना मही सर्वजनस्य शस्यते ॥

अन्ये—

श्वेताऽसृक्पीतवर्णा सहयगजमदा षड्रसा चैकवर्णा
गोधान्याम्भोज गन्धा चलतुषसहिता वा प्रतीच्युन्नता च ।
पूर्वोदग्वारियुक्ता सुरभिसमतला शूलहीनास्थिवर्ज्या
सा भूमिस्सर्वयोग्या कचरदरहिता सम्मताऽऽद्यैर्मुनीन्द्रैः ॥

इति । अत्र अस्थ्यादिशब्देन श्मशानं लक्षितम् । तादृशप्रदेशस्य वर्ज्यत्वात् । यथोक्तमन्यत्र—

वामावर्तजला श्मशानबहुला वल्मीकसर्पाकुला
दुर्गन्धा कटुकण्टकिद्रुमवती गोमायुगृध्रान्विता ।

[1] धूळीक्षारान्नपिशितेति स्यात् । गन्धोपलतुषरहिता ।

शुष्का शुष्कजला च ग(र्त)र्भसहिता याऽतीव वातातपा
वर्ज्या सा शुचिसोषरा विरतिदा (सा)या नैकवर्णा मही ॥

इति । एवं प्लवादिभिर्महीं सम्यक् परीक्ष्य तन्मध्ये अरत्निमात्रं गर्भं खात्वा पुनः परीक्षयेत् तदुक्तम्—

तन्मध्येऽरत्निमात्रं तु खात्वा तत्प्रतिपूरयेत् ।
अत्यन्तवृद्धिरधिके हीने हानिस्समे समम् ॥
तथा निशादौ तत्कृत्वा सलिलेन प्रपूरयेत् ।
प्रातर्दृष्टे जले वृद्धिस्समं पङ्के व्रणे क्षयः ॥
श्वभ्रमथवाऽम्बुपूर्णं शतपदमित्याग(?)(श)तस्य यदि नूनम् ।
तत् खन्यं यच्च भवेत् फलान्यपामाढकं षष्टिः ॥

इति । अथ रात्रौ श्वभ्रे सितपीतरक्तकृष्णवर्णानि पुष्पाणि निक्षिप्य अपरेद्युः प्रातः पश्येत्—

श्वभ्रोषितं न कुसुमं यस्मिन् प्रम्लायतेऽनुवर्णसमम् ।
तत्तस्य भवति शुभदं यस्य च यस्मिन् मनो रमते ॥

अपि च—श्वभ्रमध्ये मृत्पाते गव्यं घृतमासिच्य चतुर्दिक्षु चतस्रो वर्तीर्निधाय विप्रादीन् वर्णान् सङ्कल्प्य प्रज्वाल्य प्रच्छाद्य मुहूर्तमात्रमतीत्य पश्येत्—

आमे वा मृत्पात्रे श्वभ्रस्थे दीपवर्तिरभ्यधिकम् ।
ज्वलति दिशि यत्र शस्ता सा भूमिस्तस्य वर्णस्य ॥

इति । अपि च—

सर्वाश्च ताः प्रज्वलिता यदि स्युः
सर्वस्य वर्णस्य मही शुभा सा ।
निर्वापितास्तास्सकला यदि स्युः
समस्तवर्णैरपि वर्जनीया ॥

इति ।

इत्थं परीक्ष्य बहुधा सकलैर्विहीनां
दोषैर्गुणैरुपहितां वसुधामवेक्ष्य ।
शुद्धिं च शास्त्रविहितां विधिवत्प्रयत्नैः
कुर्यादनूनपरिकृष्टवसुन्धरायाः ॥

अत्राहुः—

एवं परीक्षयेत् क्षेत्रं सीरोत्कर्षेण वा पुनः ।
पाषाणमिष्टका लोहं धनं तण्डुलकच्छपौ ।
गोशृङ्गं दर्दुरं पश्येद्धलाग्रे यदि शोभनम् ॥
काष्ठेष्वग्निभयं लोष्टे कलहं निर्धनं तुषे ।
भस्मनि व्याधिरङ्गारे मृत्युरस्थ्नि कुलक्षयः ॥
सरीसृपेषु चोरेभ्यो भयमेवं परीक्षयेत् ।
एवं कृष्ट्वाऽथ बहुशः तत्र धान्यानि वापयेत् ।
संसिच्य तानि सस्यानि संरक्ष्याणि गवाङ्गणैः ॥
भक्षयित्वा निशा बह्वीर्वासयेत्तत्र गोगणम् ।
ततस्सुदिवसे गत्वा भूयः कुर्वीत भूतलम् ॥

इति । वराहमिहिरः—

कृष्टां प्ररूढबीजां गोऽध्युषितां ब्राह्मणैः प्रशस्तां च
गत्वा महीं गृहपतिः काले संवत्सरोद्दिष्टे ॥
भक्ष्यैर्नानाकारैर्दध्यक्षतकुसुमधूपगन्धैश्च ।
दैवतपूजां कृत्वा स्थपतीनभ्यर्च्य विप्रांश्च ॥
विप्रस्स्पृष्ट्वा शीर्षं वक्षश्च क्षत्रियो विशश्चोरू ।
शूद्रः पादौ स्पृष्ट्वा कुर्यात् रेखां गृहारम्भे ॥

अङ्गुष्ठकेन कुर्यात् मध्याङ्गुल्याऽथवा प्रदेशिन्या ।
मणिकनकरजतमुक्ताफलकुसुमैरक्षतैरथवा ॥
शस्त्रेण शस्त्रमृत्युर्बन्धो लोहेन भस्मनाऽग्निभयम् ।
तस्करभयं तृणेन चलिते काष्ठेन राजभयम् ॥
वक्रा पादालिखिता शस्त्रभयक्लेशदा विरूपा च ।
चर्माङ्गारास्थिकृता दन्तेन च भर्तुरशिवाय ॥
वैरमपसव्यलिखिते प्रदक्षिणे संपदो विनिर्देश्याः ।
वाचः परुषा निष्ठीवनक्षुतं चा शुभं कथितम् ॥
रविदीप्तो यदि शकुनः तस्मिन्काले विरौति परुषं वा ।
संस्पृष्टाङ्गसमानं तस्मिन् देशेऽस्थि निर्देश्यम् ॥
पृच्छाकाले गृहस्वामी यदङ्गं स्पृशति स्वयम् ।
भुवोऽधस्तत्प्रमाणेन शल्यं ब्रूयात्तदङ्गजम् ॥
तदानीं यदि वाश्यन्ते हस्त्यश्वश्वापदादयः ।
तस्मिस्तदङ्गसंभूतं तज्जमस्थि विनिर्दिशेत् ॥
दिशि शान्तायां शकुनो मधुरविरावी यदा तदा वाच्यम् ।
अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितेऽङ्गे वा ॥

इति । अन्ये त्वाहुः—

यजमानाङ्गचेष्टाभिर्वास्तोश्शल्यं विनिर्दिशेत् ।
यदङ्गं संस्पृशेत् कर्ता वास्तोः शल्यं तदङ्गके ॥
स्थितं विनिश्चितं ब्रूयात् तल्लक्षणमथोच्यते ।
शिरसः स्पर्शने वास्तोः मस्तके शल्यमुद्धरेत् ॥
अष्टतालादधस्तस्मिन् स्थितं तत्र न संशयः ।
नासिकास्पर्शने कर्तुः मौक्तिकं च करत्रयात् ॥

मुखस्पर्शे तु गृहिणः कांस्यं हस्तद्वयादधः ।
उरस्संस्पर्शने तत्र राजनं पञ्चतालतः ॥
नाभिस्पर्शे चतुस्तालात्कांस्यं शल्यं समुद्धरेत् ।
ऊरुसंस्पर्शने कर्तुः सार्धहस्तादधः स्थितम् ॥
ओष्ठे च स्पर्शने तत्र निर्दिशेज्जानुजङ्घयोः ।
स्तनमात्रादधस्तत्र नापितस्य क्षुरादिकम् ॥
पादस्पर्शे तु पादस्थं षोडशाङ्गुलकादधः ।
राजावर्तं महाशल्यमुद्धरेद्वास्तुतन्त्रवित् ॥
अंसस्पर्शेऽसजं शल्यमंसमात्रात्समुद्धरेत् ।
बाहुस्पर्शे तु कर्तुस्स्यादङ्गारं त्रिकरादधः ॥
करस्पर्शे करे वास्तोः खट्वाङ्गं च करादधः ।
एवं शल्यं समुद्दिष्टं ज्ञात्वा तस्मात्समुद्धरेत् ॥

इति । भूशुद्धिप्रकारो नारदेनोक्तः—

चतुरश्रं समं कृत्वा भूतलं शोधयेद्द्विजः ।
अस्थिकीटकपालानि तृणगुल्मानि शोधयेत् ॥
एकहस्तप्रमाणेन नाधस्ताच्छोधयेद्बुधः ।
शोधयित्वा समं कृत्वा ततस्सूत्राणि पातयेत् ॥

इति । अन्यैरुक्तम्—

हर्म्यादीनां स्थिराऽधस्थात् क्षेत्रं स्याद्वा जलान्तकम् ।
शिलान्तं वा ततस्तत्र निश्शल्यं क्षेत्रमाहरेत् ॥

एवं भूपरीक्षानन्तरकृत्यं नारदेनोक्तम्—

एवं लक्षणसंयुक्ते क्षेत्रे सम्यक् समीकृते ।
दिक्साधनाय तन्मध्ये समं मण्डलमालिखेत् ॥

यथोक्तलक्षणं शङ्कुं तन्मध्ये स्थापयेत्ततः ।
तच्छायाग्रं स्पृशेद्यत्र वृत्ते पूर्वापराह्णयोः ॥
तत्र कार्याविुभौ बिन्दू धृते पूर्वापराभिधौ ।
रेखा याम्योत्तरा साध्या तन्मध्ये भ्रमिना स्फुटम् ॥
तन्मध्यभ्रमिना रेखा कर्तव्या पूर्वपश्चिमा ।
दिङ्मध्यमत्स्याद्विदिशः साध्यास्सूचीमुखैस्तथा ॥
मध्यादिनिर्गतैस्सूत्रैः चतुरश्रं लिखेद्बहिः ।
चतुरश्रीकृते क्षेत्रे षड्वर्गपरिशोधिते ।
रेखामात्रे च कर्तव्यं प्राकारं सुमनोरमम् ॥

इति । अन्ये त्वाहुः—

मेषे तौलौ च या छाया सा प्राची प्रस्फुटा भवेत् ।

इति । एतन्निरक्षविषयम् । साक्षे तु यस्मिन् दिने मध्यप्रभाया अभावः तस्मिन्नहनि प्राच्याः प्रस्फुटत्वमिष्टछायया लक्ष्यम् । अन्यदिनेषु मध्यछायया याम्योत्तरे लक्ष्ये । ताभ्यां प्राची साध्या । अथवा समचतुरश्रक्षेत्रमध्ये शङ्कुं प्रतिष्ठाप्य तच्छङ्कुमूलनिर्गता एकोत्तरविंशतिरेखा विलिख्य तच्छङ्क्वग्रे मध्यप्रचारितदृक्प्रसरः प्रोद्यन्तं भास्वन्तमवलोकयेत् । तदाऽऽदित्यो यद्रेखाग्रे प्रोदेति सा च रेखा सायन्तनस्य भानोरपीष्टपादैः प्रतिद्व्यहमेकैकरेखाकॢप्त्या सूक्ष्मरेखा विलिख्य तच्छङ्कुमध्ये प्रचारितदृङ्मध्यविषुरेखासायनसूर्यभुजार्धांशसमसङ्ख्या यथा स्यात् तथा तां विषुवद्रेखां कृत्वा तदनुसारेण प्रागादिदिशोऽष्टौ नेयाः । एवं कृतदिग्विभागं चतुरश्रं क्षेत्रं ताडनघट्टनादिभिः स्थिरीकुर्यात् । तदा स्थलशुद्धिःस्यात् । उक्तं च—

खननात्पूरणाच्चैव ताडनादथ घट्टनात् ।
उपलेपान्मार्जनाच्च भूमिशुद्धिर्विधीयते ॥

इति । एवं शोधिते क्षेत्रे वास्तुपरिकल्पनार्थं वर्गशुद्ध्यानयनाय तत्प्रकारमाह—

**आयामेन युतं गृहस्य परितो विस्तारराशिं त्रिभिर्ह(हृ)त्वा नागहृतावशेषितफलान्याया ध्वजाद्याः क्रमात् । तस्मिन्नष्टगुणे हृते दिनकरैःशिष्टा धनायास्तथा नक्षत्रं भगणेन च त्रिगुणिते शक्रैर्विभक्ते व्ययः ॥ ६ ॥**

गृहस्य निर्मित्सितस्य परितस्समन्तादायामेन द्विपार्श्वदैर्घ्येण युतः विस्तारराशिं विष्कम्भयोगजं राशिं तदाख्यं त्रिभिः हृत्वा अष्टहृतावशेषितानि फलानि ध्वजाद्या अष्टौ दिगाया योन्याख्यास्स्युः । तस्मिन् पादाख्ये अष्टगुणे द्वादशभिर्हृते परिशिष्टा धनायास्स्युः । ततः तस्मिन्नेव अष्टगुणे पादभगणेन सप्तविंशतिसङ्ख्येन हृते अवशिष्टं नक्षत्रमश्विन्यादिकं स्यात् । चकारोऽनुक्तसमुच्चयार्थः; तेनायमर्थः सूचितः- लब्धफलं वयः बाल्यादिः । अष्टमे पदे त्रिंशता हृते शिष्टाः प्रतिपदादितिथयः । सप्तभिर्हृते शिष्टा आदित्यादिवारास्स्युरिति । पादाख्ये त्रिगुणिते चतुर्दशाभिर्भक्ते शिष्टा व्ययास्स्युः । अत्र वररुचिः—

विस्तारायामराशौ वसुगुणित इनैर्भाजिते शेषमायं
रामघ्ने मन्ववाप्ते व्ययमिह वसुभिः भक्तशेषं तु योनिः ।
अष्टाभिर्वर्धितेऽस्मिन् त्रिनवहृतफलं तद्वयश्शेषमृक्षं
पर्यन्ते त्रिंशदाप्ते तिथिऋषिभजिते वारमादित्यपूर्वम् ॥

इति । अत्राहुरिति शेषः । एवं योनिधननक्षत्रवयस्तिथिवारव्ययाख्याः सप्तवर्गाः। गृहादिषु शोध्या इति केचित् । अन्ये त्रयोदश वर्गा इत्याहुः—

योनिनक्षत्रवित्तानि व्ययश्चांशकजीवितम् ।
राशियोनिगणाः पक्षदिनवारस्वराः क्रमात् ॥
वर्गास्त्रयोदश प्रोक्ता देवद्विजनृपालये ।

इति । तेषु सप्तोक्ताः । अन्येऽपि राश्यंशकयोनिगणपक्षस्वराख्या एव षडुक्तास्स्वमत्योह्याः । यथा—नक्षत्रं चतुर्भिर्हत्वा द्वादशाभिर्हत्वा आप्ता मेषाद्या राशयः शिष्टास्तस्कराद्यंशकाः । योनयः श्वादयो गणाश्च देवादयो नक्षत्रात् ज्ञेयाः । पक्षौ तु तिथिभ्यः । स्वराश्च तिथिभ्यः नक्षत्रेभ्यो वा ज्ञेयाः । अन्ये पुनः वर्गशुद्धिमन्यथा नयन्ति । नारदः—

आयामगुणविस्तारं गृहस्य पदमुच्यते ।
तस्माद्धनं धनायर्क्षवारांशास्सङ्ख्यया समाः ॥
गजलोकाङ्कमातङ्गनवतर्कैस्तु ताडितात् ।
सूर्यभाष्टर्क्षशैलाङ्कविभक्ताच्छेषनः क्रमात् ॥

इति । अन्ये—

आयादि शोधयेद्दैर्घ्याद्विस्ताराद्वा तयोर्वधात् ।
विस्ताराद्योनिमायादि दीर्घादाहुर्गृहे परे ॥
तृतीयाष्टनवाष्टघ्नाद्वस्वर्कदशभिर्हतात् ।
मानाच्छिष्टं योनिमायं व्ययमृक्षं क्रमाद्भवेत् ॥
मानं चतुर्भिर्हत्वाऽऽप्तं नवभिश्शिष्टमंशकाः ।
तन्मानं सप्तभिर्हत्वा वारास्सप्तावशेषिताः ॥
तन्मानं नवभिर्वृद्धं त्रिंशदाप्ताधिकं तिथिः ।

इति । अन्ये—

पदं त्रिनिघ्नं वसुभिर्विभक्तं
शेषं ध्वजाद्यं प्रवदन्ति चायम् ॥

पदं नवघ्नं पुनरष्टभक्तं
गृहे धनायं मुनयो वदन्ति ॥
सप्तघ्नं च पदं तथाष्टभजितं लब्धाब्दमायुर्गृहे
शेषं तद्व्ययमामनन्ति पदकं चाष्टाभिरुत्ताडयेत् ।
पश्चाद्दक्षगणेन भोज्यविधिना शेषं तु नक्षत्रकं
नक्षत्रं तु चतुर्गुणं नवहृतं राशिस्तु शेषांशकः ॥

इति । ध्वजाद्यायानाह—

**ध्वजधूमसिंहशुनका वृषखरगजकाकसंज्ञिताः क्रमशः । आयाः प्राच्यादीनां ध्वजसिंहवृषद्विपाः स्वदिक्षु शुभाः ॥ ७ ॥**

ध्वजादयोऽष्टौ क्रमशः प्राच्यादीनामष्टदिशामायास्स्युः । तथा च श्रीपतिः—

ध्वजो धूमोऽथ सिंहश्श्वा सौरभेयः खरो गजः ।
ध्वाङ्क्षश्चेति क्रमादेतद्दिशामायाष्टकं स्मृतम् ॥

इति । तेषु ध्वजाद्याश्चत्वारो विषमायाः प्राच्यादिषु स्वदिक्षु शुभास्स्युः । अन्ये धूमादयश्चत्वारः समायाः न शुभदा इत्यर्थः । उक्तं च—

धूमेऽग्निभीतिः शुनि वित्तहानिः खरे कलिस्सर्वभयानि काके ।
स्वदिक्षु चान्ये शुभदा दिगाया ध्वजस्तु सर्वत्रगतः प्रशस्तः ॥

इति । सनत्कुमारः—

अर्थायति(अर्घायवि)र्ध्वजे धूमे कलहं विजयं हरौ ।
शुनि हानिर्वृषेऽर्थाप्तिर्नृपबाधा खरे भवेत् ॥
गजेऽभिवृद्धिः करटे शून्यं भवति निश्चितम् ।

इति । यद्यपि इह ध्वजः प्राच्यां स्वदिश्येव शुभ उक्तः; तथाऽपि सर्वदिक्षु गृह्यते । तथा च सनत्कुमारः—

सिंहो वृषो गजश्चैव स्वस्थानेषु शुभप्रदः ।
धूममेकं परित्यज्य ध्वजस्सर्वत्र शस्यते ॥

इति । अन्ये त्वेवमाहुः—यत् ध्वजः प्राग्याम्यपश्चिमदिक्षु शुभः । सिंहो दक्षिणपश्चिमोत्तरेषु त्रिषु शस्तः । गज उदक्पश्चिमयोः द्वयोरेव ग्राह्यः । वृषः प्रतीच्यां स्वस्थान एव ग्राह्यः नान्यत्रेति । तथाचोक्तम्—

ध्वजः प्राक् ध्वजसिंहौ द्वौ याम्ये सिंहगजध्वजाः ।
उदक्के सवृषाः पश्चात् वृषो नान्यत्र संस्थिते ॥

इति । गवाश्वशालादिष्वन्यदिग्गतोऽपि वृषः शस्यते । उक्तं च—

उष्ट्रकुञ्जरशालास्स्युर्ध्वजायेऽप्यथवा गजे ।
पशुशालाश्वशालाश्च ध्वजायेऽप्यथवा वृषे ।
द्वारशय्यासनामात्रे ध्वजसिंहवृषाश्शुभाः ॥

इति । केचित् धूमादीनपि महानसादिषु ग्राह्यानाहुः । तथा च नारदः प्रागादिषु स्नानागारादीन्युक्त्वा अन्ते प्राह—

उक्तान्येतानि शस्तानि स्वस्वाये स्वस्वदिक्ष्वपि ।

इति । धनायात् द्वादशाष्टौ वा तत्राधिक्ये शुभं विद्यात् । व्ययाधिक्यं तु वर्जयेत् । आयव्ययसाम्यमपि वर्ज्यम् । यथाऽऽह रल्लः—

अधिकव्ययं समव्ययमृक्षविरुद्धं यमांशकयुतं च ।
कर्तुस्समनामाक्षरमशुभं ताराविशुद्धं च ॥

इति । ऋक्षविरुद्धं—कर्तुर्विरुद्धराशिकम् । उक्तं च—

गृहाधिपतिराशेस्तु रिप्फादिनिधनेतराः ।
राशयश्शुभदाः प्रोक्ता (ग्रहस्य) श्शुभस्य मुनिभिस्सदा ॥

इति । ताराविरुद्धं यथा--

आयुः क्षयः तृतीयर्क्षे पञ्चमर्क्षे यशःक्षयः ।
आयुःक्षयः सप्तमर्क्षे भवत्येव हि कर्तृभात् ॥

इति । तारायोनियोगो विवाहवद्द्रष्टव्यः । गणयोगश्च--

स्वगणं चोत्तमं विद्यान्मध्यमं दैवमानुषम् ।
वैरञ्च दैवराक्षस्यं मरणं मानुषासुरम् ॥

इति । विशेषतो योषित एव राशितारााद्यानुकूल्यमिष्टम् ।
यथाऽऽहात्रिः—

दम्पत्योरानुकूल्यं यत् स्त्रिया वा तद्गृहं शुभम् ।
ग्रामदेवालयाचार्यादावानुकूल्यादि नेष्यते ॥

इति । अंशा नामसमफला यथा—

तस्करो भुक्ति शक्तचर्थनृपतिश्चलनिर्भयाः ।
निधनं क्लेशमंशेषु नामतुल्यं फलं गृहम् ॥

अन्ये त्वाहुः—

तस्करो भोजनं शक्तिर्धनं राजा नपुंसकम् ।
विपत्तिर्विषमे वृद्धिरंशकास्स्युर्नव क्रमात् ॥

इति । वयांसि पञ्च—बाल्यकौमारयौवनस्थाविरचरमाख्यानि ।

तेषु स्थाविरमन्त्यं च नेष्टमन्यत्त्रयं शुभम् ।
प्रशस्तास्तिथयो दर्शरिक्ताविष्टिविवर्जिताः ॥
अर्काङ्गारकयोर्वह्नि[1]श्चन्द्रे शुक्रेऽम्बुतो भयम् ।
बुधे जीवे भवेद्वित्तं मन्दे तस्करतो भयम् ॥

अपि च वारतिथिनक्षत्रजाः शुभयोगा ग्राह्याः । पूर्णा गुरुपुष्यादयः ।

---

[1] चन्द्रशुक्रौ ततो भयम्.

यथाऽऽहुः—

वरासिद्धामृतान् योगान् गृह्णीयाद्गृहकर्मणि ।
विषदग्धविनाशाख्यांस्तिथिवारर्क्षजांस्त्यजेत् ॥

इति ।

स्वराश्च पञ्चमं (मृत्युः) पत्युः परिहृत्य परे शुभाः ।

इति । प्रोक्तयोगेष्वायव्ययराशितारानुकूल्यमवश्यं ग्राह्यम् । यथाऽऽहरछुः—

अल्पदोषं गुणज्येष्ठं दोषाय न भवेद्गृहम् ।
आयव्ययौ प्रयत्नेन विरुद्धं भं च वर्जयेत् ॥

इति । वर्गशुद्धिमानीय गृहं कुर्यात् । तच्च वर्णक्रमेण विप्रादीनां विस्ताराद्दशाष्टषट्चतुर्भागाधिकमानदैर्घ्यवत् कार्यम् । तथा च वराहमिहिरः—

चातुर्वर्ण्यव्यासो द्वात्रिंशत्स्याच्चतुश्चतुर्हीना(र्भिन्ना) ।
आषोडशादिति परं न्यूनतरमतीव हीनानाम् ॥
सदशांशं विप्राणां क्षत्रस्याष्टांशसंयुतं दैर्घ्यम् ।
सषडंशं वैश्यानां भवति च शूद्रस्य पादयुतम् ॥
शालेयेषु गृहेष्वपि विस्तारो द्विगुणितं दैर्घ्यम् ।
हीनाधिकं स्वमानादशुभकरं वास्तु सर्वेषाम् ॥

इति । अत्र वास्तुमाने स्वामिहस्तप्रमाणदण्डो भवति । तथाचाहुः—

स्वामिहस्तप्रमाणेन मानं भवनमीरितम् ।

इति । अन्ये त्वाहुः—

द्वात्रिंशदङ्गुलः किष्कुः प्राजापत्यः चतुस्त्रिकम् ।
षट्त्रिंशद्धनुरित्युक्तमष्टात्रिंशद्धनुर्गृहम् ॥
दैवं धनुर्गृहं ज्ञेयं ब्रह्मक्षत्रे धनुस्तथा ।
प्राजापत्यं तु विट्छूद्रे प्राकृते किष्कुरुच्यते ॥

इति । हस्तप्रमाणमुक्तं श्रीधरेण—

हस्तोऽङ्गुलविंशत्या चतुरन्वितया चतुष्करो दण्डः ।

इति । अङ्गुललक्षणमन्यत्रोक्तम्—

तिर्यग्यवोदराण्यष्टौ ऊर्ध्वा वा व्रीहयस्त्रयः ।
मानाङ्गुलमिति प्रोक्तं वितस्तिर्द्वादशाङ्गुलम् ॥

इति । उक्तलक्षणाङ्गुलचतुर्विंशत्यायामो हस्तो गृहप्रमाणो ग्राह्यः । यत्पुनस्स्वामिहस्तप्रमाणमुक्तम् । तच्चिन्त्यम् ; प्रतिपुरुषं न्यूनाधिक्यसंभवात् । अपि च नरहस्तप्रमाणमत्र न युक्तम् । तस्य स्वस्वाङ्गुलैः षट्त्रिंशता प्रमितत्वात् । अत्र चतुर्विंशत्यङ्गुलप्रमितस्य ग्रहणं न्याय्यम् । तेनैव चापक्रोशयोजनादीनामभिधानात् । तथा च श्रीपतिः—

जालान्तःपतितेषु भास्करकरेष्वालोक्यते यद्रजः
स प्रोक्तः परमाणुरष्टगुणितैस्तैरेव रेणुर्भवेत् ।
तैर्वालाग्रमथाष्टभिः कचमुखैर्लिक्षा च यूकाष्टभिः
स्यात्ताभिश्च तदष्टकेन च यवोऽष्टाभिश्च तैरङ्गुलम् ॥
तैस्स्याद्द्वादशभिर्वितस्तिरुदितो हस्तश्च ताभ्यां पुनः
चापं हस्तचतुष्टयेन धनुषां क्रोशस्सहस्रद्वयम् ।
एकं क्रोशचतुष्टयेन गदितं सांवत्सरैर्योजनं
कक्ष्याभूगृहबिम्बधिष्ण्यपरिधिव्यासादि संचिन्तयेत् ॥

इति । उक्तप्रमाणेन हस्तेन गृहमानं कार्यम् । तच्च गृहं कर्तुः जन्मकालीनाष्टकवर्गशुभादिश्यं स्वजन्मराश्यनुकूलदिश्यं वा ग्राह्यम् । अष्टकवर्गप्रकारः प्रागुक्तः । जन्मराश्यनुकूलत्वमुक्तं कालदीपे—

अळिप्रभृतिषड्राशिजानां प्राचीगृहं शुभम् ।
एवं कुम्भात् वृषात्सिंहात् षट्षड्भानां क्रमाद्दिशः ॥

इति । प्रविशतो जन्मराशिः यथा वामतः स्यात् तथा गृहं कुर्यात् । अथ यस्तु समृद्धो विस्तारमिच्छन् पूर्वकॢप्तवास्तुनो बहिः स्वीकारं यदीच्छति सर्वदिक्षु समं गृह्णीयात् । एकस्यां दिशि वृद्धेर्दुष्टत्वात् । अथवा प्राग्वोदग्वा वर्धयेत् । तथा च वसिष्ठः—

गृहवृद्धिं (प्रतीक्षेत्तु) प्रतीच्यां तु समन्तात्तत्र वर्धयेत् ।
प्रागथोत्तरतो वाऽपि कुर्याद्वेश्म विवृद्धये ॥

केचित् गृहवृद्धिं नेच्छन्ति; दुष्टफलत्वात् । तथाच वराहमिहिरः–

प्राग्भवति मित्रवैरं मृत्युभयं दक्षिणेन यदि वृद्धिः ।
वित्तविनाशः पश्चादुदग्विवृद्धेर्मनस्तापः ॥

इति ।

पूर्वं तु यत्कृतं वेश्म क्षेत्रं तत्र न पूर्यते ।
पश्चिमां दक्षिणां त्यक्त्वा वर्धयेत् क्षेत्रमुत्तमम् ॥

इति । द्वारस्थानान्यपि प्राक्तनान्येव तथा च श्रीपतिः—

स्तम्भकुड्याङ्कणालिन्दद्वारदीर्घादिचूलिकाः ।
जीर्णोद्धारे तथैव स्युर्हीनाधिक्ये मृतिप्रदाः ॥

गृहस्थानं प्राचीनं न त्याज्यम् । यदुक्तम्—

पूर्वं तु यत्कृतं वेश्म द्वारं च यदि वा कृतम् ।
तत्त्यक्त्वाऽन्यत्कृतं चैव दोषो भवति दारुणः ॥

इति । पौराणिकास्तुलादयो न ग्राह्याः । यथाऽऽह वसिष्ठः—

पौराणिकाश्च न ग्राह्याः स्तम्भोत्तरतुलेष्टकाः ।
गृहं प्रवेशिताः पूर्वमग्निदग्धाः कुदेशजाः ॥

अपि च—

प्रशस्तेष्वपि वृक्षेषु गृहशल्यं सकोटराः ।
सवक्रास्सव्रणाश्शुष्का वृक्षास्तेऽप्यतिनिन्दिताः ॥

इति । अथ प्रसङ्गेन गृहविधौ वर्ज्या वृक्षा उच्यन्ते—

प्लक्षोदुम्बरचूताख्यनिम्बस्नुहिबिभीतकाः ।
ये कण्टका दग्धवृक्षा वटाश्वत्थकपित्थकाः ॥
अगस्त्य शिग्रुताळाख्यास्तिन्त्रिणीकाश्च निन्दिताः ।
पलाशकोविदारोणवृक्षास्तेऽप्यतिनिन्दिताः ।
धवामृतक्षीरवृक्षा मधूका मधुसंयुताः ।
छायाद्रुमाः पुष्पफलैरुपेताश्च महाद्रुमाः ॥
वल्लीवृतास्सवन्दाकाश्चित्राः पक्षिगणाश्रयाः ।
तटाकदेवतागारशून्यसद्मश्मशानगाः ॥
वल्मीकोद्यानसंभूताश्चैत्यवृक्षाश्च निन्दिताः ।
अन्योन्यमधिरूढाश्च वाय्वम्ब्वशनिपातिताः ॥
अन्तस्सुषिरयुक्ताश्च सशब्दं पतितास्तथा ।

न ग्राह्या इति शेषः ।

दग्धार्धानर्धसंशुष्कानन्यच्छिन्नांश्च नीरसान् ।
गजभग्नांस्तरून् गेहे प्रशस्तानपि वर्जयेत् ॥

इति । एवमुक्तदोषरहितं प्रशस्तं वृक्षं परीक्ष्य गृहस्तम्भार्थमाहरते । अत्राहुः—

कृष्णपक्षे चतुर्दश्यां रेवती रोहिणीयुता ।
यदा तदा गुरौ लग्ने गृहार्थं संभरेदिमान् ॥

सारसमुच्चये—

सुदिने वारनक्षत्रे सुयोगे करणान्विते ।
चन्द्रेऽनुकूलगे प्राह्णे सुलग्ने कृष्णपक्षके ॥
तक्षकं भृत्यवर्गं च पूजयित्वा विधानतः ।
उदङ्मुखः प्राङ्मुखो वा छिन्द्याद्वृक्षं सुशोभनम् ॥

इति । वृक्षपूजनं पूर्वेद्यू रात्रौ कार्यम्—

रात्रौ कृतबलीन् वृक्षान् दिवा छिन्द्याद्विचक्षणः ।

इति वचनात् । वृक्षाहरणे श्रवणादिपञ्चकं [1]यमादिसप्तकं च त्याज्य-मिति केचित्—

श्रवणादिपञ्चके [2]यदि यमसप्तकसंस्थिते निशानाथे ।
वृक्षे ह्यानीतेऽतिभयजननं देवलः प्राह ।

इति । वृक्षच्छेदने—

परशुर्जर्झरो नेष्टः शब्दस्निग्धो घनो हितः ।
पूर्वस्यामुत्तरस्यां च ईशान्यां च तथा दिशि ॥
पतिते चोत्तमं विद्यादन्यदिक्षु विवर्जयेत् ।

इति । स्तम्भार्थं वृक्षच्छेदने—

. . . . . तल्लक्षणे वाऽपि मण्डलं यत्र दृश्यते ।
पीतके मण्डले गोधा कृष्णे दीर्घभुजङ्गमः ।
स्निग्धेन तैलवर्णेन वृश्चिकं तत्र निर्दिशेत् ॥
मूषिकं कपिलेन स्यान्मञ्जिष्ठेन तु दर्दुरम् ।
तत्कपोताभके वर्णे गृहगोधां विनिर्दिशेत् ॥
अरुणाभे च सरटं मुद्गाभे श्वानमादिशेत् ।
गृध्रवर्णेन पाषाणं वृक्षान्ते दोषमादिशेत् ॥

इति । एवं विहितस्य स्तम्भस्य स्थापने वास्तुपुरुषसंस्थानं तदङ्गवशा-त्फलं चाह—

**मार्तण्डारूढराशौ विनिहितचरणस्तन्मदन्य-**
**स्तमूर्धा वामे पार्श्वे शयानो भ्रमति सः परितः**

---

[1] मखादिसप्तकं. [2] मखसप्तक.

**पूरुषो वास्तुरूपः । पादे यद्यर्थनाशः शिरसि च मरणं तस्य पृष्ठे विपत्तिः वक्षस्यूरौ च नाशश्शु-भफलमुदरे स्तम्भमाद्यं निदध्यात् ॥ ८ ॥**

पुरा किल कश्चित्प्रबलः पूर्वदेवो देवाधिपाय द्रुह्यन् मह्या(र्त्या)दिलोकान् व्याकुलयां चकार । ततस्त्रिपञ्चाशद्देवतास्संभूय तं पराभूय धरायां न्यपीपतन् । अथास्य पुनरुत्थानभीत्या आदित्यास्ते यथाग्रहं तदङ्गान्यधिष्ठाय तस्थुः स वास्तुपुमानास्त । वास्तुदेवतास्त्रिपञ्चाशदिति । तथाचोक्तं प्रयोगमञ्जर्याम्—

आसीत्पुरा सकललोकभयंकरश्च
क्रूरोऽसुरो भुजबलादतिगर्वितश्च ।
उर्वीतले निपतितो विजितः प्रशान्तो
देवैस्स वास्तुपुरुषश्चतुरश्रसंस्थः ॥
वेशे तस्य शिरस्तदा विनिहितं पादौ निरृत्या स्थितौ–
वायव्ये च हुताशने च भुजयोस्संस्थापिते कूर्परे ।
क्षिप्तं वक्षसि हस्तयोस्तलमथ प्रोत्तानकस्स्थापितः
तस्याङ्गेषु च देवता विनिहितास्ता वास्तुनो देवताः ॥

इति । अन्ये किमपि भूतमित्याहुः । तथाच वराहमिहिरः—

किमपि किल भूतमभवद्रुन्धानं रोदसी शरीरेण ।
तदमरगणेन सहसा विनिगृह्याधोमुखं न्यस्तम् ॥
यत्र च येन गृहीतं विबुधेनाधिष्ठितस्स तत्रैव ।
तममरमयं विधाता वास्तुनरं कल्पयामास ॥

इति । अयं स्थिरो वास्तुपुमान् । एष एवार्कचारवशात्परिभ्रमन् चर

उच्यते । स च सूर्याधिष्ठितराशौ न्यस्तपादः तस्मात् सप्तमे राशौ न्यस्तमस्तकस्सन् वामे पार्श्वे शयानः परितश्चतसृषु दिक्षु सूर्यचारवशात्स्वयं च परिभ्रमति । ततश्च कन्यादि त्रिषुत्रिषु मासेषु प्रागादिदिङ्मूर्धा प्रादक्षिण्येन परिभ्रमति । अत्रात्रिः—

क्रमात् त्रित्रिषु मासेषु स्त्रीचापान्त्ययुगादिषु ।
प्रागादिदिक्छिराश्शेते त्ववामं वास्तु पूरुषः ॥

अन्ये—

वास्तुवामाङ्गय . . . . . यैन्द्रात् कन्यादित्रित्रिके रवौ ।

इति । केचित् भाद्रपदादिमासेषु प्राच्यादिदिङ्मूर्धा वास्तुरित्याहुः । तथा च सनत्कुमारः—

प्राच्यां शिरा भाद्रपदादिमासै-
र्मार्गादिमासैर्यमदिक्छिरास्स्यात् ।
स फाल्गुनाद्यैर्दिशि पश्चिमायां
ज्येष्ठादिमासैस्त्रिभिरुत्तराङ्गः ॥

इति । चरस्य स्थिरस्य वाऽस्य वास्तुनरस्य पादस्थाने यद्याद्यस्तम्भं शिखां वा निदध्यात् कर्तुः धनहानिस्स्यात् । शिरस्थाने मरणं; पृष्ठे अदृश्याङ्गस्थाने विपत्तिर्भयरोगादिपीडा । वक्षस्स्थाने यदि नित्यं दुःखी; ऊरुस्थाने च स्वजनधनादिनाशः । उदरे कुक्षिस्थाने शुभफलं स्यात् । [1]हृन्नाभिस्थानेऽपि—

आद्यस्तम्भोऽस्य दृश्येऽङ्गे नाभिहृच्छिरपादनः ।

इति वचनात् । वर्ज्यस्थाने स्तम्भार्थं शिलान्यासार्थं खननमपि न कार्यम्,

[1] हृन्नाभिस्थाने वर्जयेत् । आद्यस्तम्भो दृश्यतेऽङ्गे ।

यथाऽऽह सनत्कुमारः—

शिरः खनेन्मातृपितृप्रहाणिः खनेच्च पृष्ठं भयरोगपीडा ।
पुच्छं खनेत्स्त्रीषु च गोषु हानिः कुक्षौ सुतस्त्रीधनधान्यसंपत् ॥

इति । करस्कन्धयोश्शुभमित्यत्रिः—

सुतायुश्श्रीः करस्कन्धे निधिः पादे सुतादिभे ।

इति । अथ वास्तुमानं द्वादशधा विभज्य केचित्तद्द्वादशांशमितानि शिरोवक्त्रकण्ठवक्षोहृत्कुक्षिनाभिगुह्योरुजानुजङ्घापादाख्यानि वास्तुनरस्याङ्गानि द्वादश कल्पयित्वा तेषु प्रथमशिलास्तम्भादिषु फलं वदन्ति —

मरणं शिरसस्स्थाने वक्त्रे चैव धनायुषी ।
धनायुषी करस्कन्धे अर्थनाशश्च वक्षसि ॥
हृदयम् .......... हृत्कुक्षौ सर्वसमृद्धयः ।
नाभ्यूरुजानुजङ्घे च पादे सुतधनक्षयः ॥
पृष्ठे च यद्वद्क्लेशाद्यदृश्याङ्गेऽर्थसुतादयः ।
प्रथमे तु शिलान्यसे स्तम्भद्वाराधिरोहणे ॥

इति । केचिदीशान्यामादौ शिलान्यासं स्तम्भस्थापनं च कुर्वन्ति न वास्तुकुक्षिमवेक्षन्ते । तथा च वराहमिहिरः —

उक्तः पादे सुतधनक्षयः पृष्ठे विपद्भयक्लेशः ।
दृश्ये शेषाः प्रदक्षिणेन स्तम्भाश्चैवं समुत्थाप्याः ।

इति । ते च स्तम्भास्समसंख्या ग्राह्याः—तथा च नारदः—

गृहपादसमास्स्तम्भाः समाश्शस्ताः . . . . नराः ।

इति । केचित् स्तम्भाद्यभावे शङ्कुन्यासमाचरन्ति तथा च नारदः—

पञ्चायामदलं नाभिस्तस्माद्‍ध्यङ्गुलत्रयम् ।
कुक्षिस्थाने न्यसेच्छङ्कुं पुत्रपौत्रविवर्धनम् ॥

सम्यग्लक्षणसंयुक्तं परिकल्प्य शुभे दिने ।
षड्वर्गशुद्धसूत्रेण सूत्रिते धरणीतले ॥

इति । शिलान्यासस्तम्भनविधिः गर्गेणोक्तः—

शिलाविन्यासकाले तु स्तम्भानां चोपकल्पयेत् ।
समुद्रजानि रत्नानि सुवर्णं रजतं तथा ॥
सर्वबीजानि गन्धांश्च दर्भान् सुमनसः फलम् ।
हुत्वाऽग्निं विधिवत्काले मुहूर्ते चोपपादिते ॥
गृहकोणेषु संपूर्णान् कुम्भान् संस्थाप्य पूजयेत् ।
ततः पुण्याहघोषेण शिलान्यासं प्रकल्पयेत् ॥
ऐशानीमादितः कृत्वा प्रादक्षिण्येन विन्यसेत् ।

शिलाविन्यासमन्त्रः—

नन्दे नन्दय वासिष्ठे वसुभिश्चामुहि प्रजाः ।
भद्रे काश्यपदायादे प्रजानां भद्रमावह ॥
जये भार्गवदायादे प्रजानां जयमावह ।
पूर्णे भार्गवदायादे पूर्णकामां प्रजां कुरु ॥
सर्वबीजसमायुक्ते सर्वगन्धौषधीयुते ।
रुचिरे नन्दने नन्दे वासिष्ठे रम्यतां गृहे ॥
प्रजापतिसुते देवि चतुरश्रे महीसुते ।
सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम् ॥
पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते ।
भव भूतिकरी देवि गृहे भार्गवि रम्यताम् ॥
अव्यक्ते चाक्षते पूर्णे मुनेरङ्गिरसस्सुते ।
इष्टतां संप्रयच्छ त्वं प्रतिष्ठां मे गृहे कुरु ॥

ग्रामस्वामिपुरस्वामिगृहस्वामि परिगहे ।
मनुष्यपशुहस्त्यश्वधनवृद्धिकरी भव ॥

इति—

अनेनैव विधानेन स्तम्भद्वाराधिरोहणम् ।
वास्तुविद्याविधानज्ञः कारयेत्सुसमाहितः ॥

इति । वास्तुशास्त्रे—

द्विजान् देवान् समभ्यर्च्य प्रसन्नवदनश्शुचिः ।
शुद्धश्शुक्लाम्बरधरस्सुमुखस्सूक्तवाचकः ॥
फलप्रसूनरत्नाद्यैस्स्थूणानि विविधैस्ततः ।
संपूजयेद्यथाशक्ति स्वर्णं कूपे विनिक्षिपेत् ॥

ते च स्तम्भास्समसङ्ख्या ग्राह्याः—

गृहपादा गृहस्तम्भास्समाश्शस्ता न चासमाः ।

इति । वराहमिहिरः—

छत्रस्त्रगम्बरयुतः कृतधूपविलेपनस्समुत्थाप्यः ।
स्तम्भस्तथैव कार्यो द्वारोच्छ्रायः प्रयत्नेन ॥

तत्र—

नातिद्रुतं नच विलम्बितमप्रकम्प्य-
मध्यस्तमाल्यवसनादिविभूषणं च ।
उत्थानमिष्टमशुभं यदतोऽन्यथा स्यात्
तच्छान्तिभिर्गृहपतेश्शमयेत्पुरोधाः ।

अन्यत्र—

छत्रस्य भङ्गे पतने च पत्यु-
र्मृत्युः पताकापतने च पत्न्या ।

विभूषणानां पतने रजस्युः ?
स्वस्याथ पाते पतिपुत्रनाशः ॥

वराहमिहिरः—

प्रागुत्तरोन्नते धनसुतक्षयस्सुतवधश्च घुस्थित्याम् ।
वक्रे बन्धुविनाशो न स्युर्गर्भाश्च दिङ्मूढे ॥

अन्यत्र—

स्तम्भभङ्गधरणे पतिमृत्युस्तस्करादिभयकृन्मधुलीने ।
तत्र हन्त्यथ पुरोहितमुल्का वैद्युतो निपतितो गृहपत्नीम् ॥

इति । उत्थापितं स्तम्भं छादयेत् । अपच्छादने दोषस्संभवेत् ।
तथा हि उक्तं च—

अकृत्वा च्छादनं स्थूणां यदि पक्षी समारुहेत् ।
तस्य नाशो भवेत् क्षिप्रं गौतमस्य वचो यथा ॥

अत्र वराहमिहिरः—

क्रव्यादकौशिककपोतककाककङ्कै *
स्स्तम्भे स्थितं महदुशन्ति भयं नराणाम् ।
चाषेण चापि युवपुत्रभयं वदन्ति
श्येनो विलोचनभयं गृहिणः करोति ॥

स्थापनार्थं कल्पितस्य स्तम्भस्यापि भेदनादि नेष्टम् । यथाऽऽहुः—

कृतं स्थितं च यत्स्थूणं यद्यारोहन्ति पक्षिणः ।
भेदनात् तत्क्षणादेव स्थानभ्रंशोऽभिजायते ।

इति । वास्तुशास्त्रे—

तथा संस्थापितस्तूणाभेदने भेदनं भवेत् ।
भेदने बन्धुसंभेदः तत्क्षणे कलहं भवेत् ।

वेधने भयमत्युग्रं चोरेभ्यश्चार्थनाशनम् ।

स्थानभ्रंशो भवेद्भ्रंशे तस्मात्तानि न कारयेत् ॥

इति । केचिदादौ स्तम्भद्वयं स्थापयन्ति । तथा योगीश्वरेणोत्पल-................उक्तम् । अत्र केचिच्चरवास्तुनरस्येत्युपक्रम्य दृग्गोचरपुरोऽङ्के पादनाभिहृच्छिरोवर्जं शङ्कुस्थापनकाले कन्याकुमाराख्यं स्तम्भद्वयं आदौ स्थापयन्तीति । यस्तु वास्तुपुरुषः स्थिरः स अधोमुख ऐशान्यां न्यस्तमस्तकश्च—

ऐशान्यां हि शिरो भूत्वा शेते नित्यमधोमुखः ॥

इति स्मरणात् । तस्य वामभागे कुक्षिस्थाने स्तम्भं स्थापयेत् । दाक्षिणभागे वर्जयेत्

वामदक्षिणभागौ तु तस्यामृतविषाह्वयौ ॥

इति वचनात् । तस्य मस्तकस्थानेऽपि ऐशान्यां स्थापनमनिषिद्धम् । यस्तु स्थिरवास्तुरुक्ता ? न क स्तस्य कृतोपवासशिशिल्पिजनः शुभे विलग्ने क्षीरवृक्षं (फलं) पलाशिनं वा छित्वा उदक्पतितं पुरो वा परिगृह्य करप्रमाणं शङ्कुं कृत्वा अखण्डितास्सुदृढाः अक्षताशिलाश्चानीय अथ वास्तुमध्ये कूर्मशेषशार्ङ्गिश्रीध्रुवादीन् परितो दिक्षु दिगीशान् दिग्गजांश्च संपूज्य शर्वादिकोणेषु नन्दासुभगासुमङ्गलाभद्रकरीसूक्तैः क्रमेण शिला विन्यस्य ध्रुवान्तिके खात्वा शङ्कुं प्रतिष्ठाप्य सजलाक्षतव्रीहिपञ्चगव्यमध्वक्तया मृदा परिपूर्य अथ ध्रुवादुत्तरतो होमं कुर्यात् । ततो दैवज्ञः विप्रान् तक्षकं च पूजयेत् । अयमेव स्तम्भस्थापनेऽपि क्रमः ॥

अथ प्रागादिगृहाणां द्वारलक्षणमाह—

**प्राच्याद्याशासद्मनां द्वारमुक्तं वारुण्यादौ दिग्विभागे चरर्क्षे । धाम्नो भागान् दक्षिणान् पञ्च सव्यौ द्वौ च त्यक्त्वा मध्ययोस्तत्प्रशस्तम् ॥ १ ॥**

प्राच्यादिगृहाणां वारुण्यादौ स्वपञ्चमादिग्भागे चरराशिस्थाने द्वारमुक्तम् । अमुमेवार्थमाह श्रीपतिः—

प्रत्यक् ध्वजे द्वारमथोक्षिण पूर्वं
हरावुदक्स्याद्द्विरदे च याम्यम् ॥

इति । यथा वास्तुपुरुषाभिमुखादिङ्मुखं गृहं भवति तथा द्वारं कार्यम् । तत्प्रतिकूलदिङ्मुखं परिहार्यम् । यथाऽऽह नारदः—

यद्दिङ्मुखोऽस्ति पुरुषः कुर्यात्तद्दिङ्मुखं गृहं ।
प्रतिकूलमुखं गेहं शोकरोगभयप्रदम् ॥

इति ।

वारुण्यादौ दिग्विभागे द्वारं कुर्याद्विचक्षणः ।

इत्यभिधानात् । विदिशि द्वारं निषिद्धम् । तथाच यमः—

इन्द्रयमवरुणसोमे दिशि कुर्याद्द्वारकं प्रयत्नेन ।
न विदिग्द्वारं कुर्यात्त्यक्त्वा नैरृत्यमादिशेद्वाऽन्यत् ॥

इति । अपि च चरर्क्षे द्वारनियमोऽपि विदिशि द्वारं निषेधयति । अत्र विश्वकर्मा—

एकं मेषे भवेद्द्वारं द्वितीयं कर्किसंयुतम् ।
तुलागतं तृतीयं तु चतुर्थं मकरे स्थितम् ॥

इति । अत्रैतदन्यविषयमपि द्वारदेशसाम्यादुक्तम् । अत्रात्रिणा विशेष उक्तः—

द्वारं तुलोक्षतक्षान्ते(?) युग्मनार्योस्तु मध्यमम् ।
अन्यत्रान्यत्र वा द्वारं दक्षिणांशविवृद्धि(दं)मत् ।
सर्वांशवृद्धौ क्लेशस्स्याद्दृग्द्वारं त्यजेदपि ।
प्रदक्षिणं कर्तृराशेर्निर्गमस्तु धनादिकृत् ॥

इति। निम्नेऽष्टमराशिस्थाने वा द्वारं न कुर्यात् । तथा चोक्तम्।

यत्रोन्नतो भवेद्देशः तत्र द्वारं परं स्मृतम् ।
प्लवने तु तथा द्वारं नैव कैश्चिद्विधीयते ।
नचाष्टमहते राशौ सम द्वारं विदुः परे ॥

इति । तच्च द्वारं धाम्नो गृहमानस्य नवधा विभक्तस्य दक्षिणान् पञ्च भागान् सव्यौ—वामौ द्वौ भागौ च त्यक्त्वा परिशिष्टयोः मध्यगतयोः विभागयोः शस्तम् । केचित् गृहदैर्घ्यं नवधा विभज्य तेषु गृहस्य दक्षिणतः पञ्च वामतः त्रीन् भागांस्त्यक्त्वा मध्येऽवशिष्टे भागे द्वारं कार्यमित्याहुः । तथाच यमः—

नवभागं गृहं कृत्वा पञ्चभागास्तु दक्षिणे ।
त्रिभागान् वामतः कृत्वा शेषं द्वारस्य लक्षणम् ॥

इति । एतदेकाशीतिपदपक्षमाश्रित्योक्तं । तथाच नारदः—

आयामेषु चतुर्दिक्षु प्रागादिषु चतुर्ष्वपि ।
अष्टावष्टौ प्रतिदिशं द्वाराणि स्युर्यथाक्रमम् ॥

इति । अत्र वराहमिहिरः—

नवगुणसूत्रविभक्तेनाष्टगुणेनाथ वा चतुष्षष्टिः ।
द्वाराणि तेषु विद्यादनलादीनां फलोपनयः ॥

अनलभयं श्रीजन्म प्रभूतधनता नरेन्द्रवाक्कम्यम् ।
क्रोधपरताऽनृतत्वं क्रौर्यं चौर्यं च पूर्वेण ॥

अत्र पर्जन्ये निस्सत्वं । सूर्ये महाधनं । सत्ये शस्त्रहननं । भृशेऽतिक्लेशः । अन्तरिक्षे चोरैर्धनहानिरित्यन्ये—

अल्पसुतप्रेष्यत्वे नीचत्वं भक्ष्यपानसुतवृद्धिः ॥
रौद्रं कृतघ्नमथनं सुतवीर्यघ्नं च याम्येन ।

अत्र प्रथमे निधनं । पूष्णि बन्धनम् । गन्धर्वे अनातङ्कम् । भृङ्गराजे व्याधिभयमित्यन्ये—

सुतपीडा रिपुवृद्धिर्धनसुतलाभः समस्तगुणसंपत् ॥
पुत्रप्राप्तिर्वैरं सुतहानिस्स्त्रीविपच्चोदक् ॥

षष्ठे वृद्धिरित्यन्ये । द्वारमेकस्मिन्नेव पदे स्वफलदम् । द्वयोर्मिश्रम् । यथाऽऽह गर्गः—

पदे पदे कृतं श्रेष्ठं द्वारं स्वफलदायकम् ।
पदद्वये कृतं द्वारं व्यमिश्रफलदायकम् ॥

इति । एतन्मार्गद्रुमादिविद्धमशुभदम् । यथा—

मार्गतरुकोणरूढस्तम्भभ्रमविद्धमशुभदं द्वारम् ।
उच्छ्रायद्विगुणामितां त्यक्त्वा भूमिं न दोषाय ।
रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा ।
पङ्कद्वारे शोको व्ययोऽम्बुनिस्राविणि प्रोक्तः ॥
कूपेनापस्मारो भवति विनाशश्च देवताविद्धे ।
स्तम्भेन शस्त्रदोषः कुलनाशो ब्रह्मणो विमुखे ।

बृहस्पतिः—

कुड्यं भित्वा न कर्तव्यं द्वारं तत्र सुखेप्सुभिः ।

द्वारे च जालनवीस्रावं नैव कुर्याद्विचक्षणः ॥
उन्मादस्स्वयमुद्घटिते (?) नाशस्स्वयं पतिते ।
मानाधिके नृपभयं दस्युभयं व्यसनदं नीचे ।
द्वारं द्वारस्योपरि यत्तन्न शिवाय सङ्कटं यच्च ।
आध्मातं क्षुद्भयदं कुब्जं कुलनाशनं भवति ।
पीडाकरमतिपीडितमन्तर्विनतं भवेदभावाय ॥
बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभिः पीडा ।
मूलद्वारं द्वारैरन्यैरतिसन्दधीत रूपढ्या ।
घटपत्रप्रमथादिभिश्च (?) तन्मङ्गलैश्चिनुयात् ॥

इति । अन्यत्र—

द्वारं सचतुष्षष्ठ्यङ्गुलमुत्सेधं तदर्धविस्तारम् ।
अत्युच्छ्रितमाग्निभयं त्वतिनीचे क्षुद्भयप्रदं द्वारम् ॥

इति । एतत् गृहद्वारम् । पुरप्रासादादिद्वारस्य विशेष उक्तः—

सप्तहस्तं पुरद्वारं विस्ताराद्विगुणोच्छ्रयम् ।
वेश्मनां पञ्चहस्तं तु षोडशाङ्गुलवर्जितम् ॥

इति । तत्काले गुरुणोक्तः—

ध्रुवभे . . . . शुभ वारे स्थिरलग्ने शुभे तिथौ ॥
द्वारं स्थाप्यं युतं चित्रैः सर्वसंपद्विवर्धनम् ।
वसुचित्रार्यमविश्वाविष्णवर्केन्द्रशिवमूलभम् ।
ऊर्ध्ववंशद्वारदार्वोस्स्थापने केचिदूचिरे ॥

इति । एवं स्थापितस्य द्वारस्य मूले कवाटं स्थापयेत् । तच्च प्रविशतां दक्षिणतः कार्यम् ।

दक्षिणे पश्चिमे वाऽपि कवाटं स्थापयेत् गृहे ॥

इति । तत्कालो गुरुणोक्तः—

चरे स्थिरे च नक्षत्रे बुधशुक्रादिने तिथौ ।
शुभे कवाटयोगस्स्यादिस्वभावोदये ग्रहे ॥

इति । तद्वास्त्वभितो भित्तिं कुर्यात् । यथोक्तम्—

इशाने मृत्तिकां गृह्य भित्तिं कुर्याद्विचक्षणः ।
सुश्लक्ष्णां सुप्रमाणां च धनदान्यसमृद्धये ॥
नातिस्थूलां नातिकृशां नात्युच्चां नातिकुब्जकाम् ।
हस्तद्वयप्रमाणेन भित्तिं कुर्याद्विचक्षणः ॥
ब्रह्मक्षत्रस्य या भित्तिरुत्सेधोऽस्या दशैव तु ।
विट्छूद्रयोर्नवाष्टौ च प्रदेशाऽऽप्राकृते स्मृताः ॥
प्राकारे परिखां भित्तिं परिक्षिप्तानि यानि च ।
प्रदक्षिणं प्रशसन्ति नापसव्यं कथं चन ॥
शोभनं धनलाभं च शोकं मरणमेव च ।
चतुर्दिक्ष्वपि विज्ञेयं दक्षिणादिषु चोन्नतम् ॥
लोष्टबाहुल्यतो युद्धं तुषे भित्तौ दरिद्रता ।
भित्तिविनाशे चोरैरर्थविनाशो बहिर्गतेऽस्य भयम् ॥
अभ्यन्तरगे स्त्रीणां भयङ्करा ... ......... ॥

स्तम्भादीनामुत्थापनादिकं च सर्वं प्रादक्षिण्येन कार्यम् । "प्रदक्षिणं प्रशंसान्ति" इति । वचनात् । तुलावंशादिकं प्रागग्रमुदग्रं वा निधापनीयम् ॥

पूर्वाग्रं योजयेद्वंशमुत्तराग्रमथापि वा ।
दक्षिणं पश्चिमाग्रं च वर्जनीयं विशेषतः ॥

इत्यत्र वंशग्रहणस्य तुलादीनामुपलक्षणत्वात्। तत्कालश्चोर्ध्वभे ग्राह्यः—

मूलचित्राश्विनीत्याद्याः पञ्चोर्ध्वाश्शेषितास्त्वधः।
ऊर्ध्वर्क्षे द्वारवंशादि शिष्टे कूपादि कारयेत्॥

इति। ध्रुवर्क्षे द्वारोर्ध्वदारु स्थाप्यम्। स्थिरोदयेऽत्युच्छ्रितमतिनीचमतिविस्तृतमतिसंक्षिप्तं च न कार्यम्। यथाऽऽहुः—

अत्युच्छ्रितं राजभयं विदध्यात् वह्नेर्भयं तत्कुरुतेऽतिनीचम्।
अत्यन्तविस्तारमनर्थकारि संक्षिप्तवास्तु स्वधनक्षयाय।
तस्माद्विभवसादृश्यं गृहं कुर्यात्प्रमाणतः।
तेनातिरिक्तसे(?) गेहे दोषो भवति निश्चितम्॥

**लग्नपुत्ररिपुविक्रमस्थिताः शुक्रजीवशनिभास्करा यदा। यत्तु वास्तु विनिवेश्यते तदा तत्तु वत्सरशतद्वयं स्थिरम्॥१०॥**

इति॥ अथ यथोक्तकालालाभेऽपि शुभप्रदान् वास्तुनिवेशयोगानाह—

शुक्रादयश्चत्वारो लग्नादिचतुस्स्थानस्थिता यदि भवन्ति तदा काले यद्वास्तु विनिवेश्यते प्रथमशिलान्यासस्तम्भप्रतिष्ठादिकं यत्क्रियते तद्वास्तु गृहं वत्सरशतद्वयं थिरं भवति। केचिदत्र षष्ठे कुजमाहुः। यथा—

लग्ने भृगुः पुत्रगतश्च जीवः षष्ठे कुजः तीक्ष्णकरस्तृतीये।
निवेशने यस्य गृहस्य तद्धि शतद्वयं तिष्ठति वत्सराणाम्॥

इति। योगान्तरमाह—

**तनुजलास्तसहोदरशत्रुगा गुरुसितेन्दुजमन्द-**

**दिवाकराः ॥ यदि तदाविहितं भवनं नृभिर्जगति तिष्ठति तच्छरदां शतम् ॥ ११ ॥**

जीवादयः पञ्च लग्नादिपञ्चस्थानस्थिता यदि स्युः मनुजैः तदा विहितं गृहं वर्षाणां शतं स्थिरं तिष्ठति । यथोक्तम्—

उदये गुरुरस्तगृहे शशिजस्सहजे रविजश्च रविश्च रिपौ ।
जलगे च सिते भवनस्य तदा शरदां शतमायुरुशन्ति बुधाः ॥

इति । अन्यं योगमाह—

**सुखे गुरुः शशी च खे कुजार्कजौ च विक्रमे। यदा तदा कृतं गृहं न हीयते शतं समाः ॥ १२ ॥**

चतुर्थे गुरुः दशमे चन्द्रः तृतीये कुजमन्दौ च यदा स्तः तदा कृतं गृहं शतं वर्षाणि न हीयते—न नश्यतीत्यर्थः ॥

अमितायुर्योगमाह—

**निजतुङ्गवर्तिनि तनौ दितिसुतगुरौ गुरौ च सुखे । लाभं गतवति च शनौ कृतं गृहं जगति वर्धते श्रिया ॥१३॥**

स्वोच्चस्थे शुक्रे लग्ने, गुरौ दशमे, शनौ लाभे स्थितवति सति कृतं गृहं सुचिरं श्रिया जगति वर्धते । उक्तं च—

स्वोच्चवर्तिनि भृगौ विलग्नगे देवमन्त्रिणि रसातलेऽथवा ।
स्वोच्चगे रविसुतेऽथवा युगे स्यात् स्थितिः खलु चिरं सहश्रिया ॥

इति दर्शनादेतद्योगत्रयं केचिद्रूचुः। योगत्रयपक्षे निजतुङ्गवर्तिनीति त्रिष्वपि विशेषणम्। योगान्तरमाह—

**वपुषि स्थिते स्वगृहतुङ्गगे विधौ श्रितकण्टके च सुरराजमन्त्रिणि॥ विहितं गृहं धनसमृद्धिसंयुतं निरुपद्रवं भुवि चिराय तिष्ठति॥**

एतस्य वास्तुशास्त्रवचनमेव व्याख्यानम्।

स्वक्षेत्रस्वोच्चगे चन्द्रे लग्नगे केन्द्रगे गुरौ।
कृतं श्रीमत् गृहं तिष्ठेत् चिरायुर्निरुपद्रवम्॥

इति। स्वोच्चस्वराशिसुहृदृक्षतदंशकस्थे
लग्नाधिपे सति विलग्नगते गृहे वा।
श्रीमत् कृतं भवति गेहमतोऽन्यसंस्थे।
दारिद्र्यदुःखरिपुभीतिपरिप्लुतं तत्।

स्वोच्चस्वक्षेत्रस्वसुहृद्राशिषु तन्नवांशकेषु वा स्थिते लग्नाधिपे यत्कृतं गृहं तत्संपद्युक्तं स्यात्। अथवा तथाविधे ग्रहे लग्नस्थे सति कृतं गृहं श्रीमत् भवति। अतः—स्वोच्चादेरन्यत्र। स च अरिगे तदंशे वा स्थिते लग्नाधिपे तथाविधे वा ग्रहे लग्नस्थे च यत् गृहं क्रियते तत् दारिद्र्यदुःखशत्रुभयैर्विनष्टं जायते। अत्र वास्तुशास्त्रं,—

मित्रस्वोच्चांशराशिस्थे लग्नेशे लग्नगेऽपि वा
ग्रहे कृतं गृहं श्रीमज्जायते निरुपद्रवम्।
नीचारिभे तदंशे वा लग्नेशे लग्नगे ग्रहे
कृतं सद्म सदाऽनर्थदुःखशत्रुभयालयम्॥

इति । नीचादिस्थाने प्रतिगृहं फलविशेष उक्तश्श्रीपतिना—

रवौ गृहस्थो गृहिणी शशाङ्के वसन् सिते देवगुरौ च सौख्यम् ।
विनाशमायाति बलेन हीने नीचस्थिते वाऽस्तमुपागते वा ॥

इति । शत्रुवर्गगः कश्चिद्गृहस्सप्तमे दशमे वा स्थितश्चेत्तद्गृहं स्वस्य न तिष्ठति । यथाऽऽहुः—

एकोऽपि नूनं परभागवर्ती वियत्स्मरस्थः खचरोऽब्दमध्ये ।
करोति गेहं परहस्तयातं स्याद्दुर्बलश्चेदिह वर्णदेवे ॥

इति । अत्रैकदेशकथनेन सूचिताः केचिदन्ये योगास्सन्ति । ते यथा—

शशाङ्कजीवौ खरसातलस्थौ कुजार्कजौ लाभगतौ च यस्य ॥
प्रारम्भकाले भवनस्य तस्य स्थितिर्निरुक्ता शरदामशीतिः ॥
यदि विलग्नगतो भृगुजोऽम्बरे शशिसुतः खलु केन्द्रगतो गुरुः ।
दिनकृदायगतश्च तदा बुधैः शतमितायुरुदीरितमालयम् ॥

सनत्कुमारः—

भृगौ लग्नगते जीवे मध्याह्नेऽस्तमयेऽर्कजे ।
गृहं संस्थापयेद्योगे शतवर्षाणि तिष्ठति ॥
मन्दे लग्नगते चन्द्रे मध्याह्नेऽस्तमये बुधे ।
योगेऽस्मिन् विहितं गेहं षट्छताब्दानि तिष्ठति ।
बुधे लग्नगते चन्द्रे मध्याह्नेऽस्तमये शनौ ।
तदा सद्म कृतं सप्तशतवर्षाणि तिष्ठति ॥
चन्द्रे लग्नगते मन्दे मध्याह्नेऽस्तमये बुधे ।
तदा कृतं शतं चाष्टौ शतवर्षाणि तिष्ठति ।
सूर्ये लग्नगते चन्द्रे मध्याह्नेऽस्तमये गुरौ ।
तदा वर्षसहस्राणि गृहं तिष्ठति निर्मितम् ॥

इति । गुरुः

वैष्णवान्त्यांशकस्थेन्दुविलग्ने गृहमारभेत् ।
पुनश्चास्मिन् विशेद्योगे कुलसंपद्विवृद्धयः ॥
मन्दे च स्वांशगे लग्ने नीचारातिगृहं विना ।
नक्षत्रे च स्थिरे स्थाप्यं चिरकालं स्थिरं गृहम् ॥
वारनक्षत्रयोगेषु शुभाख्येष्वखिलेषु च ॥
जीवलग्ने गुरौ स्थाने गेहारम्भश्शुभप्रदः ॥
जीवे शुक्रयुते चन्द्रे स्वराशौ लग्नगे तदा ।
गृहारम्भश्शुभः प्रोक्तो नात्र शून्यादिभिर्भयम् ॥
जलराशिगते शुक्रे शुक्रवारे स्वलग्नगे ।
त्रिकोणे वा भवेद्वेश्म वह्निना तु न बाध्यते ।
गुरौ वा भार्गवे वाऽथ चन्द्रेण सह लग्नगे ।
तदा संस्थापितं वेश्म वज्राग्निर्न तु बाधते ।
आर्यम्णे तु निशानाथे शशिवारे स्थिरांशगे ।
निलयान् नगरान् वाऽपि सिंहलग्ने तदारभेत् ।
पञ्चमांशगते चन्द्रे मृगस्य कृतमालयम् ।
तल्लग्नं प्रविशेदेव धनधान्यसुखप्रदम् ॥

इति । अथ गृहार्थं दारुच्छेदनस्तम्भस्थापनतृणाच्छादनेषु योगत्रयमाह ॥

**छिन्द्याच्च दारु चतुराननभे गृहार्थं स्तम्भादिकं हिमरुचेरुदये निदध्यात् ॥ केन्द्रे गुरौ वपुषि दैत्यगुरौ बलाढ्ये संछादयेद्गृहमुदेतुमनास्तृणाद्यैः ॥**

चतुराननो—ब्रह्मा तस्य भं रोहिणी। यद्वा चतुरमाननं यस्येति चतुराननो—बृहस्पतिः तस्य भं पुष्यं। रोहिण्यां पुष्ये च चन्द्रोदये गृहार्थं द्रुमं छिन्द्यात्। चकारात् पुनः तल्लग्ने गृहं कृत्वा विशेत्। तथाच गुरुः—

रोहिण्यां वा विधौ पुष्ये द्रुमं छित्वा गृहक्रियाम्।
तल्लग्ने च विशेत्तत्र बहुसंपत्सुतप्रदम्॥

इति। तथा च शुभतारायुतचन्द्रस्योदये स्तम्भादिकं निदध्यात्। आदिशब्देनानुक्तकालं सर्वं गृहकृत्यं गृह्यते। गुरौ केन्द्रे बलाढ्ये शुक्रे लग्ने तृणेष्टकादिभिः गृहमाच्छादयेत्। अत्र गुरुः—

स्तम्भं विधूदये स्थाप्यं वेणुभारं बुधोदये।
भृगूदये च संछाद्यं न चाग्निभयमादिशेत्।
गुरौ केन्द्रे शुक्रलग्ने खगे राशौ गृहोपरि।
तृणादिभिस्समाच्छाद्य न वाताग्निभयं गृहे।
भृगोर्वारोदये चाब्जे तृणैराच्छादयेत् गृहम्।
जीवलग्ने भृगौ चन्द्रे शुभर्क्षे चेष्टकादिभिः॥

इति—

**पाकोलूखलगोगृहं च सकलान्यर्के द्विदेहस्थिते कुर्याद्धातृपितृक्षपुष्यमुराजिद्विश्वेषु धान्यालयम्॥ मित्रेन्द्वन्त्यगुरूत्तरादितिमखादस्त्रप्रजेशाश्शुभाः संपत्सौधसुरालयादिषु भगस्वात्यौ च शय्यागृहे॥ १६॥**

यदुक्तं "गृहारम्भे द्विस्वभावमासचतुष्कं परिहार्यं" इत्यस्यायमपवादः। पाकगृहं महानसम्। उलूखलं—धान्यकुट्टनस्थानम्। गोगृहं—गोशाला। खलं—परिपक्वमर्दनस्थानम्। एतान्येके द्विदेहराशिस्थितेऽपि कुर्यात्। यस्मादेतानि प्राकारान्तरदिक्चक्रे द्विस्वभावराशिस्थानेषु कार्याणि। यथाऽऽह नारदः—

स्नानागारं दिशि प्राच्यामाग्नेय्यां च महानसम्।
याम्यायां शयनागारं नैरृत्यां वस्त्रमन्दिरम्।
वारुण्यां भोजनगृहं वायव्यां पशुमन्दिरम्।
भण्डारवेश्मोत्तरस्यामैशान्यां देवतालयम्॥
एतान्युक्तानि शस्तानि स्वस्वाये स्वस्वदिक्ष्वपि।

इति। अथान्ये प्राहुः—

भक्ष्यभोजनपानानि कारयेन्मीनगोचरे।
गवां च महिषाणां च स्थानं युग्मेऽपि कारयेत्।
भाण्डोपस्करधान्यानां शस्त्रागारं च नैरृते।
वायव्ये धान्यसंस्थानं मुसलोलूखलस्थितिः॥
भक्ष्यभोजनपानानां गृहं स्त्रीणां च पूर्वतः।
दक्षिणे धनधान्यानां गृहं गोगृहमुत्तमम्॥
पश्चिमे शयनस्थानम् धनदान्यालयम् शुभम्।
उदग्विनोदसदनं मुसलोलूखले तथा॥

एतानि प्राकारान्तः स्वस्वदिक्षु पृथक् पृथक् स्वस्वदिगायानि कार्याणि। यद्वा एकस्मिन्नेव वास्तुनि तत्तद्दिग्विभागेषु (कार्याणि) (?) तानि प्रकल्प्यानि। अन्ये त्वाहुः—कर्तुः स्वजन्मकाले अष्टकवर्गवशेन देवगृहादीनि यस्मिन् दिग्विभागे शुभान्युक्तानि तस्मिन्नेव तानि कुर्यात् इति। तत्र गुणाः॥?

"कर्तुस्स्वजन्मसमयावसितग्रहाणां कृत्वाऽष्टवर्गकथिताक्षविधानमत्र" ॥(?)

इत्यत्रोक्तम् । केचित् ग्रामनगरप्राकारान्तराळे गोमूत्रिकाचक्रं प्रकल्प्य तत्र कर्तुरनुकूलर्क्षे शयनभोजनसूतिकासदनादीनि कुर्वन्ति ॥ तद्यथा—

रेखाः पञ्च लिखेदूर्ध्वं तिर्यग्रेखाचतुष्टयम् ।
उदीचीः पञ्च रेखाश्च प्राचीरष्टौ तथा लिखेत् ॥
तथाऽष्टाविंशतिगृहं तस्मिंश्चक्रे गृहादिषु ।
षष्ठे गृहे भवेद्वायुर्द्विदैवादि ततो न्यसेत् ।
क्रमात्सप्तदशर्क्षाणि साभिजिद्भानि दिक्क्रमात् ।
प्रजेशस्य परे सौम्यमुदक्चि त्रीणि विन्यसेत् ॥
वारुण च मघादीनि क्रमात्पञ्चसु पञ्चसु ।
ऋक्षेऽनुकूले शयनं प्रसूतिर्वासो भवेत्तत्र शुभाय नित्यम् ॥
दुःखी तथर्क्षे विपदादिसंज्ञे गोमूत्रिकाचक्रमिदं वदन्ति ॥
ग्रामे पुरे वा नगरे च वृद्धिर्गेहऽथवाऽरण्यपरङ्गयोश्च (?) ।
इदं तु चक्रं लिखितं तु तस्मिन् ऋक्षेऽनुकूले निवसेच्चिरायुः ॥

इति । एषु रोहिणीमखापुष्यश्रवणविश्वभेषु धान्यगृहं कुर्यात् । अथाऽऽहुः—

आर्यम्णविश्वमैत्रायब्रह्मपैतृकवैष्णवाः ॥
एतास्ताराः प्रशस्तास्स्युर्धान्यशालाविधौ मताः ॥

इति । सभाराजगृहदेवालयादिषु मैत्रमृगशीर्षरेवतीपुष्योत्तराः पुनर्वसुमघाऽश्विनीरोहिण्य एकादश शुभाः । तथाचोक्तम्—

उत्तरात्रयपौष्णाश्विपुष्यादित्यनिशाकराः ।

ब्राह्ममैत्रानिलमघाश्शुभास्स्युर्देवतालये ॥
वारुणं केचिदिच्छन्ति केचिन्नाशं जलेन तु ॥

विष्टिशकुनादि विवर्जयेत् ।

रिक्ता ब्रह्माष्टमी विष्टिशकुनादि विवर्जयेत् ॥

इति । शयनागारे भगस्वात्यौ द्वे शुभे । तथाचार्णवे—

भाग्ये वायव्यनक्षत्रे शयनीयगृहं शुभम् ॥

हस्ते भोजनशाला च मूले शयनमन्दिरम् ॥

इति । भगस्वात्यौ चेत्यत्र चशब्दोऽनुक्तसमुच्चयार्थः । तेनानुक्तानां महानसादिनिर्माणे कालानां ग्रहणम् । ते तु ग्रन्थान्तरे द्रष्टव्याः, यथा—

गुरौ पुष्येण संयुक्ते वृषभे च विलग्नगे ॥
सद्भिर्दृष्टे धनागारं गवां च करिणां तथा ॥
अस्मिन् योगे गृहारम्भस्सर्वोपद्रवनाशनः॥
गोकुले गोष्ठकं कुर्याद्व्याघ्रचोरैर्न बाध्यते ।
सौम्यर्क्षे वृषलग्ने गां स्तम्भे बन्धयेच्च पशुवृद्धिः ॥
सौम्ये मन्दांशगे लग्ने नीचारातिगृहान् विना ॥
गजाश्वोष्ट्रपशूनां च गेहं तान् संप्रवेशयेत् ॥
शनिवारे रोहिण्यां मन्दतनौ धान्यसंग्रहश्शुभदः ॥
स्वांशगशन्यंशर्क्षे लग्ने चोलूखलं कृतं वृद्ध्यै ॥
शुभानुकूलराशौ तु रिपुषष्ठाष्टवर्जिते ॥
स्वानुकूले दिशि प्रोक्तं सूतिकाभवनं बुधैः ॥
पुनर्वसौ च सूतिकागृहस्य निर्मितिः स्मृता ॥
विरिञ्चिविष्णुभास्करे प्रवेशनं हि तद्गृहे ॥

विधिरत्ने मैत्र्यादिताराश्च ग्राह्या इत्युक्तम् । सूतिकागृहनिर्माणे तत्प्रवेशे च कालमाह—

**पुनर्व(स्वोः)सौ स्थिते चन्द्रे विदध्यात्सूतिकागृहम् । गर्भिणी प्रविशेद्धस्तरोहिणीश्रवणेषु तत् ॥**

पुनर्वसुनक्षत्रे सूतिकागारं कुर्यात् । हस्तरोहिणीश्रवणेषु स्वानुकूलभे गर्भिणीं सूतिकागृहं प्रवेशयेत् । एतत्प्रोक्तं च विधिरत्ने—

आदित्यमैत्रश्रवणप्रजेशचित्राशशाङ्कं सकरं च पौष्णम् ॥
त्रीण्युत्तराण्यत्र च सूतिकायाः स्थानस्य कार्येषु बुधः प्रयुञ्ज्यात् ।
अमावास्यां च रिक्तां च त्यजेत्कुम्भं च वृश्चिकम् ॥
वारं चार्कस्य भौमस्य शेषाश्चात्र सुशोभनाः ॥

गार्ग्येण प्रतिराशि फलमुक्तम्—

मेषे मृत्युभयं कुर्यात् वृषभेऽर्थस्य नाशनम् ।
मिथुने सूतिकानाशं कुळीरे वृद्धिमुत्तमाम् ॥
सिंहे कन्यातुलायां च पुष्ट्यायुश्श्रीविवर्धनम् ।
वृश्चिके कार्मुके वाऽपि पितुर्मरणमावहेत् ॥
मकरे सूतिकायाश्च आयुर्वृद्धिर्भविष्यति ।
कुम्भे मीने प्रसूतिस्तु मातुर्मरणमावहेत् ॥
अनुकूले स्थिरे राशौ शुभग्रहगुणान्विते ।
पापग्रहविनिर्मुक्ते सूतिकागृहमुत्तमम् ॥

इति । तच्चानिष्टराशिवर्जितदिग्रशौ कार्यम् । यथाऽऽहुः—

ग्रहेऽनुकूलराशौ तु रिपुषष्ठाष्टवर्जिते ।
स्वानुलदिशि प्रोक्तं सूतिकाभवनं बुधैः ॥

इति । रत्नशालायाश्च काल उक्तः—

ऐन्द्रनैरृऋतरुद्राग्निविशाखा यमपैतृके ।
वैश्वं च भाग्यं श्रेष्ठास्स्यूरत्नशालाविधौ सदा ॥

पानीयशालायाश्च—

मैत्रवारुणजला(?) आद्याहिर्बुध्न्यचशङ्काराः ।
पौष्णमूलाः प्रशस्तास्स्युस्स्थापने जलभाजने ॥

गृहस्यावापलेपनादौ कालोऽत्रिणोक्तः—

पूर्णाध्रुवभृगुज्ञर्क्षे गृहस्यावापलेपने ।
कर्क्यर्काक्यारम्भे लेपः पुत्रार्थघ्नोऽरिभीतिदः ॥

इति । विधिरत्ने—

भानुवारे कुजस्याह्नि न समालेपयेद्गृहम् ॥
लेपनं गृहनाशाय चतुर्दश्यां विशेषतः ॥

इति ।—

रोहिण्यां रोहिणीलग्ने दारूण्यादाय काननात् ।
शङ्कुस्स्थाप्यस्स्थिराणां च कार्याणां गृहवृद्धये ॥
सौम्यर्क्षे तद्विलग्ने च मृदमादाय तद्गृहे ॥
विन्यस्यास्मिन् पुनर्योगे कृषिं कुर्याद्विघ्नकृत् ॥
पुष्यर्क्षस्थविधौ लग्ने समादाय तरून् बुधः ॥
पुनः पुष्योदये कृत्वा गृहं पुष्ये विशेच्छुभम् ।
वर्जयेत्कुड्यमध्ये च नाडीरज्ज्वादिसङ्गमम् ॥

इति । अपि च—

लिखेच्चतुष्षष्टिपदानि वास्तुकोणेषु सूत्राणि लिखेत् सिराख्ये।
पूर्वाग्रसौम्याग्रगताश्च वंशा मध्ये त्रयः कोणगता लिखेच्च ॥

माहेन्द्रधर्मेशपदप्रविष्टं गृहर्क्ष(र्ह)ताख्यस्य पदस्थितं[1] च ॥
पुष्यादिदन्ते नृपदस्थितं च भल्लाटमित्रे च इमे नृवंशाः ॥
तिस्रो रेखाश्चतुर्दिक्षु बाह्यस्थास्सन्धयः स्मृताः ॥
मार्माणि सूत्रसन्धीनि चोपमर्मपदस्थितम् ॥
मूर्ध्नि वक्त्रे च नाभौ च महामर्म हृदि स्तने ॥
अनुवंशश्च यस्यापि सन्धिर्लाङ्गलमुच्यते ॥
गवां नाशस्सिरावेधे वंशवेधे मृतिर्भवेत् ।
प्रवासस्सन्धिवेधे स्याल्लाङ्गले च शिरोरुजः ॥
चतुर्थे वाहनोच्छित्तिः षष्ठे तु बहुवैरता ।
स्वामिनो मरणं विद्धे महामर्मणि जायते ॥
उपमर्मणि विद्धे तु भ्रातृपुत्रक्षयो भवेत् ।
कर्तुर्वंशस्य नाशश्च मर्मभेदे ध्रुवं भवेत् ॥
स्यात् षोडशांशस्य पदस्य सूत्रं
मित्रांशवस्वंशमपि क्रमेण ।
स्तम्भादिविन्यासविधौ गृहादि-
ष्वेतानि नैवात्र निपीडयेच्च ॥

वंशादिभ्यः पूर्वे वा सौम्ये वा गमनाभावात् भित्तिस्तम्भादिविन्यासे वेधदोषो न विद्यत इति । वराहमिहिरः—

संपाता वंशानां मध्यानि समानि यानि च पदानाम् ॥
मर्माणि तानि विद्यात् न तानि परिपीडियेत् प्राज्ञः ॥

इति—

तान्यशुचिभाण्डकीलस्तम्भाद्यै पीडितानि शल्यैश्च ।
गृहभर्तुस्तत्तुल्ये पीडामङ्गे प्रयच्छन्ति ॥

---

[1] पदं स्थिरम् [2] पदं स्थिरंच ।

इति । शल्यस्थानं च तेनैवोक्तम्—

कण्डूयते यदङ्गं गृहभर्तुर्यत्र वामबाहुभ्याम् ॥
अशुभं भवेन्निमित्तं विकृतिर्वाऽङ्गे सशल्यस्तु ॥

अथ स्तम्भस्थापनादिष्ववश्यपरिहार्याणि वास्तुमर्मस्थानानि प्रयोगमञ्जर्यादिशास्त्रान्तरेषूक्तानि । तानि तावल्लिख्यन्ते । यथा प्रयोगमञ्जर्याम्—

नाड्यस्स्युर्दश पूर्वगा दश तथा वास्तुन्युदक्संस्थिता-
स्त्वेकाशीतिपदेषु कर्णसहिते ताभिश्च सूत्रे लिखेत् ।
अष्टौ [1] षष्टिपदस्थिताश्च परितस्तत्पार्श्वतो रज्जवो
मर्मादीनि विभज्य वच्मि बहुधा तन्नाडिकारज्जुभिः ॥
अष्टाभिस्सङ्गतिर्यत्र नाडीरज्जुविमिश्रितैः ।
सूत्रैस्तत्र महामर्म ब्रह्मस्थानस्य कोणतः ॥
प्रत्येकं किष्कुषट्कानि त्रिकोणास्सन्ति पार्श्वतः ।
नाडीद्वयसमायोगाद्दृढमर्माणि तानि तु ॥
चतुर्विंशच्चतुष्कानि नाडीमर्माणि सन्ति च ।
रज्जुमर्म च रज्जुभ्यां चतुष्कं नवकं भवेत् ॥
कोणस्थमपि मर्मान्तं त्रिकं बाह्ये विनिर्दिशेत् ।
षट्कं च मर्मसंभेदात् प्रतिषण्णां भवन्ति च ॥
पञ्चमं मर्मसन्धिश्च द्वे द्वे दिक्षु चषुर्ष्वपि ।
पदमध्यगतं मर्म रज्जुभ्यां दोषवर्जितम् ॥
स्थानान्येतानि वास्तोर्गृहकरणविधौ पीडयेन्नैव विद्वान्
पीडा स्यात्पीडितेषु क्षितिपतिविषये ब्राह्मणानां पशूनाम् ॥

---

[1] षट्त्रि

तत्कीर्तिशिशाल्पनां च स्वतनयवितताभ्रातृसंबन्धिनां च
स्वस्थास्स्युस्स्थानवेधान् पृथगपि विहितान् वच्मि दोषान्विभज्य॥
मूर्ध्नि कण्ठे च वक्त्रे च हृदये मरणं भवेत् ।
विद्धे चोरसि हृद्रोगं पादयोः कलहो भवेत् ॥
ललाटे गात्रहानिस्स्याद्वित्तघ्नोऽङ्गुलिपृष्ठयोः ।
ऊर्वोर्मृत्युस्तु वा बन्धः पत्नीनाशोऽथवा भवेत् ॥
गुह्ये तु सुतहानिस्स्यादष्टके गर्भविच्युतिः ।
षट्के विद्धे तु शत्रूणां चतुष्के तु पशुक्षयः ॥
पञ्चके व्याधिरुद्दिष्टस्तस्करेभ्यस्त्रिके भयम् ।
वर्जयेत्कुड्यमध्ये च नाडीरज्ज्वादिसंगमम् ॥

इति । वास्तुहोमकाले कर्तुर्यदङ्गे कण्डूतिस्स्यात् यदन्यदेवताहुतिकाले दुर्निमित्तमग्निविकृतिर्वा स्यात्तद्वास्तुनराङ्गे गृहाधस्तादस्ति शल्यमस्थ्यादिकमिति । शल्यफलमुक्तम्—

धनहानिर्दारुमये पशुपीडारुग्भयानि चास्थिमये ।
अपि नाशदं ततो मर्मसंस्थितो दोषकृद्भवति ॥
[1] रोगाद्वायुं पितृतो हुताशनं शेषसूत्रमपि (तथा) मुख्यात् ।
त्रिंशज्जयाच्च भृङ्गमदितेश्च सुग्रीवम् ॥
तत्संपाता नवधैतान्यपि मर्माणि संप्रदिष्टानि ।

इति । इह मर्मप्रमाणं स्वपादाष्टांशमितम् । अपि च—

सुखमिच्छन् ब्रह्माणं यत्नाद्रक्षेद्गृही गृहान्तस्स्थम् ।
उच्छिष्टाद्युपघाताद्गृहपतिरुपतप्यते तस्मिन् ॥
दक्षिणभुजेन हीने वास्तुनरस्थक्षयोऽङ्गनादोषाः ।

---

[1] रोगाद्वायुपितृगतो हुताशनांशोपसूत्रमपि वितथा ।
मुख्याद्भृशं जयाच्च भृङ्गं मदितेश्च सुग्रीवम् ॥

वामेन धान्यहानिश्शिरसि गुणैर्हीयते तस्मिन् ॥
स्त्रीदोषं सुतमरणं प्रेष्यत्वं चापि चरणवैकल्यम् ।
अपि किल पुरुषे वसता मानार्थयुतानि सौख्यानि ॥

इति । एतद्दोषशान्तिः प्रयोगमञ्जर्याम्—

उक्तानुक्तं च यत्किञ्चित्प्रमादाद्यदि संभवेत् ।
एतानि दोषशान्त्यर्थं निखनेद्वास्तुकर्मणि ॥
सिंहमातङ्गमहिषकूर्मसूकरमस्तकम् ।
शुद्धहाटकयुक्तं स्यात्कर्तुर्गेहस्य शुद्धिदम् ॥
दोष(गे)मेतदुदितं यदि वा स्याद्यत्र कुत्रचिदबुद्धिकृतं च ।
होममत्र बहुरूपविधेस्तद्दोषशान्तिविहितं च विदध्यात् ॥

पुरग्रामादिषु पर्यन्तकोणभागा वर्ज्याः । यथाऽऽहुः—

द्वात्रिंशदंशाः प्राकारास्समीपांशास्समन्ततः ।
पिशाचांशा गृहारम्भे दुःखशोकभयप्रदाः ॥
शेषांशास्स्युश्च निर्माणे पुत्रपौत्रधनप्रदाः ॥

इति । ते त्वन्त्यजानां शुभाः । तथाच वराहमिहिरः—

पुरनगरग्रामादिषु ये कोणास्तेषु निवसतां दोषाः ।
श्वपचादयोऽन्त्यजा ये तेष्वेते वृद्धिमुपयान्ति ॥

इति । ग्रामनगरादिष्वपि गृहवास्तुवद्देवताविध्यादि कल्पयित्वा मर्मस्थानादि परिगृह्य यथायोग्यं स्थाने गृहं कुर्यात् । यथोक्तम्—

पुरनगरग्रामादिषु सर्वत्रैवं प्रतिष्ठिता देवाः ॥
तेषु च यथानुरूपं वर्णा विप्रादयो वा स्युः ॥

इति । सङ्कटस्थानान्यपि वर्जयेत् । यथोक्तम्—

क्षेत्रशैलशिलामार्गगोष्ठसागरसिन्धवः ।

तटाकं भूरुहं देवगृहं च दश सङ्कटाः ॥
एषां सूत्राणि यत्रासन् तत्र सङ्कटमुच्यते ।
व्यवधानं गतान्येषामेकमेकेन पीड्यते ॥
सूत्राण्यत्र सिराः प्रोक्ता अष्टसूत्राः प्रकीर्तिताः ॥
नदीपथसमुद्राणां समीपं सूत्रमिष्यते ।
क्षेत्रस्य वामभागं तु सूत्रमित्याह नारदः ॥
गृहप्रतिमुखं वेश्म पूर्वपश्चिमसंस्थितम् ।
नेष्टं तु यमसोमे च इष्टं प्रतिगृहं[1] [2]मुखम् ॥
आग्निवस्वोः[3] प्रतिमुखे[4] दह्येते क्षिप्रमग्निना ।
ईशनैरृतयोस्स्याच्चेन्नाशं वाऽपि समाप्नुयात् ॥

इति—

तृतीयैकादशे सर्वे ग्रहाः स्युरति शोभनाः ।
षष्ठस्थाने शुभाः प्रोक्ताः क्रूरास्सौम्या (खास्तु) श्शुभप्रदाः ॥
जन्मद्वादशमो राशिः लग्नस्थः कुरुते भयम् ।
तस्मात्सर्वप्रयत्नेन वर्जनीयो विचक्षणैः ॥
शुभः क्रूरेऽनुकूले च तद्विधिस्स्यात्प्रवेशने ।
अष्टमे व्याधिमरणे लग्नगः कुरुते सदा ॥

उत्तरशालाहीनं त्रिशालं हिरण्यकं नाम वित्तविवर्धनम् । पूर्वशालाहीनं त्रिशालकं नाशकृत्—याम्यशालाहीनं त्रिशालकम् वित्तनाशनम् । पश्चिमशालाहीनं त्रिशालकं पुत्रवित्तनाशनम् । पूर्वदक्षिणशाले यमपूर्वाख्यं गृहपतिनाशकृत् । पश्चिमोत्तरशाले दण्डाख्यं मृत्युदम् । याम्यापरशाले सिद्धार्थाख्यं सिद्धिप्रदम् । गृहासन्नेषु जलाशयाद्येषु फलमुक्तम्—

सलिलाशयेऽर्थनाशो धूर्तगृहे सुतवधस्समीपस्थे ।
उद्वेगो देवगृहे चतुष्पथे भवति चाकीर्तिः ॥

---

[1] मुखं । [2] गृहम् । [3] वायोः । [4] गृहे ।

चैत्यगृहे नृपतिभयं वल्मीकश्वभ्रसङ्कुले विपदः ।
गर्तायने विवासः कूर्माकारे धनविनाशः ॥

इति ॥ स्वोपभोगक्लृप्तजलाशये दिग्वशात्फलमुक्तम्—

प्राच्यादिस्थे सलिले सुतहानिशिखिभयं रिपुभयं च ।
स्त्रीकलहं स्त्रीदोषं नेष्टं वित्तात्मजविवृद्धी ॥

तत्रापि—

कूपं कुम्भगतं श्रेष्ठं मध्यमं मीनसंगतम् ।
अधमं मकरस्थं हि कूपान्येवम् विनिर्दिशेत् ॥
कुम्भमीनगतं कूपं लघुवारि सुशोभनम् ।
मनोदुःखहरं चैव पुत्रपौत्रविवर्धनम् ॥
विषभागे विषं दद्यादमृतेऽमृतमुच्यते ।
न कुर्याद्दक्षिणे भागे पुष्पारामजलाशयौ ॥

इति ।

तथाऽम्लकतरून् सालान् दक्षिणे वरुणोऽब्रवीत् ।

अत्रिः—

मोचानिष्पावमाधव्यः कारस्कर विषद्रुमाः ।
बन्धूकाम्रकरञ्जार्काश्शमीखदिरतिन्त्रिणीः ॥
शिरीषपीलुधात्र्युक्षवलक्षारग्वधाः क्षुपाः ।
बिल्वागस्त्यजपाताळाः कुलघ्नाः गृहवर्धिताः ॥

विश्वकर्मा—

पश्चिमे मधुरा श्शस्ता न्यग्रोधादिफलद्रुमाः ।
अश्वत्थक्षीरवृक्षाश्च पूर्वस्यां दिश्युदुम्बरः ॥
उत्तरे दिशि धान्यस्स्याद्दक्षिणे पुष्पितद्रुमाः ।
फलवृक्षाम्लकाश्शस्ताः पश्चिमे च तथोत्तरे ॥

मधुराः फलवृक्षाश्च नैरृते च तथोत्तरे ।
वायव्ये मधुराः शस्ताः ऐशान्यां चम्पकोदयः ॥

इति ।

आग्नेय्यां खदिरो धन्यः शेषा वर्ज्यास्तु कण्टकाः ।
नैरृत्यां मान्यवृक्षाः स्युर्धनधान्यविवर्धनाः ॥
वायव्ये कुलवृक्षस्स्यात्पुत्रपौत्रविवर्धनः ।
ऐशान्या पनसो धन्यः पनसः कुलवर्धनः ॥
अफले धनहानिस्स्यात्स्फुटिते कुलनाशनः ।

पश्चिमादिदिक्षु प्रशस्यत्वेन न्यग्रोधादयस्तेष्वेव ' दिग्भागेषु गृहस्य समीपस्थाश्शुभफलप्रदा वराहमिहिरेणोक्ताः—

याम्यादिष्वशुभफला जातास्तरवः प्रदक्षिणेनैते ।
उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्थाः ॥

गर्गोऽपि—

वर्जयेत्पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा ।
न्यग्रोधं पश्चिमे भागे उत्तरे वाप्युदुम्बरम् ॥
अश्वत्थेऽग्निभयं ब्रूयात्प्लक्षे ब्रूयात्पराभवम् ।
न्यग्रोधे राजतः पीडा नेत्रामयमुदुम्बरे ॥

इति । अपि च—

आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽक्षिनाशकराः ।
फलिनः प्रजाक्षयकराः दारूण्यपि वर्जयेदेषाम् ॥

अथ भूयुपयोगवशात्— (?)

छिन्द्याद्यदि च तरूस्तांस्तदन्तरे पूजितान् वपेदन्यान् ।
पुन्नागाशोकारिष्टान् वकुळपनसादीन् शामीताळान् ॥

इति । एवं मर्मसङ्कटस्थानानि परिहृत्य गृहं कुर्यात् । तच्च कर्तुरिच्छया

एकद्वित्रिबहुशालं स्यात् । तथाचात्रिः—

बह्वेकद्वित्रिशालं वा गृहं स्यात्कर्तुरिच्छया ।
अयुग्मायामविस्तारा अर्चास्विव गृहे शुभाः ॥

इति । अत्र सनत्कुमारः—

एका चेद्दक्षिणा शाला द्वे चेद्दक्षिणपश्चिमे ।
उत्तरां तु न कुर्वीत यावत्पौर्वीं न कारयेत् ॥
उत्तरे यदि हीनं स्याद्दक्षिणे पश्चिमेऽपि वा ।
लाभं हानिं तथा मृत्युं भवने तत्र निर्दिशेत् ॥

इति । अन्ये—

त्रिशाले तु गृहे नित्यं प्राग्विहीनं तु शस्यते ॥

अथ गृहप्रवेशनक्षत्राण्याह—

**शस्तास्स्थिराश्च मृदवश्च गृहप्रवेशे क्षिप्राश्चराश्च विदधत्युडवः प्रवासम् । श्रेष्ठो वृषास्स्थिरगृहास्सशुभाश्च सर्वे वर्ज्याश्चरा वरममीष्वपि वार्षभोंऽशः ॥१८॥**

नवगृहस्य प्रवेशे स्थिराख्या मृद्वाख्याश्चाष्टौ ताराश्शस्ताः ॥ क्षिप्राख्याश्चराख्याश्चाष्टौ ताराश्शस्ता अपि गृहप्रवेशे कर्तुः पुनः प्रवासं कुर्वन्ति । शिष्टा एकादश वर्ज्याः । अत्र श्रीपतिः—

त्वाष्ट्रेऽथ पौष्णे शशिभे च मैत्रे
स्वायम्भुवर्क्षे त्रिषु चोत्तरेषु ।
अक्षीणचन्द्रे गुरुवासरे च
तिथावरिक्ते च गृहप्रवेशः ॥

इति । केचित्सर्वास्वित्याज्यतारासु प्रवेशश्शुभ इत्याहुः—

आर्यम्णाविश्वाश्चत्वारि ब्रह्मादित्यद्विकं द्विकम् ।
आहिर्बुध्न्यत्रिकं मैत्रं मूलं चात्र शुभावहाः ॥

इति । गुरुश्च—

शुभनामसु तारासु सर्वासु प्रविशेद्गृहम् ।
शुभांशे शुभवारेषु शुभदृष्टे स्थिरांशके ॥

इति । श्रीपतिश्च—

शुभः प्रवेशो मृदुभिः स्थिरर्क्षैः
क्षिप्रैश्चरैस्स्यात्पुनरेव यात्रा ।
उग्रैर्नृपो दारुणभैः कुमारो
राज्ञी विशाखासु विनाशमेति ॥
कृत्तिकासु भवनं कृशानुना दह्यते प्रविशतामसंशयम् ।

इति । अत्र चत्वारश्चशब्दास्सान्ति । तैरेषोऽर्थो विवक्षितः । प्रवेशश्चतुर्विधः—प्रवेष्टृनूतनः प्रवेश्यनूतनः उभयनूतनः उभयपुराणश्चेति । तत्र युग्मादिप्रवेशः प्रवेष्टृनूतनः । जीर्णोद्धृतादिप्रवेशः प्रवेश्यनूतनः नवागारादिप्रवेशः उभयनूतनः प्रोषितादिप्रवेशः उभयपुरातनः । प्रवेष्टृनूतने साधारणर्क्षाणि प्रवेश्यनूतने उभयनूतने च ध्रुवर्क्षाणि उभयपुरातने मृदुभानि क्षिप्रभानि च आत्ययिके चरभानि शुभानीति । अत्र गुरुः—

प्रवेश्यनूतनत्वे च प्रवेष्टृनूतने तथा ।
इच्छतां संपदं नृणामुच्यते समयश्शुभः ॥

इत्युपक्रम्योक्तवान्—

उभयोर्नूतनत्वे तु ध्रुवभेष्वेव संविशेत् ।

प्रवेष्टुर्नूतनत्वे तु [1]साधारणाद्दते विशेत् ॥
प्रवेश्यनूतनत्वे तु स्थिरतारासु संविशेत् ।
द्वयोः पुरातनत्वे वा मृदुभेषु विशेद्गृहम् ॥
हत्वा शत्रून् विजित्वा तु प्रविशेत् क्षिप्रभेषु च ॥
चरभे सभये देशे निर्विशेदुग्रभे तथा ।
वारयोगेषु सर्वेषु प्रवेशश्शोभनो भवेत् ॥

इति । वृषराशिः प्रवेशे श्रेष्ठः । तदन्यास्थिरराशयस्त्रयः सशुभाश्चेत् श्रेष्ठाः । चशब्दोऽनुक्तसमुच्चयार्थः । तेन सशुभाश्चेत् सर्वे–उभयराशयोऽपि शस्ता इत्यर्थो गृह्यते । चरराशयश्चत्वारो वर्ज्याः । अमीषु चरेष्वपि वार्षभो नवांशको वरः—श्रेष्ठः इत्यर्थः । अत्र रत्नः—

स्थिरोभयराशयोऽष्टौ प्रवेशेऽतिशुभवाह्नाः ।
तेषां नवांशकाद्याश्च भानां तत्तुल्यपापकाः ॥

इति । श्रीपतिश्च—

रिक्ता तिथिर्भूसुतभानुवारौ
निन्द्याश्च योगाः परिवर्जनीयाः ।
मेषः कुळीरो मकरस्तुला च
त्याज्याः प्रवेशे हि तथा तदंशाः ॥

इति । गुरुः—

वृषांशकोदये सर्वप्रवेशः शोभनस्सदा ।
चरोभयेतु सेर्वषु वृषांशस्स्यात् सुशोभनः ॥

इति । राशिषु प्रत्येकं फलमाह—

**प्रवासं सर्वार्थान् सुखमपहृतिं रत्ननिचयं वधू-भोगं रोगं धनमुदयदुःखे विधनताम् । प्रसिद्धिं**

[1] साधारणादि निविशेषत्

**वृद्धिं च क्रमश इति मेषादिषु गृहं प्रविष्टो भूपालः फलमिदमवाप्नोति नियतम् ॥ १९ ॥**

मेषादिषु राशिषु यस्तु गृहं प्रविष्टो राजन्यो वा क्रमशः प्रवासादीनि फलान्याप्नोति । अपहृतिं—धननाशं । उदयश्च दुःखं च उदयदुःखे, पूर्वार्धे सुखमपरार्धे दुःखमित्यर्थः । विधनतां–निर्धनत्वम् प्रसिद्धिं–ख्यातिम् । अभ्युदयं वा । अत्र गुरुः—

मेषे भवेत्पुनर्यात्रा वृषे भुङ्क्ते परां श्रियम् ।
श्रीसुखार्थं लभेद्युग्मे कुळीरे धननाशनम् ॥
रत्नभागप्रजासिंहे वध्वां ह्यवधूरतिः ।
तौळौ व्याधिर्धनं कीटे चापे स्यात्सुखदुःखवान् ॥
धान्यभाण्डहृतिर्नक्रे कुम्भे कीर्तिश्च वाहनम् ।
मीने वृद्धिं परां गच्छेत् प्रवेशे नूतने फलम् ॥
अंशाद्यो ग्रहषड्वर्गो यात्रावदिह शोभनः ।

दिग्वशाच्छुभानि भान्याह—

**क्रमेण पूर्वादिगृहप्रवेशे विधातृसोमौ भगवासरेशौ । मैत्रं च वस्वम्बुपबुध्नयतारा विशेषतस्सिद्धिकरा भवन्ति ॥ २० ॥**

अयमर्थः—प्राग्गृहस्य प्रवेशे रोहिणीमृगशीर्षे श्रेष्ठे । दक्षिणगृहस्य उत्तराफल्गुनीहस्तौ । पश्चिमगृहस्यानूराधा । उत्तरगृहस्य धनिष्ठाशतभिषगुत्तराभाद्रा विशेषतश्शुभाः । एतानि भानि यात्रायां वक्ष्यमाणक्रमेण प्रागादिदिग्भवत्वात् तत्तद्दिग्गृहप्रवेशे शुभानि—

यथाऽऽह श्रीपतिः—

यन्मुखेषु सदनं हि तत्ककुब्द्वारभेषु शुभकृत्प्रवेशनम् ।

इति । ज्योतिषार्णवेऽपि—

ब्रह्मेन्द्रदितिपूर्वेषु पूर्वस्यावेशनं शुभम् ।
अर्यमादिचतुष्के तु दक्षिणस्यां विशेद्गृहम् ।
मूलवैष्णवमैत्रेषु पश्चिमायां विशेद्गृहम् ।
आहिर्बुध्न्यश्रविष्ठाभ्यामुदग्गेहं विशेदिति ॥

अन्ये कृत्तिकापैत्रमैत्रश्रविष्ठादिचतुष्टयं प्रागादिषु प्रवेशभं । तेषु तद्दिग्गृहस्य प्रवेशः शुभ इत्याहुः । यथा—

पैत्रमैत्रश्रविष्ठाग्नितारादिकचतुष्टयैः
याम्यवारुणसौम्येन्दुदिशि द्वारैः क्रमात् विशेत ॥
शेषेषु द्वादशर्क्षेषु न विशेद्यदि दुर्बलः ।
यदि वा द्वादशर्क्षेषु शुभांशे बलवान् शशी ॥
यथालाभं गुणानन्यान् दृष्ट्वा भेष्वेषु निर्दिशेत् ।

इति । दिक्षु शुभतिथीराह—

**गुरुणा कथिताः पूर्णानन्दाभद्राजयाः क्रमात् ।**
**पूर्वद्वारादिगेहानां प्रवेऽशेतिशुभप्रदाः ॥२१॥**

पूर्णाद्याख्यास्तिथयः प्रागादिद्वाराणां प्रवेशे शुभा इति गुरुणोक्ताः । तथा च तद्वाक्यम्—

नन्दायां दक्षिणं द्वारं भद्राया पश्चिमेन तु ।
जयायामुत्तरद्वारं पूर्णायां पूर्वतो विशेत् ॥
रिक्तायां न विशेत्स्थानं कृष्णे चान्त्ये त्रिधा कृते ।

इति । गृहकर्मणि स्थैर्यकृत्त्वान्मन्दवारः शस्त इत्येके । मध्य इत्यन्ये ।

त्याज्यौ कुजार्कयोर्वारौ शनेर्मध्यम इष्यते ।

सोऽशुभ इति गुरुः—

शुभाशुभग्रहाणां तु क्रमाद्वाराश्शुभाशुभाः ॥

इति । दिवैव प्रवेशश्शुभः । निशि मध्यमः । अत्र गुरुः—

दिवा प्रवेशस्संपत्त्यै निशि वा शोभनो भवेत् ।

यदि लग्नाधिपस्सौम्यस्सुबली सौम्यवीक्षितः ॥

इति । ज्योतिषार्णवेऽपि—

रात्रौ केचित् प्रशंसन्ति प्रवेशं सद्ग्रहोदये ।

रात्रौ चन्द्रबले कुर्याद्दिवा सूर्यबले सति ।

दिने वा निशि वा कुर्यात् प्रवेशं सुशुभोदये ।

इति । वरा अमृतसिद्धाख्याः तिथिवारर्क्षयोगाश्च प्रवेशे अतिशुभाः । तथा च गुरुः—

वारनक्षत्रयोगेषु शुभेषु शुभभोदये ।

रिक्ताविष्टिविवर्ज्येषु शुभवारे शुभेक्षिते ॥

शुभराश्युदये सम्यग्बलयुक्ते स्थिरांशके ।

राश्यंशनाथदृष्टे च प्रवेशोऽतिशुभप्रदः ॥

इति । प्रवेशे वर्ज्यमासदिनदिग्राश्यादिकमाह—

**गेहं न प्रविशेन्नवं घटवधूकर्किस्थिते भास्करे**
**श्रेष्ठो दक्षिणपृष्ठभागनिरतः शुक्रोऽत्र वर्ज्योऽन्यगः।**
**कर्तुस्तत्र शुभप्रदान्युपचयस्थानान्यथो नूतने त्या-**
**ज्यो निर्गमनादिकोऽत्र नवमो मासस्तथा वासरः॥**

कन्यास्थेऽर्के अनावश्यके विशेत् । यथाऽऽह गुरुः—

अनावश्यके न कर्तव्यं परिगृह्यापि सर्वदा ।
कन्यकायां रवौ वज्रिन् पुत्रदारपशुक्षयः ॥

इति । अत्र गृहप्रवेशे शुक्रो यात्रायां वक्ष्यमाणक्रमेण प्रवेष्टुर्दक्षिण-भागस्थः पृष्ठभागस्थो वा शुभदः । अन्यगः—वामभागस्थः पुरोभाग-गतो वा न शुभः । अत एव वर्ज्यः । तथाच गुरुः—

पृष्ठगं दक्षिणस्थं वा भृगुं कृत्वा विशेद्गृहम् ।
पुरतो वामतो वाऽपि शुक्रं कृत्वा न चाविशेत् ॥

इति । अत्रावश्यके प्रवेशेऽपि विशेष उक्तः—

पुरतो वामतो वाऽपि शुक्रदोषे व्यवस्थिते ।
प्रवेशे गमने नृणामावश्ये विधिरुच्यते ॥
भार्गवं वा भरद्वाजवंशोत्थं द्विजमग्रतः ।
कृत्वा सुपूर्णकुम्भं च जपन्तं मृतजीवनीम् ॥
व्रजेद्विशेद्वा वृद्ध्यर्थं वाहनार्थी प्रजायुषाम् ।
शुक्रं ते अन्यादित्यादि त्रियम्बकपुरस्सरैः ॥
जप्त्वा हुत्वा पयोभिर्वा तर्पयित्वा सहस्रशः ।

इति । तत्र प्रवेशे कर्तृजन्मलग्नाभ्यामुपचयस्थानानि त्रिषड्दशायभानि शुभप्रदानि । अन्यानि वर्ज्यानि । तथाच नारदः—

कर्तुर्जन्मविलग्ने वा ताभ्यामुपचयेऽथवा ॥
प्रवेशकाले स्याद्वृद्धिरन्यभे शोकनिस्वता ॥

इति । कैश्चिज्जन्मोदयादिराशिषु लग्नगतेषु प्रत्येकं फलमुक्तम्—

राशिलग्नगतो जन्मराशेर्जन्मोदयादपि ।
कीर्तितो मुनिभिर्वेश्मप्रवेशे शौनकादिभिः ॥

दारिद्र्यनैरुज्यविभूतिकारी बन्ध्वात्मजद्वेषि कळत्रघाती ।
प्राणापहारी पिटकप्रदश्च वृद्ध्यर्थदो भीतिकरः क्रमेण ॥

इति । अन्यैः पञ्चमसप्तमे ग्राह्ये उक्ते—

चतुर्थे बन्धुनाशं च पञ्चमे तु परं सुतम् ।
षष्ठे हन्ति रिपून् लक्ष्मीं सप्तमे क्लेशमष्टमे ॥

इति । जन्मोदयादिषु शुभग्रहोदयश्चेत्तत्फलमेव न राशिफलमित्युक्तं व्यतिरेकमुखेन—

जन्मतो लग्नतश्चैवं दद्युरशुभयुता नवे ।

इति । अथ नूतनप्रवेशप्रवेष्टृपुरातनप्रवेशे अयं विशेष उच्यते— स्वगृहान्निर्गमनमासदिनादितो नवमो मासो वासरश्च त्याज्य इति । यस्मिन् मासे दिने वा स्वगृहान्निर्गतः ततो नवमे मासि दिवसे वा पुनः तद्गृहं न प्रविशेदित्यर्थः । उक्तं च—

निर्गमान्नवमे मासि न विशेद्दिवसेऽपि वा ।
नवम्यां न प्रवेष्टव्यं प्रविष्टो नाशमृच्छति ॥

इति । अत्र नवमी त्रिधोक्ता नवमी प्रवेशनवमी प्रस्थाननवमी चेति । तथाच विधिरत्ने—अत्रोक्ता नवमी प्रस्थानपूर्वा तथेति । तास्तिस्रोऽपि वर्जयेत् । 'तथा वासरः' इत्यत्र तथा शब्दः प्रकारवचनः तेन तादृशं वेधादिकमपि त्याज्यमुक्तम् । तद्यथाऽऽहुः—

ग्रहवेधाद्यभावे तु पापवेधे विशेषतः ।

गृहं न विशेदिति शेषः । अन्ये—

सूर्यस्थितर्क्षात्कलशस्य भाना-
मेकं मुखे दिक्षु चतुष्टयानि ।
गर्भे चतुष्कं त्रितयं च कण्ठे
गुदे त्रिकं स्थापय चक्रमेतत् ॥

मुखे तु स्वामिनो मृत्युः पूर्वैर्गोद्वासनं भवेत् ।
दक्षिणे चार्थलाभाय पश्चात्सन्ततिवृद्धये ॥
उत्तरे हानिरोगौ च गर्भे गर्भविनाशकृत् ।
कण्ठे श्रियमवाप्नोति गुदे धनविनाशनम् ॥
प्रवेशे नगरादीनां चक्रमेतद्विलोकयेत् ।

इति । अथ ग्रहगोचरयोगानाह—

**केन्द्राष्टमेष्वपि शुभैरशुभैश्च रिष्फे शुद्धे गुरौ वपुषि दैत्यगुरौ च केन्द्रे। पापेषु वैरिसहजागमकण्टकेषु नव्यं गृहं प्रविशतां वृषकुम्भलग्ने ॥ २३ ॥**

केन्द्राण्यष्टमश्च केन्द्राष्टमानि । तेष्वशुभैः क्रूरैः शुभैश्च वर्जितेषु, रिष्फे—द्वादशे शुद्धे, गुरौ लग्ने, शुद्धे केन्द्रे, चकाराद्गुरौ केन्द्रे शुक्रे लग्ने वा संस्थिते पापेषु त्रिषडायगेषु सत्सु वृषकुम्भोदये नव्यं-नवं गृहं प्रविशेत् । अत्र वराहमिहिरः—

शुद्धैर्द्वादशकेन्द्रनैधनगतैः पापैस्त्रिषष्ठायगैः
लग्ने केन्द्रगतेऽथवा सुरगुरौ दैतेयपूज्येऽपि वा ।
सर्वारम्भफलप्रसिद्धिरुदये राशौ च कर्तुश्शुभे
न ग्राह्यस्स्थिरभोदये च भवनं कार्यं प्रवेशोऽपि च ॥

इति । स्थिरभेषु वृषो ग्राह्यः कुम्भो नवे इति । तयोरुदये इत्युक्तम् । अत्र केन्द्रे शुभाशुभैश्शुद्धिमभिधाय पुनर्लग्नकेन्द्रेषु गुरुशुक्रौ शुभाविति पूर्वशास्त्रानुसारेणोक्तम् । ततश्चायमर्थः—केन्द्रे पापेष्वसत्सु अष्टमद्वादशयोश्शुद्धयोः इति । ननु चन्द्रतत्पुत्रयोरपि केन्द्रेऽवस्थानमशुभं प्राप्नोति । यतो गुरुशुक्रावेव हृद्यस्थौ । न चन्द्रज्ञौ नैष दोषः

तयोः शुभत्वस्यानियतत्वात् । गुरुशुक्रयोस्तु नियतशुभत्वात् तयोर्व्युदासे शुभानामेव व्युदास इति ज्ञेयम् । ततश्च केन्द्रे शुभाः शुभदाः इति सिद्धम् । तथा च श्रीपतिः—

त्रिकोणकेन्द्रगैः शुभैश्चतुष्टयाष्टमान्त्यगैः ।
असद्ग्रहैः स्थिरोदये गृहं विशेद्द्वयोर्बले ॥

इति । ज्योतिषार्णवेऽपि—

त्रिषडायगताः पापाश्शुभास्तूपचये शुभाः ।
नवस्थश्चन्द्रपुत्रश्च षट्सप्तमगतो भृगुः ॥
त्रिषडायमूर्तौ जीवो विशेषेण विवर्जितः ॥
अष्टमस्था ग्रहास्सर्वे मृतिं दद्युः प्रवेशने ॥

इति । इह केचित्तृतीयेऽपि शुद्धिमिच्छन्ति । यथोक्तमत्रिणा—
"प्रवेशे भात्रष्टमशुद्धिः" इति । प्रवेशयात्रावद्विशेषानभिधानात्स्त्रीपुंसामविशेषः । तथाच गुरुः—

नारीणां च नराणां च समानं तु प्रवेशनम् ।

नववधूनां गृहप्रवेशे बादरायणेन विशेष उक्तः—

नीहारांशुवसूत्तरादितिगुरुब्रह्मानुराधाश्विनी
पूषाभास्करवायुवारुणहरित्वाष्ट्रेषु शस्ते तिथौ ।
कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे
जीवज्ञेप्सुजितां ? दिने नववधूवेश्मप्रवेशश्शुभः ॥

इति । मासविशेषफलमुक्तं भागिलेन—

वैशाखे सुभगा प्रभूतविभवा मार्गे च पुत्रान्विता
फाल्गुन्ये प्रियवल्लभा प्रियजना नित्योत्सवापूरिणी ।
वन्ध्या निर्धनदुर्भगा विरहिणी स्वार्गता नित्यशो
भुङ्क्ते देवसुताऽपि दुःखमतुलं वेश्मान्यमासे वधूः ॥

इति । अत्रापि भर्तुस्सूर्यबलं ग्राह्यम्—

वधूस्संप्रविशेद्धानौ भर्तुश्शोभनगोचरे ।

इति वचनात् । विवाहसमनन्तरं द्वन्द्वप्रवेशस्यैव विहितत्वादिह शुक्रदोषोऽस्त्येव । यथाऽऽहुः—

विशेद्वधूस्सौम्यशुक्रौ हित्वा दिक्प्रतिलोमगौ ।

ललाटगं दिनेशं च परिहृत्य शुभे दिने ॥

इति । सर्वोऽपि प्रवेशो वास्तुपूजाबलिक्रियापूर्वक एव कार्यः । यथाऽऽह नारदः—

अथ सौम्यायने कार्यं नववास्तुप्रवेशनम् ।

राज्ञां यात्रानिवृत्तौ वा यद्वा द्वन्द्वप्रवेशनम् ॥

विधाय पूर्वदिवसे वास्तुपूजाबलिक्रियाम् ।

इति । स च वास्तुपूजाबलिविधिर्नवागारप्रवेशादिषु विधीयमानो रक्षोघ्नवास्तुहोमपूर्वकः कार्यः । तत्रायं क्रमः—अथ च नवागारं प्रवेक्ष्यन् शुभेऽनुकूले दिने वस्त्रादिभिर्वर्धकिं संमान्य तत्करात् गृहं परिहृत्य तत् सितात्रिसूत्र्या आवेष्ट्य सदर्भपल्लवमालया परितः संवेष्ट्य संमृष्टसिक्तालङ्कृततोरणध्वजादिमण्डितद्वारस्याष्टमङ्गलजुष्टस्य तस्यान्तर्धान्यानि विकीर्य पूर्णकलशं निधाय राक्षोघ्नं प्रजप्य पार्ष्णिघाततालत्रयादिभिर्विघ्नकृद्भूतानुत्सार्य आग्नेय्यां दिशि राक्षोघ्नहोमं कुर्यात् । तद्विधानमुक्तं प्रयोगमञ्जर्याम्—

राक्षोघ्नमग्नेर्दिशि संप्रकुर्याद्धोमं च कृत्वाऽभिमुखं यथावत् ।

द्वाभ्यां तु पक्वं जुहुयाद्यथर्भ्यां रक्षोहणं वाजिनमित्युभाभ्याम् ॥

भूयः कृणुष्वादिभिराज्यहोमं होतव्यमष्टाद्दशभिश्च मन्त्रैः ।

तद्वद्द्विभिश्चैरथ पञ्चभिर्यैर्देवादिमन्त्रैर्जुहुयात्क्रमेण ॥

दुर्गाभिराज्यं त्वथ पञ्चभिश्च हुत्वा पुनर्व्याहृतिभिः क्रमेण ।
आज्येन हुत्वैवमभीष्टशस्तमन्त्रेण होतव्यमतः क्रमेण ॥
भूयोऽप्यपामार्गसमिद्भिराज्यैरन्नैस्तथाज्यैश्शतमाहुतीनाम् ।
प्रत्येकमष्टोत्तरामित्थमेभिर्हुत्वा पुनस्स्विष्टकृतं यथावत् ॥
समाप्य होमं पुनराज्यशेषं तोयस्य शेषं हुतभस्मयुक्तम् ।
युक्तं त्वपामार्गरसैर्गृहं तत्संप्रोक्षयेत्तेन निषिच्य पात्रे ॥
कृत्वा रक्षोघ्नमेवं तमथ हुतवहं शर्वकोणे निधाय
प्रोद्दिष्टं शान्तिहोमं गृहकरणविधौ शान्तिदं संप्रकुर्यात् ।
पूर्वं संस्कृत्य वह्निं हुतवहमभितः स्थण्डिले पूर्वतोऽग्नेः
व्रीहिव्रातैः प्रकॢप्ते वसनविरहिते तण्डुलं स्थण्डिले च ॥
कृत्वा चास्तीर्य वस्त्रं पुनरपि च शमीपर्णदर्भैः पलाशैः
स्वास्तीर्णैस्तण्डुलाद्यैर्घटमथ सलिलैः पूर्णमच्छं निधाय ।
शन्नो देवीरितीमामृचमपि तु वदन् शान्तिमावाह्य तस्मिन्
गन्धाद्यैः पूज्यमेवं पुनरपि विधिवत् पूर्वमन्त्रेण शान्तिम् ॥
वास्तोष्पतेति मन्त्राभ्यां द्वाभ्यां पक्वं तु होमयेत्
षड्भिराज्याहुतीर्हुत्वा वास्तोष्पत्या ध्रुवादिभिः ।
पञ्चब्रह्मभिराज्येन शन्नोवर्गैश्च होमयेत्
शमीमयीश्च समिधो घृतमन्नं पुनर्घृतम् ॥
दूर्वाश्च पञ्चगव्याक्तान् प्रत्येकं तु शतं शतम्
अष्टोत्तरशतं शन्नोमन्त्रेण जुहुयात्पुनः ।
हुत्वा स्विष्टकृतं समाप्य च नमो रुद्राय मन्त्रेण
तच्छिष्टान्नेन बलिं कुशेषु विकिरेत्सर्पाशनस्याग्रतः ।
साज्यैश्शान्तिजलैश्च भस्मसहितैर्गव्याञ्चितैः प्रोक्षये-
त्त्वं विप्रस्त्वमिति ब्रुवन् गृहमथो पुण्याहमावाचयेत् ॥

इति । अन्यत्र —

होमं त्रिमेखले कुर्यात्कुण्डे हस्तप्रमाणगे ।
फलैः कृष्णतिलैस्तद्वत्समिद्भिः क्षीरवृक्षजैः ॥
पालाशैः खादिरैर्वाऽपि कुशदूर्वामयैरपि ।
अपामार्गोदुम्बरैर्वा मधुसर्पिस्समन्वितैः ॥
कुर्यात्तु (कार्यास्तु) पङ्कजैर्बिल्वैर्बिल्वबीजैरथापि वा ।

इति । अत्र केचित्—पञ्चाशद्वास्तुदेवताभ्योऽपि बलिं कुर्वन्ति । तथाच तन्त्रराजे—

प्रत्येकं तु हुनेत्कुण्डे चतुरश्रेन्द्रदिङ्मुखः ।
व्रीहिमुद्गयवक्षौद्रघृतदुग्धाप्लुतैः क्रमात् ॥
अष्टोत्तरशतं चाष्टोत्तरं विंशतिमेव वा ।
प्रत्येकं तैर्हुनेन्मन्त्रैर्द्रव्यैस्तद्वच्च पायसैः ॥

इति । अत्र मन्त्रा उक्ताः—

हुनेत्क्रमेण ताराद्यैस्स्वाहान्तैर्नामभिस्स्वकैः ।

इति ।

होमान्ते वास्तुदेशेऽथ पूजयेद्वास्तुदेवताः ।
बलिं च तेषां कुर्वीत पायसैर्व्यञ्जनान्वितैः ॥
सासितैर्मुग्धकदलीफलापूपादिसंयुतम् ।
क्रमेण मन्त्रैस्ताराद्यैर्नमोन्तैर्नामभिस्स्वकैः ॥

इति । अत्र वास्तुदेवतापूजार्थं गृहमध्ये स्थण्डिले मण्डलमेकाशीतिपदं कार्यम् । तदुक्तम्—

एकाशीतिपदं लेख्यं वास्तुमध्ये तु पिष्टकैः ।

इति । अन्ये अधिस्थण्डिलं तण्डुलोपरि मण्डलं कुर्वन्ति ।

तथा च नारदः—

हस्तमात्रा लिखेद्रेखा दश पूर्वा दशोत्तराः ।
गृहमध्ये तण्डुलोपर्यैकाशीतिपदं भवेत् ॥

इति । तत्र—

मध्ये पदानां नवकं मार्जयित्वा प्रपूरयेत् ।
सितेन रजसा भूयस्तादिक्षु चतसृष्टपि ॥
षट्कं संमार्ज्य रजसा रक्तेन परिपूरयेत् ।
शिष्टानि च पदान्यत्र यथा संस्थानि कारयेत् ॥
विचित्राणि ततस्तेषु पूजयेद्वास्तुदेवताः ।

अत्र बहिः परितो द्वात्रिंशत् । तदन्तः कोणेषु षोडश । तदन्तरेषु चत्वारि । मध्ये पदमेकमिति त्रिपञ्चाशत्पदानि स्युः । तेष्वर्चनक्रमः—

ब्रह्माणमर्चयेन्मध्ये दिक्षु प्रागादि तद्बहिः ।
आर्यकं च विवस्वन्तं क्रमान्मित्रं महीधरम् ॥
सावित्रास्सविता चेन्द्रजयौ रुद्रतज्जयौ ? ।
अपापवत्सावग्न्यादिकोणेष्वर्च्यास्तु युग्मशः ॥
तत्कोणपार्श्वकोष्ठेषु वह्न्यादीशान्तमर्चयेत् ।
शर्वं गुहं चार्यमणं जम्भकं पिलिपिञ्छकम् ॥
चरकीं च विदारीं च पूतनां च प्रदक्षिणम् ।
ईशादिपरितो बाह्येष्वष्टावष्टौ दिशां पतीन् ॥
ईशानश्चाथ पर्जन्यो जयन्तश्शुक्रभास्करौ ।
सत्यो भृशोऽन्तरिक्षं च पूर्वदिक्कोष्ठगा इमाः ॥
अग्निः पूषाऽथ वितथो यमोऽथ गृहरक्षकः ।
गन्धर्वो भृङ्गराजश्च मृगा दक्षिणदिग्गताः ॥

निरृतिर्दौवारिकश्चैव सुग्रीवो वरुणस्तथा ।
पुष्पदन्तासुरौ शोषरोगौ प्रत्यग्दिगाश्रिताः ॥
वसुर्नागस्तथा मुख्यस्सोमो भल्लाट एव च ।
अर्गळाख्यादितिस्तद्वदादितिस्सौम्यादिग्गताः ॥

इति । अथात्र केचिदन्तः कोणेषु द्वे सम्माज्यौष्टौ कुर्वन्ति । तथा चोक्तम्—

एकीकुर्यान्मध्यगं रन्ध्रकोष्ठं कोष्ठाविष्टं षट्पदं तत्समन्तात् ।
पश्चादष्टौ कोष्ठयुग्मानि तद्वत्तस्मिन् क्षेत्रे कोविदः कोणगानि ॥

एवं च सर्वमध्ये एकं । तद्बहिर्दिक्षु चत्वारि । कोणेष्वष्टौ । बहिर्द्वात्रिंशदिति पञ्चचत्वारिंशत्पदानि जायन्ते । तद्बहिर्दिग्विदिग्गतं कोष्ठाष्टकं कल्पयेत् । तथा च—

एकाशीतिपदं तदा स्फुटतरं संलक्ष्यते मण्डलं
बाह्ये तस्य च दिग्विदिग्विलसितं कोष्ठाष्टकं कल्पयेत् ॥

इति । तैस्सह त्रिपञ्चाशत्पदानि स्युः । तेषु मध्ये ब्रह्माणं तद्बहिर्दिक्ष्वार्यकादीन् कोणेषु सावित्रादीन् बहिरीशानादीन् चक्रस्य बहिर्दिक्षु शर्वादीन् विदिक्षु पिलिपिञ्छकादीन् अर्चयेत् । तथाचाहुः—

मध्ये ब्रह्मा समाराध्यस्ततो दिक्ष्वर्यकादयः ।
सावित्राद्याश्च कोणेषु पिलिपिञ्छादयास्स्थिताः ॥

इति । अन्ये च चतुष्षष्टिपदं चक्रं विलिख्य वास्तुदेवता यजन्ति । तथा च प्रपञ्चसारे—

कृत्वाऽवनिं समतलां चतुरश्रसंस्थां
अष्टाष्टकोष्ठतपदां च सकोणसूत्राम् ।
तस्मिंश्चतुष्पदसमन्वितमध्यकोष्ठे
ब्रह्मा तु साधकवरेण समर्चनीयः ॥

इति। तत्रायं क्रमः—चतुष्षष्टिपदं चक्रं सकोणसूत्रं विलिख्य तत्र सर्वमध्यगं पदचतुष्कं मार्जयित्वा एककोष्ठं कुर्यात्। तद्बहिर्दिक्षु चतुष्पदानि सम्मार्ज्य कोष्ठीकुर्यात्। अन्तःकोणकोष्ठानि मार्जितकोणसूत्राणि कारयेत्। बहिः परितःकोणार्धकोष्ठैस्सह द्वात्रिंशदन्तर्विंशतिर्मध्य एकमिति त्रिपञ्चाशत्पदानि स्युः। तत्र मध्यदिक्षु कोणेषु तत्पार्श्वस्थेष्वीशार्धकोष्ठादिषु त्रिपञ्चाशत्पदेषु प्रागुदगर्चयेत्। अत्रापि केचिन्मध्ये चतुष्षष्टिं सम्मार्ज्य कोष्ठीकृत्य तद्बहिः पङ्क्तौ दिक्षु कोणसूत्रान्तस्थां पदत्रयीमेकपदीं कुर्यात्। तानि पञ्च तद्बहिःकोणेष्वर्धकोष्ठानि षोडशपदानि बाह्यपङ्क्तौ कोणपार्श्वस्थान्यष्टावेकपदानि तन्मध्यस्थानि दिक्षु षोडश द्विपदानि। एवं चक्रे पञ्चचत्वारिंशत्। तद्बहिर्दिग्विदिक्षु अष्टौ तैस्सह त्रिपञ्चाशत्पदानि स्यु। तेषु मध्ये ब्रह्माणं दिक्षु आर्यकादीन् कोणार्धकोष्ठेषु सावित्रादीन् ईशकोणार्धकोष्ठादिपरितः ईशानादीन् तद्बहिः शर्वादीनर्चयेत्। तथाच प्रयोगमञ्जर्याम्—

ब्रह्मा मध्यचतुष्पदप्रणिहितो दिक्षु त्रिपद्यां स्थिताः
तद्बाह्येऽथ चतस्र एकपदशो द्वन्द्वस्थिता पार्श्वगाः॥
कोणस्याप्यथ षोडशार्धपदगाः कोष्ठेषु बाह्येतरा
दिक्स्थाष्षोडश देवता द्विपदगाश्चाष्टौ बहिर्दिग्गताः॥

इति। एवमागमोक्ताश्चत्वारो वास्तुपूजाक्रमा उक्ताः। अन्ये ज्योतिर्विदः पञ्चचत्वारिंशद्वास्तुदेवता आहुः। तथाच नारदः—

पञ्चोत्तरान् वक्ष्यमाणांश्चत्वारिंशत्सुरान् यजेत्।
द्वात्रिंशद्बाह्यतः पूज्यास्तदन्तस्थास्त्रयोदश॥

इति। तेषामयमर्चाक्रमः—मध्ये ब्रह्मा नवपदः। तद्बहिर्दिक्ष्वर्यमादयः त्रिपदाः। तद्बहिःकोणेषु सावित्रादय एकपदाः। सर्वबहिःको-

णेषु सद्विपार्श्वेषु द्वादशैकपदाः । दिक्षु तदन्तस्थेषु विंशतिपदा इति पञ्चचत्वारिंशद्वास्तुदेवतास्स्युः । अत्र वराहमिहिरः—

मध्ये ब्रह्मा नवकोष्ठकाधिपोऽस्यार्यमा स्थितः प्राच्याम् ॥
एकान्तराः प्रदक्षिणमस्मात्सविता विवस्वांश्च ।
विबुधाधिपतिस्तस्मात् मित्रोऽन्यो राजयक्ष्मा च ॥
पृथ्वीधरापवत्साविवत्येते ब्रह्मणः परिधौ ।
आपो नामैशाने कोणे हौताशशने च सावित्रः ॥
जयनामा नैरृत्ये रुद्राणी चानिलपदस्था ।
[1]शिखिपर्जन्यजयन्तास्सूर्यस्सत्यो भृशोऽन्तरिक्षश्च ॥
ऐशान्याद्याः क्रमशो दक्षिणपूर्वेऽनिले काण ।
पूषा वितथगृहक्षतयमगन्धर्वाख्यभृङ्गराजमृगाः ॥
पितृदौवारिकसुग्रीवपुष्पदन्तोडुपत्यसुराः ।
शोषोऽथ पापयक्ष्मा रोगः कोण ततोऽभिमुख्ये च ॥
भल्लाटसोमभुजगास्ततोऽदितिदिती इति क्रमशः ।
अयं तथापवत्सः पर्जन्योऽग्निर्दितिश्च वर्गोऽयम् ॥
एवं कोणे कोणे यद्ि तास्स्युः पञ्च पञ्च सुराः ।
बाह्ये द्विपदाश्शेषास्ते विबुधाः विंशतिस्समाख्याताः ॥
शेषाश्चत्वारोऽन्ये त्रिपदा दिक्ष्वर्यमाद्याः ।?

इति । चतुष्षष्टिपदं तु दिक्षु द्विपदाः कोणेष्वर्धपदा कोणपार्श्वयोस्सार्धपदास्स्युः इति । तथाच च वराहमिहिरः—

अष्टाष्टकपदमथवा कृत्वा रेखाश्च कोणगास्तिर्यक् ॥
ब्रह्मा चतुष्पदोऽस्मिन् अर्धपदा ब्रह्मकोणस्थाः ॥

---

[1] शिखिपर्जन्यजयन्तेन्द्रसूर्यसत्या भृशोऽन्तरिक्षश्च.

अष्टौ च वह्नि कोणेष्वर्धपदास्तदुभयस्थितास्सार्धाः ।
उक्तेभ्यश्शेषास्ते द्विपदा विंशतिस्ते च ॥

इति । द्वावेतौ ज्योतिर्विदुक्तौ वास्त्वर्चाक्रमौ । एतेष्वन्यतमं स्वाभ्यस्तमर्चनाक्रममाश्रित्य वास्तुदेवता अर्चयेत् । तत्र मध्ये शालीन् प्रकीर्य तदुपरि तण्डुलांस्ततो दर्भांस्तदुपरि सपुष्पाक्षतं कूर्चं विन्यस्य पीठे ब्रह्माणमावाह्य तन्मूर्तिं ध्यात्वा अर्घ्यगन्धाक्षतपुष्पैर्धूपदीपाक्षतादिभिश्चाभ्यर्च्य बलिर्देयः । तदुक्तम्—

शालितण्डुलकूर्चदर्भपटलीपुष्पाक्षतादिश्रिते
कोष्ठे मध्यगते तनोतु मतिमान् शाक्रेयपीठार्चनाम् ।
मूर्तिं तत्र विचिन्त्य तस्य विधिवत् ब्रह्माणमावाहये·
दस्या (न्न्यासा) ङ्गान्युपचारकैरुपचरेन्मूलेन तं पूजयेत् ॥

इति । अन्यदेवतानामपि पदानि नानावर्णैः रजोभिरलंकृत्य तेषु तासां पीठार्चनादिकं प्राग्वद्विधायाभ्यर्च्य बलिं दद्यात् । ब्रह्मादीनां मूर्तिध्यानमन्यैरुक्तं—

ब्रह्मा चतुर्मुखो रक्तो लम्बकूर्चश्चतुर्भुजः ।
अक्षमाले स्रुवं दक्षे वामे दण्डकमण्डलू ॥
दधानमष्टनयनं यजेन्मध्ये व्यवस्थितम् ।
सर्वे चतुर्भुजं ध्येयं वास्तुदेवा व्यवस्थिताः ॥
कृताञ्जलिपुटास्सर्वे खड्गखेटकपाणयः ।
ब्रह्माणं सन्निरीक्ष्यैव तद्वक्त्राभिमुखाश्च ते ॥
स्वस्वस्थानस्थिताश्चैव साधारणमुदाहृतम् ।
चरकी शङ्खसदृशा विदारी पापकद्युतिः ॥
पूतना हेमसङ्काशा मेघाभा चाथ राक्षसी ।
खड्गं च पानपात्रं च क्षुरिकां कर्तरीं तथा ॥

दधाना भीमरूपास्ता राक्षस्यः परिकीर्तिताः ।
मरीचिश्श्वेतवर्णस्स्याद्विवस्वान् रक्तवर्णकः ॥
शातकुम्भनिभो मित्रः कृष्णवर्णस्तु भूधरः ।
सविता नीलवर्णाङ्गः सावित्रो धूम्रविग्रहः ॥
इन्द्रश्चारुणवर्णाभः शुक्लश्चेन्द्रजयस्तथा ।
आपश्च क्षीरधवलः आपवत्सो जपाद्युतिः ॥
ईशानः क्षीरधवलः पर्जन्योऽञ्जनसन्निभः ।
जयन्तोऽञ्जनसङ्काशो महेन्द्रश्चोत्पलद्युतिः ॥
आदित्यो रक्तवर्णस्स्यात्सत्यकश्चित्रवर्णकः ।
भृङ्गो बन्धूकपुष्पाभः कुन्दाभश्चान्तरिक्षकः ॥
उद्यद्दिनकराभोऽग्निः पूषा रक्ताब्जसन्निभः ।
वितथश्चेन्द्रचापाभो विद्युद्वर्णो बृहत्क्षतः ॥
यमश्चाञ्जनसङ्काशो गन्धर्वः पद्मरागवत् ।
भृङ्गराजस्तु भृङ्गाभो मृगो जीमूतसन्निभः ॥
पितरः पावकाभश्च सिते सैबीरिकस्तथा ।
सुग्रीवो नीलकण्ठाभः चन्द्राभः पुष्पदन्तकः ॥
वरुणस्स्फटिकाभाङ्गो भृङ्गाभश्चासुरोत्तमः ।
शेषश्चोत्पलसङ्काशः पापयक्ष्मेन्द्रनीलवत् ॥
हारिद्रासन्निभो रोगो नागश्चन्द्रेन्दुसन्निभः ।
मुख्यो मौक्तिकसङ्काशो भल्लाटः श्वेतपद्मवत् ॥
सोमस्स्फटिकसङ्काशो रोगो रक्तोत्पलद्युतिः ।
कुन्देन्दुधवलाभो वा कपिलो वाऽदितिस्स्मृतः ॥

इति । अन्यदेवतानामपि पदानि नानावर्णै रजोभिरलंकुर्यात् । तेषु तासां पीठार्चनादिकं प्राग्वद्विधायाभ्यर्च्य बलिं दद्यात् । यथोक्तं भगवत्पादैः—

इतीरितानामपि देवतानां चित्राणि कृत्वा रजसा पदानि ।
पयोऽन्धसा साधु बलिर्विधेयः द्रव्यैस्तु वा तत्र विशेषसिद्ध्यै ॥

इति । प्रतिदेवतं द्रव्याणि प्रयोगमञ्जर्याम्—

ईशं यजेदाज्ययुताक्षतैश्च पर्जन्यमाज्यान्नयुतोत्पलैश्च ।
पताकया पीतरुचा जयन्तं सपैष्टिकै रत्नवरैर्महेन्द्रम् ॥
सूर्यं च सापूपवितानकेन सत्यं च गोधूमयुतैर्घृतान्नैः ।
मत्स्यैस्समाषैर्भृशमन्तरिक्षं स शुष्कुलीभिः पिशितैर्नवैश्च ॥
अग्निं स्रुवा सक्तुलवैश्च लाजैः पूषाख्यमन्नैर्वितथं सुवर्णैः ।
[1]दध्योदनेनाथ भृतं क्षतं च यजेद्यमाख्यं पिशितोदनेन ॥
गन्धर्वमन्नैश्च सुगन्धयुक्तैः रसक्षयावैरथ भृङ्गराजम् ।
मृगं यवान्नैर्निरृतिं सम्पूज्य सम्यक् कृसरैः पितॄंश्च ॥
दौवारिकम्माषयुतैस्तु दन्तकाष्ठैस्तु सुग्रीवमभीष्टधूपैः ।
स्तम्बैः कुशानामथ पुष्पदन्तं सपायसैरम्बुपतिं च पद्मैः ॥
पूज्योऽसुरस्स्यात्सुरयाथ शोषमाज्योदनेनापि यवैश्च रोगम् ।
संपूज्य वायुं घृतमण्डकेन नागप्रसूनैरभिपूज्य नागम् ॥
भक्ष्यैश्च मुख्यं विविधैर्यजेच्च भल्लाटकं मुद्गकृतोदनेन ।
यजेच्च सोमं मधुपायसेन पिष्टान्वितैरर्गळमक्षतैश्च ॥
शाल्योदनेनादितिमर्चयेच्च दितिं च माषोदनपूरिकाभिः ।
क्षीरैर्यजेदापमथापवत्समाज्येन दध्नाऽप्यथ लड्डुकेन ॥
सुगन्धिधूपैस्सविता कुशान्नैस्सावित्र ईज्यस्सगुडैः प्रसूनैः ।
होतव्यमिन्द्राय घृताक्तमन्नंमुद्गोदनं चेन्द्रजयाय साज्यम् ॥
रुद्राय दद्याद्गुडपायसं तत् जयाय पक्वामिषमामिकं च ।
सशर्करं पायसमार्यकाय विवस्वते पायसचन्द्रनेन ॥

[1] मध्वो.

मित्राय दद्याच्च घृतान्नमुर्वीधराय माषामिषमुद्गभक्तम् ।
तिलाक्षतैर्गव्ययुतैर्यवान्नैर्मध्ये समाराध्य विधिं यजेत् ॥
बहिर्गृहं गोघृतपायसाभ्यां सहामिषेणार्यमणं घृतेन ।
वित्तान्वितैर्जृम्भकमामिषाद्यैस्सान्द्रैस्ससूनैः पिलिपिं च मांसैः ॥
साज्यामिषान्नैश्चरकीं सभक्ष्यैर्मांसैस्सभक्ष्यैश्च यजेद्विदारीम् ।
पूतां च दध्याप्लुतरक्तभक्तैः पापां च पिष्टान्नपयोऽस्थिरक्तैः ॥
अभ्यर्च्य सम्यक् बलिमादरेण दद्यादमूभ्योऽखिलदेवताभ्यः ।

इति । ननु बाह्ये पूज्यतया शर्व उक्तः । पापरक्षसी नोक्ता । इह द्रव्याभिधानं तु उक्तस्य न श्रूयते । अनुक्तस्य श्रूयत इति, नैष दोषः, तन्त्रान्तरे स्कन्दादीनां पापराक्षस्या सह अष्टानां पूज्यतया अभिधानात् । उक्तं च—

शर्वस्स्कन्दोऽर्यमाह्वश्च जृम्भकः पिलिपिञ्जकः ।
चरकी च विदारी च पूतना पापराक्षसी ॥

इत्यत्र शर्वस्स्कन्द इत्येक एव बाह्ये चाष्टविधेभ्योऽथ भूतेभ्यो बलिमाहरेत्—

कुशपुष्पाक्षतैः सर्वान् द्रव्यालाभे समर्चयेत् ।
स्वेनैव नाम्ना प्रणवादिना च नमोऽन्तयुक्तेन च देवतास्ताः ॥
पाद्यादिभिः पूर्वमथोपचारैः संपूज्य पश्चात्तु बलिं विदध्यात् ॥

इति । नारदः—

ब्रह्मादींश्च नवैकाद्वित्रिपादानर्चयेत्सुरान् ।
वास्तुमन्त्रेण वास्तुज्ञो दूर्वादध्यक्षतादिभिः ॥
ब्रह्ममन्त्रेण पार्श्वे तु वस्त्रयुग्मं प्रदापयेत् ।
आवाहनादिसर्वोपचाराणि क्रमशस्तथा ॥

नैवेद्यं विधिनाऽनेन पाद्यैस्सह समर्चयेत् ।
ताम्बूलं च ततः पश्चात् प्रार्थयेद्वास्तुपूरुषम् ॥
वास्तुपुरुष नमस्तेऽस्तु भूशय्याभिरत प्रभो ।
मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा ॥
इति प्रार्थ्य यथाशक्ति दक्षिणामर्चकाय च ।
दद्यात् तत्रैव विप्रेभ्यो भोजनं च स्वशक्तितः ॥

इति । तन्त्रान्तरे—

तद्दिने भोजयेद्विप्रांस्त्र्यहीनान् मधुरैस्तथा ।
भक्ष्यैर्नानाविधैश्शक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥

इति । तत्फलं च नारदेनोक्तम्—

अनेन विधिना सम्यक् वास्तुपूजां करोति यः ।
आरोग्यं पुत्रलाभं च लभते नात्र संशयः ॥

मात्स्यपुराणे—

ततस्सर्वौषधिस्नानं यजमानस्य कारयेत् ।
द्विजांश्च भोजयेद्विप्रान् ये चान्ये गृहमागताः ॥
एतद्वास्तूपशमनं कुर्यात्कर्म सदा बुधः ।
प्रासादभवनोद्यानप्रारम्भे परिवर्तने ॥
पुरवेश्मप्रवेशे च सर्वदोषापनुत्तये ।
इति वास्तूपशमनं कृत्वा सूत्रेण वेष्टयेत् ॥
रक्षोघ्नपवमानेन सूक्तेन भवनं पुनः ।
नृत्तमङ्गलवाद्येन कुर्याद्ब्राह्मणवाचनम् ॥

इति । अपि च विशेष उक्तः—

चतुरश्राकृतिः कश्चिदसुरस्सर्वनाशकृत् ।
पुरा तस्य वधायैव सर्वे देवास्समुद्यमम् ॥

कृत्वा तं हन्तुमुद्युक्तास्तैरवध्योऽभवत्पुरा ।
आवयोस्तन्निरासायममित्याकथयंस्तदा ॥
कथयास्माकमधुना तद्वास्तुपुरुषस्य यत् ।
दर्पशान्तिर्न चेत्तेन विश्वमासीदुपद्रुतम् ॥
इत्युक्ते तैर्मया प्रोक्तं निधनं तस्य दुश्शकम् ।
निपात्य तं क्षितौ तस्य शरीरे स्थापयंस्तदा ॥
नित्यं देवास्त्रिपञ्चाशन्निष्पन्दाक्रमणाय वै ।

इति—

नियुक्तास्तस्य ये पूजाविमुखास्तत्कृतानि ते ।
सुकृतानि समादद्युर्दुष्कृतानि च कुर्वते ॥
तस्मात्तेषामर्चनं तु प्रत्यब्दं कुर्वतां सदा ।
शुभान्येवाशु जायन्ते नैवाशुभकथापि च ॥

इति शिवेन देव्या उक्तः । आगमपूर्वकं तत्पूजाबलिविधानफल-मुक्तं तन्त्रराजे—

एवं विदधता गेहे नाकल्याणं कदाचन ।
न बालमरणव्याधिभूतप्रेतादिकं न च ॥
सर्पपीडा न चान्योन्यकलहो नाशुभानि च ।
पुत्रपौत्रधनारोग्यपशुदासीसमृद्धिमान् ॥
अरोगी विजयी ख्यातश्चिरं जीवति तद्गृहे ।
राजवेश्मसु सर्वत्र तथा च महिषीगृहे ॥
सचिवामात्यसेनानीभवनेषु पुरे तथा ।
विदध्यात् प्रतिवर्षं च प्रोक्तसिद्ध्यै तु देशिकः ॥
न चेदुक्तान्यथारूपफलैः क्लेशोऽनिशं भवेत् ।

इति । पुराणेऽपि—

अनेन विधिना यस्तु प्रतिसंवत्सरं बुधः ।
गृहे वाऽऽयतने कुर्यान्न स दुःखमवाप्नुयात् ॥
न च व्याधिभयं तस्य न च बन्धुजनक्षयः ।
जीवन् वर्षशतं सम्यक्कल्पमेतच्च तिष्ठति ॥

इति । एतदकृत्वा गृहनिर्माणप्रवेशादिकर्मणि दोष उक्तः । यथा—

गृहादिकरणे यत्र नार्चिता वास्तुदेवताः ।
तत्र शून्यं भवेत्सर्वं रक्षोविघ्नादिभिर्हृतम् ॥
तस्माद्वास्त्वर्चनं कार्यं सम्यक्सम्पदभीप्सुभिः ॥

इति । नारदोऽपि—

अकृत्वा वास्तुपूजां यः प्रविशेन्नवमन्दिरम् ।
रोगात् नानाविधान् क्लेशानश्नुते व्याधिसङ्कटात् ॥
अकवाटमनाच्छन्नमदत्तबलिभाजनम् ।
गेहं न प्रविशेदेव विपदामास्पदं हि तत् ॥

इति—

जीर्णोद्धारे तथोद्याने गेहादीनां प्रवेशने ।
प्रासादभवनारम्भे प्रासादपरिवर्तने ॥
. . . . . . तद्वत्प्रासादेषु गृहेषु च ।
एवं वास्तुप्रशमनं कार्यं पूर्वदिने बुधैः ॥

इति । एता देवतास्स्वाधिष्ठितवास्त्वङ्गानुस्मृतिपूर्वकं यष्टव्याः तद्यथा—

ईशो मूर्धन्यापो मुखेऽस्य नयनश्रवोगळांसस्थाः ।
पर्जन्यादितिप्रमुखाः भुजयोर्भल्लाटसत्याद्याः ॥

स्तनयोरार्यकपृथ्वीधरापुरस्थापवत्सश्च ।
सावित्रसवितृरुद्राः स तज्जयाः करयुगप्रकोष्ठस्थाः ॥
ब्रह्मा हृदि च विवस्वन्मित्रौ जठरेऽथ वितथशोषाद्यौ
द्वौ पार्श्वयोश्च शक्रो मेढ्रे वृषणे च शक्रजयः ॥
उत्सङ्गजानुजङ्घास्थनि यमवरुणाद्योऽङ्घ्रिगाः पितरः ।
एते तदङ्गसंस्थाः प्रपूजितास्तन्निवासिनां सुखदाः ॥

इति । एवं पूर्वेद्युः वास्तुमध्ये होमबल्यर्चादि कृत्वा गृहमलङ्कृत्य स्वस्ति वाचयित्वा गृहं प्रविशेत् । अत्राहुः—

सम्मृष्टसिक्तसमलंकृतसद्मदेशे
कृत्वा बलिं च भवनं विधिना सुभोज्यैः ।
सन्तर्प्य विप्रजनतामथ वाचयित्वा
पुण्याहमृद्धिमभियच्छतु दक्षिणां च ॥
ततस्सम्प्रविशेद्गेहं गृही तं समलङ्कृतम् ।
शोभितं दर्भमालाभिः पुष्करैरथ पल्लवैः ॥
साक्षतैः पूर्णकुम्भैश्च धूपैर्दीपैश्च शोभितम् ।
दीपैरङ्कुरपात्रैश्च द्वारस्थैस्सुमनोहरैः ॥
तोरणैर्ध्वजसंयुक्तैः क्रमुकैः कदळीफलैः ।
शङ्खदुन्दुभिघोषैश्च द्विजाशीर्वचनैस्सह ॥
स्त्रीभिस्सुमङ्गलाभिश्च दासीभिश्च सुशोभितम् ।
विनायकं तु सम्पूज्य द्विजान् दैवविदस्तथा ॥

स्वस्तिवाचनादिकं विप्रभुक्त्यनन्तरं कार्यम् । यथाऽऽह गुरुः—

ब्राह्मणैराशिषो वाच्या भुक्तोच्छिष्टैर्द्विजोत्तमैः ।

इति । प्रवेशे निमित्तानि चात्राप्युक्तानि । तथाचोक्तम्—

कृत्वा विप्रान् सजलकलशानग्रतो वामतोऽर्कं
स्नातस्स्रग्वी विमलवसनो मङ्गलैर्वेदघोषैः ।
व्यस्तैर्यात्राकथितशकुनैर्द्वारमार्गेण राजा
हर्म्यं पुष्पप्रकररुचिमत्तोरणाढ्यं विशेत ॥

इति । अत्र नवागारप्रवेशस्तु सभार्येणैव कार्यः । उक्तं च विधिरत्ने—

धात्र्याः कराभ्यां लवणैः प्रपूर्णं
स्वर्णादिपात्रं सिततण्डुलैश्च ।
कुर्यात्प्रवेशं सह भार्ययाऽसौ
लक्ष्मीं स्मरन् गेहमिवेन्दिरायाः ॥

इति । गजाश्वादिप्रवेशेऽपि तच्छालामलंकृत्य तान् प्रवेशयेत् । तथाच गुरुः—

एवं गजाश्वशालासु कृत्वैव प्रविशेत्ततः ।

इति । गार्हस्थ्यानन्तरमग्न्याधानस्य विधानाद्वास्त्वनन्तरमग्न्याधानस्य कालमाह—

**अग्न्याधाने मुनिभिरुदिता धातृमित्रेन्दुचित्रा-**
**पौष्णैन्द्राग्निज्वलनगुरवः सोत्तरास्सुप्रशस्ताः ।**
**विप्रादीनामृतुरिह शुभस्स्वाद्वितीयोद्भवोक्तः**
**स्वर्क्षाग्न्याने दहति दहनो गेहमित्याह गार्ग्यः ॥२४॥**

विप्रादीनामग्न्याधाने रोहिण्यादय एकादश ताराः शुभकराः । इहाग्न्याधाने विप्रादीनां स्वस्वोपनयनोक्तो वसन्तादिरेव शुभः । मृगशीर्षमपि शुभमिति श्रीपतिः—

प्राजापत्ये पौष्णभे सद्भिर्दैवे पुष्ये ज्येष्ठास्वैन्द्वे कृत्तिकासु ।
अग्न्याधानं ह्युत्तराणां त्रयेऽपि श्रेष्ठं प्रोक्तं प्राक्तनैर्विप्रवर्यैः ॥

इति । लग्नफलं गोचरफलं चाह—

**कुम्भे वाऽम्भश्चरे वा वपुषि हिमकरे वा तदीयांशकस्थे संजातो वाऽऽहितो वा यदि विपदमुपैत्यग्निरग्न्याहितस्य । द्यूने भौमोऽत्र मृत्युं रविगुरुरविजा रोगमिन्दुर्विधत्ते भार्याभङ्गं धनस्था धनहतिमशुभास्सद्ग्रहास्त्वर्थपुष्टिम् ॥ २५ ॥**

कुम्भे जलराशौ तदंशे वा लग्ने चन्द्रे वा कुम्भाद्यृक्षगते तदंशागते सति अरणेस्सञ्जातः कुण्डेष्वाहितो वा वह्निर्विपदं निर्वाणमेति—नश्यति । तथाच रल्लः—

जलचरराशेरुदये तदंशके वा घटोदयांशे वा ।
चन्द्रेऽपि वा विलग्ने जातो निर्वाणमेत्यग्निः ॥

अत्राग्न्याधाने तत्काललग्नस्याष्टमे भौमश्चेदाहिताग्नेः कर्तुः विनाशं करोति । रविगुरुमन्दाः कर्तू रोगं कुर्वन्ति । चन्द्रो यजमानस्य पत्नीनाशं करोति । तथाच रल्लः—

निधनगे हिमगौ म्रियतेऽङ्गना क्षितिसुते हुतभुक्प्रविधायकः ।
शनिदिनेशपुरन्दरमन्त्रिषु प्रबलरोगयुतो भवति द्विजः ॥

पापाः द्वितीयस्थाः धननाशं कुर्युः । शुभाः धनपुष्टिं कुर्वन्ति । तथाच श्रीपतिः—

अशुभेषु धने धनैर्विहीनो धनवान् सद्भिरथान्नदो विधौ स्यात् ।
उदये सबुधे कुजेऽथवेन्दौ ज्वलनो लोककृशानुसंगमेति ॥

तुशब्दोऽनुक्तसमुच्चयार्थः। तेन द्वितीये चन्द्रश्शुभदः। अष्टमे ज्ञभृगू शुभावित्याद्यन्यमतं सूचितम्। तथाच विधिरत्ने—

कुर्वन्ति पापा निधनं धनस्थाः पुण्याश्शुभं निर्गुणतामिहेन्दुः।
रन्ध्रे विना ज्ञं भृगुजं च शेषाः कर्तुश्च रोगं विसुखं प्रदद्युः॥

अत्र सूर्यारौ केन्द्रगौ शुभौ। तथाच श्रीपतिः—

त्रिकोणकेन्द्रोपगते च सूर्ये बृहस्पतौ शीतकरे कुजे च।
शेषग्रहेषु प्रचयस्थितेषु धूमध्वजोत्पादनमामनन्ति॥

कुजेन्दुभृगूणां बलमवश्यं ग्राह्यम्; यत उक्तम्—

कुजेन्दुजीवै रिपुराशिसंस्थैः पराजितैर्नीचगृहोपगैर्वा।
अस्तंगतैर्वाऽग्निपरिग्रहं यः करोति हास्यं विदुषां स याति॥

इति। अत्र रोगाश्चान्यैर्दर्शिताः। यथा—

लग्नस्थे धनुषि गुरावथ क्रिये वा भूसूनौ दशमगतेऽथ सप्तमे वा।
तिग्मांशौ गगनषडायगे विधौ चेज्जाताग्निर्जयति न संशयं द्विजेन्द्रः॥

आहिताग्नेर्दीक्षापरिग्रहकालश्श्रीपतिनोक्तः—

सौम्ये पौष्णे वासवे वैष्णवाख्ये हस्तस्वातीत्वष्टृपुष्याश्विभेषु।
ऋक्षेऽदित्यां मेखलाबन्धमोक्षौ संस्मर्येतेऽनूनमाचार्यवर्यैः॥

यज्ञान्ते यूपक्रियास्थापनकालो गुरुणोक्तः—

सोमवारयुते स्वातौ रोहिण्यां वाऽपि यूपकृत्।
कृष्णपक्षेऽष्टमीयोगे चतुर्दश्यामथापि वा॥
सौम्यभे सोमवारेण स्थाप्यो यूपो महार्थदः।

कौर्पिस्थे गुरौ यज्ञकर्म न कारयेदित्यन्ये । तथाच ज्योतिषार्णवे—

कौर्पिं बृहस्पतौ याते यज्ञकर्म न कारयेत् ।
मौञ्जीबन्धविवाहादि सर्वमिष्टं तथैव च ॥

अन्ये त्वाहुः—

विवाहोत्सवयज्ञेषु कौर्पिं याते बृहस्पतौ ।
विन्ध्याद्रेर्दक्षिणे भागे प्रोक्तदोषो न विद्यते ॥

इति । अध्यायमुपसंहरति—

**गेहारम्भं सहवास्तुप्रवेशं साग्नयाधानं कथयन्नेवमस्मिन् । षड्विंशत्या रचितश्श्लोकवर्यैरध्यायोऽयं नवमः पूर्ण आसीत् ॥ २६ ॥**

इति मुहूर्तदीपिकायां विद्यामाधवीयव्याख्यायां
नवमो वास्त्वध्यायः.



## दशमः कृषिबीजावापाध्यायः.

अथ गृहस्थस्याहिताग्नेः यजेतेति यागविधानात्तस्य अतिथ्याद्यर्चनस्य च धनमन्तरेण दुष्करत्वद्धनस्य च कृषिमूलत्वात्कृषिः कार्येति तत्कालमाह—

**कृष्यर्थं वनलावनेऽथ दहने पूर्वप्रवेशे शुभाः**
**पूर्वे शाश्विमरुन्मखाजभरणीमित्रोत्तराः कीर्तिताः।**
**भौमस्यातिशुभं दिनं गुरुविदोर्मध्यं शशाङ्कस्य वा**
**जीवज्ञोशनसां शुभास्स्युरुदयाः क्षेत्राणि चैषां तथा ॥ १ ॥**

आरण्यकृषिकर्तुर्वनभवगुल्मादिच्छेदने छिन्नशुष्कवनगुल्मदीनां दहने पूर्वं परीक्षार्थं भूप्रवेशे च पूर्वात्रयादित्रयोदशभानि शुभान्युक्तानि भौमस्य वारोऽतिशुभः। गुरुबुधयोर्वारौ मध्यमौ। सोमवारश्शुक्ले पूज्यः। कृष्णे वर्ज्यः। अतस्सोऽपि मध्यमः। गुरुबुधशुक्राणामुदयास्तद्राशयः तदंशाश्च श्रेष्ठाः। चकारोऽनुक्तसमुच्चयार्थः; विष्टिच्छिद्राविवर्जितास्तिथ्यर्धतिथयः श्रेष्ठाः। अत्र गुरुः—

कृषिमूला हि सर्वेषां प्राणिनां संपदस्सदा।
कृष्यभावे न सम्पत्स्यात् तस्माच्च प्रारभेत्कृषिम् ॥
पूर्वं सुभूप्रवेशस्स्यान्निमित्तं चावलोकयेत्।
मैत्रार्यमाश्विरोहिण्यः साजपादं च तोयभम् ॥

स्वात्युत्तरेषु पुष्ये च रौद्रे याम्येऽथ पैतृभे ।
कुर्यात्प्रवेशनं भूमेः प्रथमं स्वीकृतासु च ॥
प्रवेशो गोनराणां च कृषिसंपदमिच्छताम् ।
एवं प्रवेशनं कृत्वा वनच्छेदनमेव च ॥
दहनादिकमप्येवं कृत्वा कृषिमथारभेत् ।

त्वाष्ट्रं च श्रेष्ठमिति वसिष्ठः—

वारश्च कौजश्श्रेष्ठोऽत्र मध्यमौ बुधजीवयोः ।
शेषा वारा विवर्ज्यास्स्युस्सोमवारः कदाचन ॥
शुक्रज्ञजीवलग्ने वा राशौ चैषां शुभावहम् ।
पक्षच्छिद्रेतरास्सर्वे तिथयः कृषिकर्माणि ॥
पूजिता विष्टिवर्ज्याश्च करणास्स्युश्शुभावहाः ।
कुजांशे शोभनश्चन्द्रो विषनाडीविवर्जिते ॥
शुक्रचन्द्रमसौ केन्द्रे स्थितौ शोभनदौ सदा ।

कृष्यारम्भे मन्दवारश्शुभ इति केचित् यथा—

मन्दवारदिने केचिदिच्छन्ति क्ष्माप्रवेशनम् ।
शुक्रवारे च वर्ज्यं स्यस्त् स्थिरभेषु शुभं भवेत् ॥
आजमाहिषविम्वाद्रिप्रवेशश्च तथैव च ।

इति । आरण्यकृषौ योगान्तरमाह—

**शूर्पाश्विदातृमित्रैस्सहिते कविवासरे कवेरुदये।**
**कुर्यात्कृषिमारण्यां वनाविच्छेदादिकामखिलाम् ॥**

शूर्पाश्विनीरोहिण्यनूराधासहिते शुभदिने शुक्रोदये वनच्छेद-दानि सर्वमारण्यकृषिकर्म शस्तम् । तथाच गुरुः—

अश्विनीरोहिणीमैत्रनक्षत्रैस्सहिते यदि ।
सितवारे सशूर्पे च शुक्रलग्ने शुभे तिथौ ॥
आरण्यां त्र कृषिं कुर्याद्वनच्छेदनपूर्विकाम् ॥

इति—

याम्याग्नीन्दूदये कुर्यात्कृषिमारण्यगां तथा ।
वनच्छेदादि दाहं च पुंधान्यादीनि वापयेत् ॥

इति । क्षेत्रादिषु कृष्यारम्भकालमाह—

**कृष्यारम्भविधौ शुभानि दिनकृन्मित्रोत्तरारोहिणीपुष्यान्त्यादितिनैरृक्रतानि कतिचिद्भद्रामनिष्टां विदुः। गोवीणधरकार्किमनिमकराः श्रेष्ठास्स्मृता राशयः त्याज्या गर्दभविष्टिसूकरवृषाः सूर्योदयो वाऽशुभः ॥**

क्षेत्रादिषु कृष्यारम्भकर्मणि हस्तादिदशभानि शुभानि—शस्तानि। छिद्रेतराः तिथयश्शुभतरा उक्ताः। केचिद्भद्रां तिथिमशुभामाहुः। अत्र गुरुः—

रोहिण्यादित्यमूलानि पौष्णहस्तत्रिषूत्तराः ।
पुष्यस्तथाऽनुराधा च कृषिकर्माणि पूजिताः ॥
वारनक्षत्रयोगेषु शुभेषु प्रविशेद्भुवम् (न्नवम्) ।
एष्वेव शुभयोगेषु शुभेषु प्रविशेद्भुवम् ॥
एष्वेव शुभयोगेषु कृषिमप्यारभेत्सुधीः ।

इति। श्रीपतिना—चित्राश्विसौम्या वसुवारणस्वातिवैष्णवान्यपि शस्तानि? उक्तं च—

मृदुध्रुवक्षिप्रचरेषु मूलमघाविशाखासहितेषु भेषु ॥
हलप्रवाहं प्रथमं विदध्यात्सीरैरमुष्कान्वितसौरभेयः।
वाराश्शुक्रेन्दुजीवानां बुधस्य च शुभावहाः ॥
मन्दारवारौ द्वौ वर्ज्यौ सर्वदा कृषिकर्मणि।
कर्किगोमृगमत्स्याश्च नृयुग्मं च सुपूजिताः।
शेषाश्च राशयस्सर्वे वर्ज्यास्स्युः कृषिकर्मणि।

अन्ये त्वाहुः—

मन्दारवारौ द्वौ वर्ज्यौ सोमवारस्तु मध्यमः ॥

इति। गर्दभादीनि चत्वारि करणानि वर्ज्यानि। यथाऽऽह गुरुः—

क्रोधगर्दभगोविष्टिकरणाश्च विवर्जिताः ॥

इति। अन्यानि सिंहव्याघ्रगजाख्यानि त्रीणि शस्तानि—

शुभग्रहोदयं श्रेष्ठं वर्ज्यं पापग्रहोदयम्।
निरीक्षणं तथैतेषां ग्रहाणां तु शुभाशुभम् ॥

इति। सामान्यविशेषाभिधा (नाम्) नात्। सूर्योदयो वा शुभ इति—केषांचित् कृषौ सूर्योदयो वा शुभः इति। तथा च वसिष्ठः—

शुक्रार्केन्दुज्ञजीवानां वारवर्गोदयाश्शुभाः।
अक्यारवरौ द्वौ वर्ज्यौ नित्यं सस्यगदप्रदौ ॥

इति। अत्र शुभान्यपि भानि लाङ्गलचक्रवशादशुभानि शुभतराणि च स्युरिति तच्चक्रं सफलमाह—

**इनारूढं पूर्वं परमपि ततो हन्त्यनडुहः त्रयं भानां पूर्वं त्रयमुपरि तेभ्यश्च शुभदम्। हलाकारे**

**चक्रे नव निधनदाश्शूलनिहिताः श्रियं तन्मध्यस्थाः कृषिषु दश तारा विदधते ॥ ४ ॥**

दण्डिकापूगयोक्त्रयुक्तं हलाकारं चक्रं विलिख्य तत्र दण्डिकाधस्तादारभ्य मार्तण्डभुक्तभादीनि साभिजत् प्रादक्षिण्येन दण्डिकाधस्तात्रीणि लाङ्गलपूगाद्दुभयतस्त्रीणित्रीणि योक्त्रयोः पञ्च पञ्च दण्डिकाग्रे त्रीणि भानि विन्यसेत् । हलाकारेऽस्मिंश्चक्रे दण्डिकाधस्थं सूर्याक्रान्तभुक्तं भोग्यभत्रयं कृषिकृतो अनडुहो हन्ति । ततो हलद्विपार्श्वगतं प्राक्त्रयमुपरित्रयमिति भषट्कं सर्वेषां शुभकरम् । पूगद्विपार्श्वदण्डिकाग्रेषु त्रिषु हलाकारेषु स्थिता नव ताराः स्वामिनो निधनप्रदास्स्युः । पूग दण्डिकाग्रयोर्मध्ये योक्त्रस्थानद्विपार्श्वगता दश तारास्स्वामिनो गवां च संपदं कुर्वन्ति । यथाऽऽह नरपतिः ॥

लाङ्गलं दण्डिकापूगयोक्त्रद्वयसमन्वितम् ।
स्थापयेद्दण्डिकावृक्षांश्चण्डांशोर्भुक्तिभादिकान् ॥
दण्डिकाहलपूगानां द्विद्विस्थाने त्रिकं त्रिकम् ।
योक्त्रयोः पञ्चकं सर्वे गणानां चक्रलाङ्गलम् ॥
दण्डिकास्थे गवां हानिः पूगस्थे स्वामिनो भयम् ।
लक्ष्मीर्लाङ्गलयोक्त्रस्थे कृष्यारम्भादिनर्क्षके ॥

इति । श्रीपतिना—दण्डिकाग्रे स्वामिनो भयमुक्तम् । "कृषिकृद्धातायशूलत्रयम्" इति । अत्र केचिच्चक्रं वार्षभं वर्णयन्ति—

विलिख्य वार्षभं चक्रं विन्यसेद्भानि सूर्यभात् ।
वदने निधनं द्वे भे शिरसि त्रीणि संपदम् ॥
ककुदि त्रीणि वृद्धिं च त्रीणि पुच्छरुजं ततः ;
धनं नितम्बयोरष्टौ श्रियमष्टौ च पादगाः ॥

इति । एवं चक्रविशुद्धास्तारा ग्राह्याः । कृष्यर्थं हलादिकरणाय शालानिर्माणप्रवेशवृक्षच्छेदादिकाला गुरुणोक्ताः ॥

वैष्णवान्त्यांशकस्थेन्दुविलग्ने गृहमारभेत् ।
पुनश्चास्मिन् विशेषयोगे शिल्पसंपत्समृद्धये ॥
आप्यक्षयाद्यन्तपादस्थबुधलग्ने समारभेत् ।
हलं तद्धलसंयुक्तक्षेत्रं स्यान्निरुपद्रवम् ॥
आर्यमर्क्षे च तल्लग्ने कर्तव्यं लाङ्गलादिकम् ।

इत्यादयो द्रष्टव्याः । अत्र सूर्येन्दुशुक्राणां बलं ग्राह्यम् । यथोक्तं नारायणेन—

बीजेष्वार्यो विशिष्टो हि कृषौ तु भृगुरुत्तमः ।
सर्वत्रापि रविश्श्रेष्ठः विशेषेण तु चन्द्रमाः ॥

इति । बीजावापे वक्ष्यमाणपरिघानुलोम्यमत्रापि ग्राह्यम् । यथोक्तम् -

शुभेक्षणयुते त्वह्नि परिघस्यानुलोम्यतः ।
क्षेत्रं प्रकर्षयेज्जीवे लग्ने बलिनि वा स्थिते ॥

इति । अपिच—

बुधदृष्टे गुरौ लग्ने हिबुके सशुभेक्षिते ।
कृष्यारम्भस्तु कर्तव्यस्सम्यक् सस्यजिघृक्षुभिः ॥

इति ।

हलादीनि समभ्यर्च्य काले तेन निवेदिते ।
अभ्यर्च्य धूपदीपाद्यैर्विघ्नेशं कृषिदेवताः ॥
प्राङ्मुखोदङ्मुखो भूत्वा प्रारभेत कृषिं स्वयम् ।

अत्रिः—

प्राचीस्तिस्रो लिखेद्रेखाः पञ्चवाऽनाधिकाः कृषौ ।

वसिष्ठः—

एका तिस्रोऽथवा पञ्च कृषिरेखाः प्रकीर्तिताः ।
अत ऊर्ध्वं न कुर्यात्तु महादोषसमुद्भवात् ॥

इति । कृष्यारम्भे शुभाशुभनिमित्तानि गार्गेणोक्तानि—

लाङ्गले भज्यमाने तु कुलभङ्गं विनिर्दिशेत् ।
ईषाभङ्गे भवेत्स्त्रीणां युगभङ्गे पतिक्षयः ॥
शमीभङ्गे कुमारीणां योक्त्रे पुत्रविनाशनम् ।
जङ्घाभङ्गे भवेद्वृष्टिः सर्वसस्यसुसम्पदः ॥
कर्कटके चोरभयमिषुपाते धनक्षतिः ।
पात्रभेदे त्वनावृष्टिः वृद्धिच्छेदेन वाहनम् ॥
कृष्यमाणे भवेत्तत्र अस्थि वा रोमभस्मनी ।
चिताकेशाश्च निष्पत्तिमल्पां चात्र समादिशेत् ॥

इति । अपिच—

यात्रावत्सर्वमालोच्य सौमनस्यादिकं हितम् ।
तस्यापि सौरभेयानां प्रातिकूल्यमशोभनम् ।

अपिच—

धुर्येभ्यो यवसं दद्यात् तस्मिन् रक्षेच्च तान् सदा
न च दद्यात् गृहे किञ्चिन्न कवाटं च वारयेत् ॥

इति । श्रीपतिः—

शक्तिशालिनि सिते सशीतगौ दुर्बलै रविजभौमभास्करैः ।
आश्रिते शशिनि वारिजोदये लग्नवर्तिनि गुरौ कृषिक्रिया ॥

इति ।

वृश्चिकान्त्यांशगे भौमे विलग्ने शोभना कृषिः ।

इति । एवं शुभकाले कृषिमारभ्य ज्येष्ठाषाढमासमूलर्क्षेषु बीजानि वापयेत् । तदैव भूमेरार्तवयोगात् । तथा च वसिष्ठः—

अनार्तवयुतं बीजं विनाशमुपगच्छति ।
वन्ध्यासु नरसंयोगाद्यथा भवति तत्तथा ॥
तस्मादार्तवसंयोगे वापयेद्बीजमुत्तमम् ।
ज्येष्ठे वा मासि मूलाख्ये आषाढे वा प्रयोजयेत् ॥

इति । गुरुश्च—

ज्येष्ठाख्ये मासि मूलाख्ये आषाढे च विशेषतः ।
सर्वेषां बीजजातीनां धरायामार्तवं भवेत् ॥
यस्य बीजस्य यत्काले भूमेरार्तवसंभवः ।
तस्मिन् काले तु तद्बीजं शुभं निर्वापयेत्सुधीः ॥

इति । बीजवापस्य नक्षत्राण्याह—

**बीजानां वपनेऽग्निरुद्रशमनज्येष्ठाऽहिपूर्वात्रयत्वष्टृक्षाण्यशुभानि मातृशशभृद्वस्वश्विनो मध्यमाः । अन्यान्याह शुभानि भानि धिषणो गार्ग्येण मध्ये हरिक्षीरेशावशुभे च नैरृतमघे प्रोक्ताऽर्धसस्याऽश्विनी ॥ ६ ॥**

सर्वेषां बीजानां वापे कृत्तिकाऽऽर्द्राभरणीज्येष्ठाश्लेषापूर्वात्रयचित्राख्यानि नव भान्यशुभानि । पुनर्वसुमृगशिरोधनिष्ठाऽऽश्लेषाश्विन्याख्यानि चत्वारि मध्यमानि । अन्यानि चतुर्दशभानि शुभानीति गुरुराह । तथा च तद्वाक्यम्—

वारुणं वैष्णवं स्वातिपुष्यशूर्पोत्तरास्त्रयः ।
रोहिणीमूलमैत्राश्च हस्तपौष्णमघास्तथा ॥

चतुर्दशैतास्तारास्स्युर्बीजनिर्वापणे शुभाः ।
वासवादित्यसौम्याश्वितारास्स्युर्मध्यमावहाः ॥
अन्याश्च नव तारास्स्युर्वर्ज्या बीजनिवापने ।

इति। गार्ग्यस्तु श्रवणवारुणभे द्वे मध्ये नैरृऋतमूले द्वे अशुभे आश्विनी-मर्धसस्यनिष्पत्तिप्रदामाह । तथाच तद्वाक्यम्—

अश्व्यादित्यार्द्रसौम्यानि धनिष्ठा चैव मध्यमा ॥

इति। आर्द्रा च मध्यमेति वसिष्ठः । चित्राश्विसौम्यधनिष्ठाश्च श्रेष्ठा इति नारदः—

मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु ।
समूलभेषु बीजोप्तिरत्युत्कृष्टफलप्रदा ॥

इति। एवं च भरणीकृत्तिकाऽऽश्लेषाज्येष्ठापूर्वात्रयभानि सप्ताशुभानि । रोहिणीपुष्यहस्तस्वातीमैत्रपौष्णोत्तरात्रयभानि नव शुभानि । अन्यान्ये-कादश मध्यानि । तानि च फणिबीजचक्राद्यानुकूल्ये ग्राह्याणि ॥

इति । चक्रे निषिद्धानि भान्याह—

**राह्वारूढाद्भानि चत्वारि पूर्वं तन्नक्षत्रं सप्त त-स्मात्पराणि । ज्ञेयं तस्माद्द्वादशं षोडशं वा विंशं चर्क्षं बीजवापे निषिद्धम् ॥ ७ ॥**

त्रिनाड्यात्मकं फणिचक्रं विलिख्य मूर्धाद्यङ्गेषु राह्वाक्रान्तभाद्व्यु-त्क्रमेण नाडीत्रयबहि(र्भूत)मेवंचक्रं सप्तविंशतिभानि विन्यसेत् । तत्र राह्वारूढाद्भात्पूर्वं राहुभुक्तर्क्षादीनि चत्वारि राहुपुच्छगतानि भानि तद्राह्वारूढं मूर्धगतेष्वाद्यं नक्षत्रं तस्मात् पराणि राहुभोग्यदाहादीनि सप्त, द्वे मूर्धगते, द्वे बहिर्गते, त्रीणि गलगतानीति सप्तर्क्षाणि, तस्मा-द्राह्वाक्रान्तभाद्व्युत्क्रमेण द्वादशं, षोडशं, विंशं च, नाडी वर्ज्यानि-

द्वादश बहिर्गतं भत्रयमिति पञ्चदश भानि बीजावापे वर्ज्यानि। अन्यानि द्वादश राहूदरगतानि ग्राह्याणि। तथाच नरपतिः—

सर्पभाद्व्युत्क्रमात्स्थाप्य त्रिनाडीचक्रवत्क्रमः।
शीर्षे त्रीणि गुदे त्रीणि भानिमा (?) द्वादशोदरे॥
पुच्छे स्थाप्यानि चत्वारि नाभिबाह्वोश्च पञ्चकम्।
वदनेष्वलकं विद्याद्गले टङ्कारकं तथा॥
उदरे धान्यवृद्धिश्च पुच्छे धान्यक्षयो मतः।
ईतिरोगभयं बाह्ये चक्रे बीजाप्तिसंभवः॥

इति। बीजचक्रं रत्नेनोक्तम्—

दिवाकराक्रान्तगतागतानि न सन्ति पूर्वापरगं द्वयं सत्।
प्राक्पृष्ठगं मध्यफलं भषट्कं बीजोप्तिकाले न च निष्फलानि॥

इति। बीजवापे तिथ्यादिकमाह—

**श्रेष्ठौ द्वौ बवबालवौ घटतुलावीणाधरा मध्यमाश्शस्ताः कर्कटसिंहगोमगझषास्त्याज्याः परे राशयः। मध्योक्ता तिथिरङ्गदिक्क्षितिमिता त्याज्यास्सरिक्तास्समाः भद्राः कैश्चन दिक्प्रयाणनियमो यात्रावदत्रेष्यते॥८॥**

अत्र बीजवापे बवबालवाख्ये द्वे करणे श्रेष्ठे। अन्यानि वर्ज्यानि। तथाच गुरुः—

करणेषु स्थिरास्सर्वे विष्टिगोगर्दभाह्वयाः।
गजकौलवसंज्ञे च वर्ज्यास्स्युर्बीजवापने॥

इति । अथवा अतिशायनार्थविहितेष्ठन्प्रत्ययान्तश्रेष्ठशब्दप्रयोगदर्शनादयं विशेषो द्रष्टव्यः—बवबालवे द्वे प्रशस्ते । कौलवादीनि चत्वारि मध्यमानि । सविष्टीनि स्थिराणि वर्ज्यानि ।
इति । तथा च गुरुः—

विष्टिवर्ज्यानि शस्तानि चराणि करणानि षट् ।
कदाचित् बीजशिष्यान्वै (?) बीजानिर्वापणे बुधैः ॥

इति । कर्किसिंहवृषभमकरमीनाः पञ्च राशयश्शस्ताः । कुम्भतुलामिथुनाख्यास्त्रयो मध्यमाः । परे मेषकन्याकीटधन्विनस्त्याज्याः । अत्र गुरुः—

मृगगोकर्किसिंहाख्या मीनश्च शुभदास्सदा ।
तुलामिथुनकुम्भास्स्युर्मध्यमा वर्जिताः परे ॥

इति । षष्ठीदशमीप्रथमास्तिथयो मध्याः । रिक्तासहितास्समसंख्यास्तिथयः त्याज्याः । कैश्चिदाचार्यैर्भद्रातिथिस्त्याज्येत्युक्ता । एवं च तृतीयापञ्चम्येकादशीत्रयोदशीपूर्णिमाः पञ्च तिथयश्श्रेष्ठाः । प्रथमाषष्ठीसप्तमीदशम्यश्चतस्रो मध्यमाः । अन्या वर्ज्याः । अत्र गुरुः—

ओजास्तु तिथयश्श्रेष्ठाः पक्षयोरुभयोरपि ।
प्रथमां नवमीं युग्मां अमावास्यां च वर्जयेत् ॥

वसिष्ठः—

प्रतिपद्दशमीषष्ठीतिथयो मध्यमा इमाः ।
बीजकर्मणि भद्रा च विशेषेण विवर्जिता ॥

इति । वर्ज्यर्क्षादिकमपि शुभदृष्ट्युदययोगेन शस्यते । तथाच गुरुः—

चन्द्रज्ञजीवशुक्राणां वारवर्गोदयाश्शुभाः ।
उदयाश्च दृशश्चैषां वर्ज्यर्क्षेष्वपि शोभनाः ॥

अर्कार्क्युदयो नृणा वारवर्गांशकादयः ।
उदयाश्च दशश्चैषां प्रोक्तर्क्षेष्वपि वर्जिताः ॥

इति । गोचरफलं च गुरुणोक्तम्—

सहजारिभवे क्रूराश्शुभास्सौम्या न शोभनाः ।
विभवे चान्ययोस्सौम्यास्स्ववर्गोच्चाद्द्वयाद्दते ॥
चन्द्रो भ्रातृसुतायस्त्री बन्धुधर्मार्थगश्शुभः ।
अष्टमस्था ग्रहास्सर्वे नेष्टा श्शुक्रश्च कामगः ॥

इति । वसिष्ठेन शुभास्तृतीयेऽपि शुभा उक्ताः—

शुभाष्षष्ठाष्टमे वर्ज्याः शेषस्थानेषु शोभनाः ॥

इति । स्वोच्चादिस्थाने षष्ठादन्यत्र शुभाः । उदयाष्टमगाभ्यामन्यत्र पापाश्च शस्ता इति गुरुः—

वृश्चिकान्त्यांशगे भौमे विलग्ने शोभना कृषिः ।
कदाचित् षष्ठवर्ज्येषु गृहेषु शुभदाश्शुभाः ॥
अष्टमोदयवर्ज्येषु पापराशिषु शोभनाः ।

इति । अत्र केचित् दोषविशेषतो वर्ज्या वसिष्ठेनोक्ताः—

कालकर्णिकली नोष्टौ दिवसाश्शोभनाः परे ।
नक्षत्रान्ते च तिथ्यन्ते मासान्ते दिवसक्षये ॥
उल्कापाते व्यतीपाते सग्रहे ग्रहपीडिते ।
वेधे च वर्जयेन्नित्यं ग्रहदोषयुतेषु च ॥

इति । गार्ग्योदितेषु फलान्युक्तानि—

उल्कापाते विनाशस्स्यात्कलहं सूर्यसंश्रिते ।
सग्रहे विग्रहं कुर्याद्वर्जितं ग्रहपीडिते ॥
कालकर्णीदिने मोहो धननाशः कलौ दिने ।
विष्टयां तत्र विनाशस्स्याद्व्यतीपाते कुलक्षयः ॥

संन्ध्यायां कलहं कुर्याद्रोगस्स्याद्विषुवद्दिने ।
पुत्रहानि ऋतुच्छेदे आत्मनोऽप्ययनागमे ॥
रिक्तायां च विनाशस्स्यान्मरणं नैधने तथा ।
नवम्यामशुभं विद्यादात्मानमयनक्षये ॥
मासक्षये च पुत्राणां भार्याया वत्सरक्षये ॥
पापग्रहदिने चैव पक्षच्छिद्रे तथैव च ।
एतेषु नवयोगेषु क्रूरकर्माणि कारयेत् ॥
अपि नक्षत्रसंपन्नं बीजवापं विवर्जयेत् ।

इति । गुरुश्च—

सर्वे दोषाविवर्ज्यास्स्युर्बीजनिर्वापणे बुधैः ।
अपवादादिभिः काले निर्दोषे निर्वपेद्बुधः ॥

इति । अत्र बीजवापे कृष्यारम्भे वा दिक्प्रयाणनियमः—एषु नक्षत्रादिषूदङ्मुखो गच्छेत् कृषिमारभेत बीजानि वपेदिति नियमो यात्रावदिष्यते । यथा—यात्रायां तत्तद्दिग्वारभादिषु तत्तद्दिग्गमनं परिघानतिक्रमश्च नियम्यते तथा अत्रापि तत्तद्दिग्वारभादिषु तत्तद्दिङ्मुखो भूत्वा कृषिमारभेत । बीजानि वपेदित्यादिनियमो द्रष्टव्यः ॥
अत्र गुरुवसिष्ठौ—

सप्तसप्तसु तारासु प्रागादिषु च वापयेत् ।
प्राङ्मुखाः कृत्तिकाद्यास्स्युः मखाद्या दक्षिणामुखाः ॥
मैत्राद्याः पश्चिमद्वारा धनिष्ठाद्या उदङ्मुखाः ।
कोणेषु चतसृष्वेषु तारास्वष्टसु वर्जयेत् ॥
परिघाख्यासु शून्यत्वाद्बीजनिर्वापणं बुधः ।
परिघो नाम दण्डोऽस्ति वायव्याग्नेयकोणगः ॥

न गच्छेत्तमतिक्रम्य बीजकृष्यादिकर्मणि ॥
तस्मात्तत्तन्मुखः कुर्यात्कृष्यारम्भादि बुद्धिमान् ।

इति । सार्वद्वारिकशूलादि यात्रावत् । तिथ्यादिपरिघाश्च गार्ग्येणोक्ताः—

पूर्वद्वारा तृतीया स्यात्साष्टमी च त्रयोदशी ।
चतुर्थी नवमी चैव दक्षिणास्या चतुर्दशी ॥
द्वितीयः पश्चिमद्वारा सप्तमी द्वादशी तथा ।
प्रथमैकादशी षष्ठी तिस्रः प्रोक्ता उदङ्मुखाः ॥
पञ्चमी पौर्णमासी च दशमी सर्वतोमुखाः ।
प्राग्द्वारौ विष्टिवणिजौ याम्यौ विष्टिचतुष्पदौ ॥
पश्चिमौ तैतुलो नागः किंस्तुघ्नगरजावुदक् ।
सिंहव्याघ्रवराहास्तु सर्वद्वारास्त्रयस्स्मृताः ॥

इति । मुहूर्ताश्च तारावत् । यथोक्तम्—

मुहूर्तानां च सर्वेषां नक्षत्रसदृशा गुणाः ।
द्वारतः कर्मतश्चैव फलतः पाकतस्तथा ॥

इति । निमित्तान्यत्र यात्रावद्द्रष्टव्यानि । अत्र गार्ग्यः—

मधुरास्सुस्वरास्स्निग्धाश्शान्तक्षेमादिवादिनः ।
वामतश्शकुनाश्श्रेष्ठाः बीजनिर्हारकर्मणि ॥

इति । बीजावापक्रमश्च गुरुणोक्तः—

सप्तमे दिवसे पूर्वं पञ्चमे बीजवापनात् ।
बीजान् जलाशये सिञ्चेत् साङ्कुरांस्तानथावपेत् ।
निर्जरान् व्यङ्कुरान् बीजान् न वपेद्वन्ध्यसस्यकान् ॥
विजलान् सजलान् बीजान् व्यङ्कुरान् साङ्कुरानपि ॥

इति । अत्र बीजवापकाले कर्षकोऽलङ्कृतस्सन्तुष्टः देवतां विनायकं ग्रहान् कृषिदेवताश्चाभ्यर्च्य सांवत्सरं संपूज्य तदुक्तसमये परिघानुकूलदिङ्मुखो बीजानि वपेत् । अत्रापि कृष्यारम्भवन्नियमो द्रष्टव्यः । द्वयोस्तुल्यत्वात् । तयोरपि दिवाकरणमष्टमशुद्धिश्च प्रागभ्यधायि । एवं सामान्येन बीजवापकालमुक्त्वा विशेषेणाह—

**व्रीहीनात्मदिनोदये दिनकृतो रक्ताख्यबीजं शनेः भूपुत्रस्य कुळुत्थकान् सुरगुरोर्बीजं समस्तं वपेत्। चान्द्रेऽथ क्रमुकं सुगन्धिसुमनोबीजं कवे रोहिणी चन्द्रे लग्नगते द्रुमौषधिलताबीजानि सर्वाण्यपि ॥ ९ ॥**

सूर्यादीनां स्वदिनेषु स्वोदयेषु व्रीह्यादिबीजानि वपेत् । यथा— सूर्यवारे सूर्योदये व्रीहिबीजानि वपेत् । मन्दस्य स्वदिनोदये रक्तबीजानि । कुजस्य कुळत्थबीजानि । गुरोः सर्वबीजानि । बुधस्य पूगबीजानि । शुक्रस्य सुगन्धिपुष्पद्रुमलताबीजानि । रोहिण्यां च चन्द्रोदये सर्वद्रुमौषधिलताबीजानि वपेत् । अपिशब्दात् इन्दोः स्वदिनोदये जलजपुष्पबीजानि वपेदित्युक्तम् । अत्र वसिष्ठगुरू—

अर्कोदयेऽर्कवारे च सस्यबीजं प्रवापयेत् ।
मन्दवारे गुरौ लग्ने बीजान् रक्तानथावपेत् ॥
कुजवारे कुजे लग्ने कोद्रवान् निर्वपेद्बुधः ।
गुरुवारे गुरोर्लग्ने सर्वबीजानि वापयेत् ॥
बुधवारे बुधे लग्ने निर्वपेत्क्रमुकं बुधः ।
सुगन्धि सुमनोबीजं शुक्रलग्नदिने न्यसेत् ॥

सोमवारे विधौ लग्ने जलपुष्पाङ्कुरान् न्यसेत् ।
वृक्षाणां रोहिणी पूज्या शीतगोरुदये बुधैः ॥
कूश्माण्ड्यादिषु वल्लीषु रोहिणी सुशुभावहा ।

इति । अत्रापि सर्वशब्दानामनुक्तसमुच्चयार्थत्वात्तद्वारोदयेषु अनुक्तबीजानां वापोऽपि द्रष्टव्यः । गुरुः—

सूर्यवारे रवेर्लग्ने रक्तबीजानि वापयेत् ।
आर्किवारेऽथ मध्येऽर्के बीजान् कृष्णान् प्रवापयेत् ॥
वापने कृष्णधान्यानां शुभौ वारोदयौ शनेः ।
शुक्रवारे च तल्लग्ने कौसुमान् स्थापयेत्तरून् ॥
गुरुवारे गुरोर्लग्ने स्थापयेत्फलिनस्तरून् ।

इति । एते योगाः सद्यस्कालीनबीजवापे द्रष्टव्याः । यस्मात् गुरुः—

एवं वारोदये योगे ग्रहाणां बीजवापनम् ।
शुभावहं प्रदिष्टानां सद्यस्कालीनवापने ॥

इति । बीजावापे सविशेषमन्यैरुक्तम्—

रोहिण्यार्द्रोत्तरापुष्यश्रवणं वारुणं वसु ।
एतास्ताराः प्रशस्तास्स्युर्महाबीजानि वापयेत् ।
चित्रामूलमखोत्तरात्रयवसुश्रीशेन्दुमित्रानिल-
प्राजापत्यविशाखहस्तवरुणेषूर्ध्वास्य राशिष्वपि ।
कन्यासिंहकुळीरगोमृगधनुः कुम्भं विहङ्गोदये ।
मीने वा भुवि नारिकेळपनसानाम्रेक्षुबीजान् वपेत् ॥
क्रमुकान्नारिकेळेक्षून् न वपेदूर्ध्वभे सदा ।
उक्तनक्षत्रलग्नेषु वापयेद्बुद्धिमांस्तदा ॥
मीनान्त्यपादगे शुक्रे लग्ने तालतरुं क्षिपेत् ।
कदळीनारिकेळं च क्रमुकादीनि वापयेत् ॥

वारर्क्षशुभसंयोगे पूगान् शुक्राहलग्नगे ।
तुलान्त्यांशगते लग्ने चन्द्रपिप्पलकान् वपेत् ॥
वृश्चिकान्त्यांशगे लग्ने जीवे पूगानाथावपेत् ।
मेषात्न्त्यपादगे शुक्रे लग्ने पद्मादि वापयेत् ।

अर्णवे—बीजानां वपने विशेषेण काल उक्तः—

विशाखाभरणीमूलकृत्तिकाहिमखासु च ।
त्रिपूर्वेषु सदा सौख्यं कन्दबीजादि वापयेत् ॥
शनिचन्द्रोदये कन्दजातीनां वापनं शुभम् ।
स्वातीज्येष्ठा च हस्तश्च पुनर्वस्वश्विनी तथा ॥
अनूराधा च चान्द्रं च रेवती त्वार्द्रभं तथा ।
एते लग्नादिसंस्थानां फलपुष्पदलादिनाम् ॥

इति । बीजविशेषाद्योगविशेषानाह—

**याम्येन्दुलग्ने बृहतीं निदध्यात्ताम्बूलवल्लीं नि-र्ऋतीन्दुलग्ने । गुरूदये कन्दफलप्रदानि बीजानि मूलोपगते हिमांशौ ॥**

याम्यर्क्षे चन्द्रोदये बृहतीबीजं तन्मूलं वा निक्षिपेत् । मूलर्क्षे चन्द्रोदये ताम्बूललताः निक्षिपेत् । तथा मूलर्क्षे चन्द्रे गुरूदये कन्दफलादीनि बीजानि निवपेत् । अत्र गुरुः—

भरण्यां बृहतीनां तु मेषलग्ने निवापनम् ।
नैर्ऋते नागवल्लीनामिन्दुलग्ने निवापनम् ॥

अपि च

वृक्षमूलस्य वल्ल्यादि वार्ताकादि विशेषतः ।
नीवारादीन् वपेन्मूले ताम्बूलं कन्दमूलकम् ॥

**चन्द्रे लग्ने वायुभे सर्वसस्यं त्वाष्ट्रे मुद्गान् वारुणे कृष्णधान्यम् । मैत्रे ताळं मातरीक्षून्निदध्यात् पूगं दस्रे शालिमात्मर्क्षसंस्थे ॥१०॥**

स्वात्यां चन्द्रोदये सर्वसस्यानि वापयेत् । चित्रायां मुद्गान् । वारुणे कृष्णधान्यानि । मैत्रे ताळवृक्षबीजं । पुनर्वसुभे इष्टबीजानि । आश्विन्यां पूगबीजानि । आत्मर्क्षे—मृगशिरस्तस्मिन् भे चन्द्रोदये शालिबीजानि वपेत् अत्र वसिष्ठः—

इक्षूणामदितिश्श्रेष्ठं सस्यानां वपनाह्वयम् ॥
मुद्गानां त्वाष्ट्रभं श्रेष्ठं ताळानां मैत्रभं तथा ॥
मूलं ताम्बूलवल्लीनां शालीनामिन्दुभं तथा ।
वारुणं कृष्णधान्यानां पूगानामश्विनी तथा ॥
एतस्मिन्नेव नक्षत्रे तन्नक्षत्रोदये तथा ।
कार्षिं कृत्वा खनित्वा च पुनस्तद्योगसंभवे ॥
कारयेद्बीजकर्मैतद्ददाति विपुलं फलम् ॥

इति—

**इन्दोरुदयेऽश्विन्यां भुवि(वपताद्दिक्षु) निवपेदिक्षुनाळिकेरादीन् । त्रिदशगुरौ लग्नस्थे चन्द्रे स्वांशस्थिते च नागलताम् ॥**

आश्विन्यां चन्द्रोदये इक्षुनाळिकेरपनसादीन् वपेत् । अश्विन्यादौ कुत्रचिन्नक्षत्रे कुळीरांशस्थे चन्द्रे सति गुरूदये नागलतां वपेत् । अत्र गुरुः—

आश्विन्यां लग्नगे चन्द्रे कृत्वा खातं कृषिं क्रमात् ।
नाळिकेरांस्तथेक्षूंश्च निदध्यात्फलवृद्धये ॥

अपि च—

पूगेक्षुनाळिकेरांश्च कन्दताम्बूलमश्विभे ।
स्वात्यां तृतीयपादस्थे जीवे लग्ने तथेक्षुकान् ॥
कुम्भपञ्चांशगे शुक्रे लग्नगे नाळिकेरकान् ।
चन्द्रे कर्क्यंशगे लग्ने जीवे लग्नस्थिते वपेत् ॥
भुवि नागलतां स्थातुं चिरकालं यदीच्छति ।
नाळिकेरांस्तथेक्षूंश्च निदध्यात्फलवृद्धये ॥

**शनिवारेण समेते भुजगर्क्षे शीतदीधितेरुदये ।**
**कदळीक्षुक्रमुकादीन् मेदिन्यां स्थापयेन्मतिमान् ॥**

मन्दवारे सार्पर्क्षे चन्द्रोदये कदळीक्षुपूगनाळिकेरादीन् वपेत् ।
तथा च गुरुः—

सार्पभे सौरिवारेण सहिते कर्कटोदये ।
स्थापयेदिक्षुवर्गादीन् कदळीक्रमुकानपि ॥

इति । योगानाह—

**शुक्रे गोपञ्चमांशे वपुषि भुवि वपेन्नाळिकेरस्य बीजं चित्रापादं द्वितीयं गतवति शशिजे लग्नगे पूगबीजम् । अन्त्ये पादे मघायास्तुहिनरुचि शुभैरीक्षिते पूगबीजं काव्ये मीनान्त्यभागे वपति बहुफलप्राप्तये सर्ववृक्षान् ॥१२॥**

वृषभवर्गोत्तमस्थे शुक्रे लग्ने नाळिकेरबीजं वपेत् । कन्याव-
र्गोत्तमस्थे बुधे लग्ने पूगबीजं क्षिपेत् । मघान्त्यपादस्थे शुभदृष्टे चन्द्रे

लग्ने चूतबीजं न्यसेत् । मीनवर्गोत्तमस्थे शुक्रे लग्ने सर्वान् पनसादीन् वृक्षान् वपेत् । बहुफलप्राप्तये इति सर्वत्र योजयेत् । अत्र गुरुः—

वृषस्य पञ्चमांशस्थे सिते लग्ने नियोजयेत् ।
बीजानि नाळिकेराणां बहुसङ्ख्यफलाप्तये ॥
चित्राद्वितीयपादस्थे बुधे लग्ने निवापयेत् ।
पूगाः पुनश्च तल्लग्ने स्थापितास्स्युर्महाफलाः ॥
मघान्त्यपादगं चन्द्रं यदि पश्यन्ति शोभनाः ।
तदा निहितचूतास्स्युर्भूमौ बहुफलप्रदाः ॥
शुक्रे मीनान्त्यभागस्थे लग्ने बहुफलाय च ।
पनसान् नाळिकेरांश्च पूगान् वृक्षांश्च निक्षिपेत् ।

इति ।

**चरवर्गोत्तमसंस्थे सौम्ये क्षिप्रर्क्षसंस्थितश्चन्द्रः । लग्ने यदि भवति तदा निहिताः क्रमुकाः बहुफलास्स्युः ॥१३॥**

चरराशौ वर्गोत्तमस्थे शुभे लग्नगते क्षिप्रतारासु निहिताः पूगा बहुफलास्स्युः । अत्र गुरुः—

चरवर्गोत्तमे सौम्ये लग्नस्थे क्षिप्रभे विधौ ।
पूगनिर्वापणं कुर्यात् फलबाहुल्यवृद्धये ॥

इति । सौम्यलग्न इत्यनेन अन्योऽपि योगस्सूचितः—

वारभैश्शुभयोगेषु गुरुशुक्रबुधोदये ॥
पूगबीजनिवापोऽत्र कार्यो बहुफलाप्तये ॥

इति—

**लग्ने मीनाद्यन्तनवांशास्थितचंन्द्रे वाप्यं बीजं कन्दफलानां लतिकानाम् । उप्ता मीने पञ्चम-**

**भागस्थितशुक्रे कूश्माण्ड्याद्यास्स्फीतफलास्स्युर्भुवि वल्ल्यः ॥१४॥**

मीने आद्यन्तमनवांशस्थे चन्द्रे कन्दफलप्रदानां लतानां बीजं वाप्यम् । तथा च—ज्योतिषार्णवे—

मीनाद्यन्तांशगे चन्द्रे लग्नगे कन्दवाल्लिकाः ।

याम्यत्रिपादगे सौम्ये लग्ने कूश्माण्डवल्लिकाः॥

वपेदित्यर्थः । मीने पञ्चमांशास्थिते शुक्रे लग्ने उप्ताः—निक्षिप्ताः कूश्माण्डकारवल्ल्युर्वारुकाद्या लता बहुफलप्रदास्स्युः । तथा च गुरुः—

मीनस्य पञ्चमांशस्थे शुक्रे लग्नमुपागते ।

कूश्माण्ड्याद्यास्समावाप्या लता बहुफलाप्तये ॥

इति ।

**हिमगौ शशाङ्कवारे मूलस्थे लग्नगे वपेद्दुर्व्याम् । गुरुवारे रेवत्यां गुरूदये वा महावृक्षान् ॥**

सोमवारे मूलस्थचन्द्रोदये महावृक्षान् वपेन् । गुरुवारे रेवत्यां नक्षत्रे गुरूदये वा तान् वपेत् । तथाच गुरुः—

सोमवारयुते मूले चापलग्ने महाद्रुमान् ।

स्थापयेज्जीवलग्ने वा रेवत्यां गुरुवारगे ॥

इति । अथानुक्तानि सङ्ग्रहे—

क्षिप्रे मूले द्विदैवे स्थिरमृदुषु च वाराधिपे चन्द्रवारे

वेन्दौ केन्द्रे समृद्धौ(?) फलति तरुलतागुल्मरोहादिकं च ॥

गुरुः—

अदितेस्तु चतुर्थांशे जीवचन्द्रौ यदोदितौ ।

तदा मोचावनं कुर्यात् कदळीक्रमुकांस्तथा ॥
जूके तु पञ्चमांशस्थे जीवे लग्ने विनिक्षिपेत् ।
इक्षुखण्डान् महावृद्ध्यै शुभयोगे तथा समम् ॥
आश्लेषे सोमवारे तु वपेदिक्षून् विधूदये ।
तुलान्त्यपादगे चन्द्रे विलग्नस्थेऽतिशोभनः ॥
निष्पावबीजनिर्वापो महाधान्यविवृद्धिदः ।
वृश्चिकान्त्यांशगे जीवे विलग्ने क्रमुकान् वपेत् ॥
महाफलैर्महाभोगैरेधन्ते क्षेमतश्श्रिया ।
चन्द्रेऽदितिगते लग्ने कृषिं कृत्वा पुनश्च तत् ॥
लग्ने विनिक्षिपेद्भूत्यै नाळिकेरान् (श्रिया) शुभावहाम्
सार्पर्क्षेन्दुविलग्ने च कृषिं कृत्वा पुनश्च तत् ॥
योगे विनिक्षिपेद्बीजान् कलमाद्यान् शुभावहान् ।
चन्द्रे समैत्रे लग्नस्थे कूपान् खात्वा तथैषु तु
पुनश्च योगेऽस्मिन् बीजांस्ताळजान्निवपेच्छुभम् ॥
चन्द्रे ज्येष्ठांशगे लग्ने कृषिं कृत्वाऽऽलवालकान् ।
पुनस्तद्योगकाले च वार्ताकादीन् वपेच्छुभम् ॥
वह्निक्षेपं तथैवाशु वृक्षमूलेषु योजयेत् ।
आरामादौ वृतिं कुर्याज्ज्येष्ठायां शीतगूदये ॥
नैरृते चन्द्रलग्ने च वपेन्नागलतादिकम् ।
आहिर्बुध्न्ये विधौ लग्ने सम्यगिक्षून् निवापयेत् ॥
आदितस्तु चतुर्थांशे जीवचन्द्रसिता यदि ।
उद्यन्ति च तथा कुर्यादायुष्कामी तु सूरणम् ॥
सोमभे सोमवारेण सहिते कर्कटोदये ।
भेदान् कलमजान् सर्वान्निवपेत्तद्विवृद्धये ॥

माहेयवारे सौम्यर्क्षे क्रियलग्ने प्रियङ्गवम् ।
निवाप्या विष्टिरिक्ताभिर्वर्जितैस्तिथिभिर्युते ॥
आहिर्बुध्न्ये गुरोर्वारे शुक्रांशे कर्कटोदये ।
निवपेज्जलपुष्पाणां बीजानां तद्विवृद्धये ॥
कोद्रवान्निवपेद्वृद्ध्यै कुजवारे यमोदये ।

इति । इत्यादिविशेषो द्रष्टव्यः । उक्तानामनुक्तानां च बीजानां वापे शस्तास्तारा गुरुणोक्ताः—

हस्तपौष्णाश्विसौम्यानि पुष्यमैत्रानिलानलाः ।
रोहिणी च प्रशस्तास्स्युस्सर्वबीजनिवापने ॥

इति ।

पुनर्वस्वन्त्यपादस्थे चन्द्रे लग्ने विनिक्षिपेत् ।
आम्रादीनां च बीजानि मधुवद्रसवन्त्यपि ॥

मैत्रान्त्यपादगं चन्द्रं यदि पश्यन्ति शोभनाः ।
तदा स्युर्निहिताश्चूता निरन्तरफलप्रदाः ॥

इति । साधारणं बीजावापकालमाह—

**सर्वत्र बीजवापे तिर्यग्वक्त्रास्स्मृता मध्याः ।**
**शीर्षोदयोर्ध्ववदनाश्श्रेष्ठतमा राशयस्तथा ताराः ॥**

सर्वत्र द्रुमौषधिलतानां बीजवापे तिर्यग्वक्त्रास्तारा राशयश्च मध्यमास्स्युः । अधोमुखास्तारा राशयश्च वर्ज्यास्स्युः । तेऽपि कन्दफलासु लतासु ग्राह्या इति केचित् । तिर्यग्वक्त्राश्च प्रसर्पिणीषु लतासु शस्ता इत्याहुः । साधारणान् बीजवापयोगानाह—

**द्रुमौषधीनां भुवि बीजवापं जीवे तनुस्थे लवनं**

**सुखस्थे। स्मरास्थिते संग्रहणं विदध्यान्नभस्स्थिते नव्यफलोपभोगम् ॥१७॥**

जीवे लग्नस्थे ओषध्यादीनां बीजानि वपेत्। गुरौ चतुर्थे स्थिते तासां लवनं कार्यम्। गुरौ सप्तमस्थिते तासां संग्रहणं कार्यम्। तस्मिन् दशमे स्थिते तासां नवफलादीनां आद्यमुपभोगं कुर्यात्। तथा च नारायणीये—

उदयति बीजनिवापो जामित्रे धान्यसंग्रहः कार्यः।
लवनमुदके? तिष्ठत्यमरभुरौ भोजनं च दशमस्थे॥

इति। अन्यान् साधारणान् बीजयोगानाह—

**सूर्यज्ञौ सुहृदुच्चसद्मनि तनावेकांशकस्थौ शुभौ लग्ने देवगुरौ भवे दिनकरो व्योम्नि ज्ञशुक्रौ तथा। पापे भ्रातृभवारिगे गुरुधनव्योमोदयस्थाश्शुभाः चान्द्रिः क्रूरसिताङ्गिरोहिमकराः कर्मादिपश्चक्षगाः॥**

**लाभे पापयुते, सुते सुरगुरौ, चन्द्रोदस्थेऽसितो(?), लग्ने सौम्यसितौ धने रविरवौ भौमो, ऽनुकूलाः परे। सत्ताराकरणर्क्षभेषु सुतिथौ जाते निमित्ते शुभे योगा बीजनिवापनेषु फलदास्स्युस्सर्व संपत्प्रदाः ॥१९॥**

स्वमित्रोच्चराशावेकांशगतौ सूर्यज्ञौ लग्ने यद्येकः। क्वचिद्राशौ गुरूदये दशमे शुक्रज्ञावेकादशेऽर्के अन्यः। त्र्यायारिषु

कश्चन शुभश्चेत् इतरः। दशमे ज्ञः, एकादशे कश्चन पापः, द्वादशे शुक्रः, उदये गुरुः, द्वितीये चन्द्रश्चापरः। एकादशे कश्चन क्रूरः, पञ्चमे गुरुः, चन्द्रः उदये, द्वितीये शुक्रश्चेदन्यः। ज्ञशुक्रावुदये, द्वितीये रविः षष्ठे कुजः, अन्ये मन्देन्दुगुरुवश्च एकादशादीष्टस्थानगा यद्यन्यः। शुभनक्षत्रकरणमुहूर्ततिथिनिमित्तानि यद्यपरः। एते सप्त योगाः द्रुमौषध्यादिबीजवापे शुभफलप्रदा भवन्ति।

अत्र गुरुः—

स्वमित्रतुङ्गराशौ तु यद्येकांशेऽर्कबोधनौ।
सहितौ तत्र बीजानां निवापश्शोभनावहः॥

बृहस्पतिर्विलग्नस्थो रविरेकादशस्थितः।
दशमे सौम्यशुक्रौ च योगोऽयं बीजवर्धनः॥

आयारिभ्रातृगाः पापाः धर्मकर्मस्वगाश्शुभाः।
उदयं च शुभस्य स्यात् स योगो धान्यपर्वतः॥

गुरुर्लग्ने व्यये शुक्रो लाभेऽर्कार्किकुजा धने।
शशिज्ञौ दशमे चैव स योगो धान्यपर्वतः॥

शुक्रो यदा द्वितीयस्थः पञ्चमे च बृहस्पतिः।
लग्ने शशी च लाभेऽन्ये स योगो बीजवर्धनः॥

भृगुसौम्यौ विलग्नस्थौ धनस्थोऽर्कोऽरिगः कुजः।
एकादशे रवेर्योगे बीजवापोऽभिवृद्धिदः॥

इति। नारायणः गार्ग्यश्च

तिथिर्मुहूर्तं नक्षत्रं शशिनं करणं तथा।
पञ्चकल्याणकश्चैष बीजकर्मणि पूजितः॥

इति । अन्यत्रोक्ताः केचिद्योगास्सन्ति । तेऽप्यत्र सूचिताः । ते यथा—

लग्ने जीवो भृगुर्वित्ते बुधार्कौ भ्रातरि स्थितौ ।
एकादशमशून्यं च स योगस्सस्यवर्धनः ॥
धनस्थाने शशी भ्रातर्यर्को लग्ने भृगुर्बुधः ।
चतुर्थे कर्मणि गुरुस्स योगो बीजवर्धनः ॥

इत्यादयो द्रष्टव्याः । एषु सर्वबीजानि वपेत् । एवमुप्तानां सस्यादीनां वर्धनार्थं जलस्रावं कर्तुं तदाधारतटाकादिखननकालमाह—

**जलतारायामिन्दोरुदये निखनेत्तटाककूपादीन् ।**
**कुर्याज्जलनिस्रावं फलद्रुमाणां च सर्वसस्यानाम् ॥**

पूर्वाषाढानक्षत्रे चन्द्रोदये तटाककूपवाप्यादिजलाधारान् खनेत् । सस्यादीनां जलनिस्रावं च कुर्यात् । तथा च गुरुः—

आप्ये चन्द्रोदये कूपतटाकखननं शुभम् ।
कणाम्बुस्रावणं कुर्यात् सस्यारम्भादिवृद्धये ॥
योगेऽस्मिंस्तोयनिस्रावं कुर्यादारामभूरुहाम् ।
सस्यानां च फलं तेषां भूरित्वं याति तच्चिरम् ॥
तस्मिन् काले जलं पीताः क्रमुका नालिकेरकाः ।
सत्फलैर्भूरिभिर्युक्ताः बहुभिस्स्युस्सुशोभनाः ॥

इति । अपि च—

ज्येष्ठाद्यन्तांशगे चन्द्रे विलग्ने भौमवारगे ।
निखनेत्कूपवाप्यादीन् तटाकपरिखादिकम् ॥
मन्दवारे च सस्वातौ वृषलग्ने शुभेक्षिते ।
सेतूनां बन्धनं कुर्यात्तटाके भेदमागते ॥

मन्दवारयुतार्द्रायां वृषलग्ने च बन्धनम् ।
सेतूनां कारयेदत्र शिलाबन्धादिकं तथा ।

तथा च—

चन्द्रभे याम्यभे चन्द्रे तृतीयांशे विलग्नगे ।
तटाककूपपूर्वांश्च निखनेच्छोभनाम्भसे ॥
सौम्ये याम्यतृतीयांशे लग्ने कूपतटाककान् ।
निखनेत्परिखादींश्च नितरां तत्प्रभूतये ॥
स्थिराण्यन्यानि सर्वाणि ध्रुवभे मन्दजीवयोः ।
वारे दृष्टे गृहे द्वाभ्यां स्थिरे सेतुं निबन्धयेत् ॥
शुक्रार्किरविचन्द्रास्तु यदैकांशगतास्तदा ।
वापीकूपतटाकादिसेतुबन्धनमारभेत् ॥

इति । श्रीपतिः—

चन्द्रोदये तद्दिवसे सुरेड्ये
चतुष्टयस्थे रससङ्ग्रहः स्यात् ।
उद्यानसस्योप्तितटाकवापी-
सेत्वादिकार्यस्य च सिद्धिरुक्ता ॥

इति । कूपादिखननबन्धनादिकर्मसु नक्षत्रादीन्याह—

**पुष्यपित्र्यवसुवारुणोत्तराः हस्तमित्रविधिभेषु चाप्यभे । जीवचन्द्रभृगुवासरोदये कूपकर्म निखिलं प्रशस्यते ॥२१॥**

पुष्यादिषु दशसु भेषु जलराश्युदये गुरुशुक्रचन्द्रवारेषु तदुदये च सर्वं कूपकर्म कूपवाप्यादीनां खननबन्धनादिकार्यमारम्भणीयमित्यर्थः ।

अत्र वराहमिहिरः—

हस्तमघानूराधापुष्यधनिष्ठोत्तरान्त्यरोहिण्यः ।
शतभिषगित्यारम्भे कूपानां शस्यते भगणः ॥

इति । विधिरत्नेऽपि—

हस्ते वा श्रवणे मघासु यदि वा मैत्रेऽन्त्यभे वारुणे ।
तिष्ये चोत्तरभत्रयेऽपि कथितं कूपस्य कार्यं जनैः ॥
लग्नस्थे वृषभे मृगे घटधरे तौल्यान्तिमे कर्कटे ।
ग्रीष्मे जीवसितेन्दुवासरयुते शुक्ले च पक्षे शुभम् ॥
जीवज्ञौ प्रथमायधर्मधनगौ कर्मात्मजभ्रातृगौ
सूर्याराऽर्किभुजङ्गमाः सहजगाः षष्ठायगाश्शोभनाः ।
चन्द्रः कल्यसुहृत्सुतायसहजस्त्रीधर्मकर्मायगः
शुक्रश्चन्द्रवदुत्तमाश्च खनने कूपस्य सर्वे ग्रहाः ॥

इति । कूपाद्यारम्भे योगमाह—

**आप्यभे हिमकरे चतुष्टये भार्गवे नियति दुर्बलैः खलैः । वाक्पतौ वपुषि बोधनेऽपि वा प्रारभेत निखिलान् जलाशयान् ॥२२॥**

जलराशिस्थे चन्द्रे केन्द्रे शुक्रे दशमे बुधे गुरौ वा लग्ने स्थिते खलैः पापैः दुर्बलैः यत्र क्वचित् स्थितैः युक्तेऽस्मिन् योगे सर्वान् जलाशयान्—तटाकादि प्रारभेत । अत्र श्रीपतिः—

लग्ने जीवे ज्ञेऽथवा दुर्बलैस्तु
क्रूरैश्शुक्रे चापि मेषूरणस्थे ।
आप्ये चन्द्रे सर्वतोयाशयाना-
मारम्भास्स्युस्सिद्धये निर्विकल्पम् ॥

इति । अन्ये त्वाहुः—अधोमुखेषु कूपादिखननमूर्ध्वमुखेषु कूपसेत्वादिवृद्धिकार्याणि । तिर्यङ्मुखेषु कूपसेत्वादि कार्यम् इति । जलनिर्गमे कीलस्थापनकालश्च गुरुणोक्तः—

पूर्वाषाढे रवेर्वारे वरुणर्क्षे भृगौ गृहे ।
भास्करांशोदये कुर्यात्कीलं द्वारे तटाकतः ॥
स्थाप्य कारस्करं कीलं तटाकात्तोयनिर्गमे ।
यत्र सस्यविवृध्यर्थं सिंहे (खे) शे सप्तमे गुरौ ॥

इति । कूपादिखननकाले महाशिलायामापतितायां तद्भेदकालो गुरुणोक्तः·

कृष्णाष्टम्यां च सप्तम्यां रौद्रभे यस्य कस्यचित् ।
राशौ लग्ने कुजांशे च शिलाभेदः प्रशस्यते ॥

ज्योतिषार्णवे—

जलप्रदानं . . . . . . खननं चालवालकम् ।
परकूलकरीषाख्य शासनं च विशेषणम् ॥
कृषिकालोक्तवत्कालं प्राङ्मुखोदङ्मुखोऽपि वा ।

इति । एधमानानां सस्यादीनां रक्षार्थं कुटीरादिकर्मणः कालमाह—

**अन्त्येंऽशेऽच्युतमघयोर्मध्ये बुध्न्यस्य मघवतः प्रथमे । उदये च सिंहधनुषोरादध्यात्सस्यरक्षणाय कुटीम् ॥ २३ ॥**

श्रवणमघयोरन्त्ये पादे उत्तराभाद्रपदर्क्षस्य मध्ये द्वितीयस्मिन् तृतीये वा पादे ज्येष्ठायामाद्ये पादे सिंहे धनुषि वा लग्ने सस्यादीनां रक्षणार्थं कुटीं कुर्यात् । तथा च गुरुः—

मघाविष्णवोश्चतुर्थैंशे त्वाहिर्बुध्न्यस्य मध्यमे ।

इन्द्रस्य प्रथमे कुर्यात् सिंहचापोदये कुटीम् ॥

इति । योगान्तरमपि तेनैवोक्तम्—

विश्वामरर्क्षगे चन्द्रे शशिवारे विधूदये ।
रक्षार्थं सस्यवर्गाणामुटजं कारयेत्सुधीः ॥

इति । सस्यादिषु मृगगवादिबाधापनयनायाह—

**रौद्रर्क्षे ववकरणे विष्टौ वा चापसिंहयोरुदये ।**
**निहितो हरति स्थाणुः सस्यारामादिकेषु मृगबाधाम्**

आर्द्रायां सिंहकरणे वा विष्टयां वा चापसिंहयोरुदये स्थापितः स्थाणुः। रौद्रर्क्षे खादिरादा ववकरणे वक्ष्यमाणः स्नुगादिः विष्टयां तदुक्ताश्वत्थादिः क्षेत्रारण्यादिसस्यारामेषु मृगगवाद्युपद्रवं हरति। तथा च गुरुः—

पापसिंहोदये स्थाणुः स्थातव्यो मृगभीतिदः ।
सस्यमध्येऽथवाऽऽरामे रौद्रर्क्षे मध्यमांशयोः ॥

इति।यद्यप्यत्र मध्यमांशयोरिति विशेषो नोक्तः; तथाऽपि गुरुणोक्तत्वा-द्त्राप्यनुषज्यः । सिंहकरणस्योदयघटिका आह—

**आकृतिरुद्रजिनाचलनयनसमिन्मूर्छनामहेन्द्रे-भ्यः। परघटिकायामुदयं यान्ति प्रथमादिसिंहकर-णानि ॥ २५ ॥**

शुक्लप्रतिपदपरार्धादन्यिष्टौ सिंहकरणानि । तानि क्रमेण तत्त-त्तिथ्यर्धेषु द्वाविंशत्येकादशचतुर्विंशतिचतुर्दशसङ्ख्याभ्यः परघटिका-यां त्रयोविंशतिद्वादशादिसङ्ख्यागतायां उदयं कुर्वन्ति । सिंहकरण वृक्षानाह—

**दिक्षु क्रमेण निहितास्स्नुगुदुम्बराश्व श्रीवृक्षत्रि-**

**ष्टिवकुळाश्च विकङ्कताश्च। रम्भा च वेणुरिति तेऽभ्यु-दयेमृगारेः सस्ये हरन्ति पशुकोलमृगादिबाधाम् ॥**

शुक्लप्रतिपदपरार्धाधीन्यष्टौ सिंहकरणानि । स्वोक्ततिथिनाडिकासु क्रमेण प्रागाद्यष्टदिक्षु उदयं कुर्वन्ति । तेषां स्नुगादयोऽष्टौ वृक्षाश्च शङ्क्वर्थं कल्पिताः । स्नुगसिपत्रः । श्रीवृक्षो बिल्वः । शेषाः प्रसिद्धाः । सिंहकरणोदयकाले तदुदयदिशि क्षेत्रोद्यानादिषु निहिताः तद्वृक्षशङ्कवः सस्यादिषु पशुवराहमृगाद्युपद्रवं हरन्ति । एतच्चापसिंहयोरुदय एव कार्यम् । तत्रैव रौद्रर्क्षे बवकरणे विष्ट्यां वेत्यभिधानात् । विष्ट्युदयेऽपि सस्यरक्षा कार्येत्युक्तम् । तत्र विष्ट्युदयघटिकास्तद्दिशश्च प्रागुक्ताः । संप्रति वृक्षानाह—

**कथयन्ति विष्टिवृक्षान् अश्वत्थं किंशुकं तथा वैणम्। कारस्करं विकङ्कतधातक्यौ दुग्धिकां च गिरिकर्णीम् ॥ २७ ॥**

शुक्लचतुर्थ्यपरार्धादीनामष्टविष्टीनामश्वत्थादीनष्टौ वृक्षान् वदन्ति ।

**क्षेत्रे निहिताः क्रमशो विष्ट्युदयप्रहरनाडिकादिषु च। सस्यानि विष्टितरवो गोपायन्त्येव गोमृगादिभ्यः ॥ २८ ॥**

विष्ट्युदययामकाले तन्नाडिकायां विशेषतः तदुदयादिशि क्षेत्रोद्यानादिषु निहितास्तद्वृक्षशङ्कवस्सस्यादीनि गोमृगवराहादिभ्यो रक्षन्ति गवाद्युपद्रवं हरन्तीत्यर्थः ।

[लवनेषु शुभानाह—

द्वादश्येकादशी रिक्ता वर्ज्या दर्शोऽष्टमी तथा ।
शङ्कूनामिति विष्टीश्च विशेषेण विवर्जयेत् ॥
वारवर्गांशकाद्यास्तु वर्ज्या भूमिजमन्दयोः ।
शेषाणां वारवर्गांशाः शुभदा लवने सदा ॥
शुभानां राशयश्श्रेष्ठाः वर्गाश्चैव शुभावहाः ।
दिवा फलानि शस्तानि रात्रौ सर्वविनाशनम् ॥
अन्येषां फलपुष्पाणां मूलादीनां तथैव च ।

इति । गुरुः—"चित्रायामुदिते चन्द्रे"। विधिरत्नेऽपि—"कर्कटे वृश्चिके वाऽपि"] ॥

कीटमूषिकादिबाधापनयनाय रक्षां कर्तुं योगद्वयमाह—

**नागर्क्षतिथ्यर्धमुहूर्तयोगे तेषु द्वयोरेव समागमे वा। निहन्ति रक्षा विहिता यथावत् क्षेत्रेषु कीटाखुमृगादिबाधाम् ॥ २१ ॥**

नागर्क्षमाश्लेषा नागकरण नागमुहूर्तानां त्रयाणां योग एको योगः। तेषु द्वयोर्नागर्क्षनागकरणयोः नागर्क्षमुहूर्तयोः नागकरणमुहूर्तयोर्वा योगे अन्यः। अस्मिन् योगद्वये विधिवत् क्षेत्रेषु विहिता कीलस्थापनादिका रक्षा तेषु कीटमूषिकमृगादिबाधामपनयति। तथा च गुरुः—

सार्पे मुहूर्ते सार्पर्क्षे करणे सार्पसंज्ञिते ।
स योगो नागयोगोऽयमथवा करणर्क्षयोः ॥
त्वक्पञ्चकं पञ्चकमूलयुक्तं समस्तधान्यैस्सह पञ्चगव्यैः ।
मृद्भाण्डसंस्थं नरसिंहबीजजप्तं न्यसेत्संपदि नागयोगे ॥

इति । एवं सुरक्षितानां परिपक्वानां ओषधीनां लवनकालमाह—

**तारासु वह्निहरसर्पभगादिकासु गुर्वंशके सुतिथिवारयुते सुलग्ने । कुर्यान्नरो लवनमादिममोषधीनां शूर्पाच्युतान्तकमघास्वळिकर्किणोर्वा ॥३०॥**

जीवांशकयुक्तासु कृत्तिकार्द्रादिनवतारासु जीवांशके सत्तिथिवारेषु शुभराश्युदये परिपक्वानामोषधीनां आदिमम्—प्रथमं लवनं कुर्यात् । विशाखाश्रवणमघासु भेषु वृश्चिककर्काटकराश्युदये वा लवनं कुर्यात् । अत्र गुरुः—

कृत्तिकारौद्रसर्पेषु भाग्यस्वात्यैन्द्रभेषु च ॥
विश्वभे शततारासु रेवत्यां गौरवांशके ॥
विष्टिरिक्ताविवर्ज्यासु तिथिषूक्ता स्ववेक्षिते ।
शुभवारे शुभे लग्ने लवनं प्रथमं हितम् ॥
याम्यवैष्णववैशाखपैत्रकर्कटवृश्चिके ।
प्रथमं लवनं कार्यं वृद्धिः शत्रुविनाशनम् ॥

इति । ज्योतिषार्णवे—

(१) आर्यमौषधविश्वेशत्वाहिर्बुध्न्यत्रयं मघा ।
ब्रह्मादित्यद्वयं मूलं लवनेषु शुभावहाः ॥

इति । ओषधीनां प्रथमसंग्रहकालमाह—

**अजहरयमहस्तमघाश्रवणेषु शनीक्षिते स्थिरे लग्ने । क्षेत्रेभ्यो धान्यानामादानं प्रथममधिगृहं कुर्यात् ॥३१॥**

रोहिण्यादिषण्णक्षत्रेषु मन्ददृष्टे स्थिरलग्ने क्षेत्रेषु लूनानामोषधीनामाधिगृहं प्रथममादानं कुर्यात् । तथा च गुरुः—

रोहिण्यार्द्रा मघा हस्त भरणी श्रवणेषु च ।
मन्ददृष्टे स्थिरे लग्ने धान्यसंग्रह इष्यते ॥

इति । अपि च—

चित्रायामुदिते चन्द्रे कृषिं कुर्याद्विचक्षणः ।
लवनं भोजनं श्रेष्ठं स्वात्यामप्यादिमं समम् ॥
धान्यसंग्रहणं कुर्याद्वारुणर्क्षे विधूदये ।

इति । धान्यसंग्रहयोगानाह—

**धान्यानां नवसङ्ग्रहे शशिशनी लग्ने श्रितैकांशकौ लग्नस्थे स्वसुहृद्गृहेऽर्कशशिनावेकांशकस्थौ शुभौ ॥ रोहिण्यां शनिवासरे स्थिरतमे लग्ने च मन्दोदये व्रीहेर्जीवनिरीक्षितौ रविकुजौ स्वोच्चैकभागोदितौ ॥३३॥**

चन्द्रमन्दौ क्वचि(द्वावे)(दे)कांशस्थौ लग्ने स्तः; धान्यानां नवसंग्रहे प्रथमसंग्रहणे शस्तोऽयं योगः । सूर्येन्दू स्वमित्रराशावेकांशकस्थौ लग्ने; द्वितीयः। शनिवारे रोहिण्यां स्थिरराशिगे मन्दे लग्ने; तृतीयः , एते त्रयो योगाः धान्यसङ्ग्रहे श्रेष्ठाः । रविकुजौ स्वोच्चराशावेकांशकस्थौ गुरुदृष्टौ लग्ने स्तः; अयं योगः व्रीहिसंग्रहे शस्तः । अत्र गुरुः—

यदैकांशे विलग्नस्थौ चन्द्रमन्दौ क्वचित् स्थितौ ।
धान्यानां सङ्ग्रहं कुर्यात्प्रभूतं धान्यमर्जयेत् ॥

एकांशकसमायुक्तौ भान्विन्दू मित्रभे यदि ।
धान्यसंग्रहणं श्रेष्ठं धान्यसंपद्विवृद्धये ॥
यद्येकांशकमायातौ स्वतुङ्गे रविभूमिजौ ।
व्रीहिसंग्रहणं श्रेष्ठं जीवदृष्टियुतौ यदि ॥
अत्युच्चसंस्थे सर्वस्मिन् लग्ने मूर्धोदयं गते ।
योगपर्वत इत्याहुः वृद्धिकर्मणि पूजितम् ॥
अत्युच्चसंस्थिते भानौ शशिन्यत्युच्चसंस्थिते ।
तयोस्सूर्योदयं यावत्तावत्पर्वत उच्यते ॥

इति । अपि च—

चित्रायामुदिते चन्द्रे कृषिं कुर्याद्विचक्षणः ।
लवनं भोजनं श्रेष्ठं स्वात्यामप्यादिमं समम् ॥
धान्यसङ्ग्रहणं कुर्यात् वारुणर्क्षे विधूदये ।

इति । विधिरत्नेऽपि—

कर्कटे वृश्चिके वाऽपि लवनं संप्रशस्यते ।
सर्वराशिषु वा शस्तं यदि बन्धुगतो भृगुः ॥
लग्नं गते भृगौ वा स्याद्यदि कामान्विते गुरौ ।
भृगौ लग्नेऽथवा चन्द्रे कर्मगे लवनं शुभम् ॥

इति ।

इन्दौ भवे सुते चास्ते गुरौ लग्नेऽस्तगे यमे ।
धान्यार्णव इति ख्यातो योगोऽयं धान्यवृद्धिकृत् ॥
जीवोदयेऽथवा लाभे केन्द्रे लग्ने दिवाकरे ।
धान्यसङ्ग्रहणं कुर्यात् योगोऽयं धान्यपर्वतः ॥
मन्दोदये गुरौ वाऽस्ते सुते वा लाभगे गुरौ ।
धान्यमेरुरिति ख्यातो योगो धान्यसमृद्धिकृत् ॥

उच्चोच्चभागागतमन्दलग्ने मन्देऽस्तगे वित्तगते च जीवे ।
पुत्रे तु सूर्ये पुरुहूतनाथे धान्याकरं प्राहुरिति स्म वृद्धाः ॥
स्थिरे सौम्यांशगे चन्द्रे सुगुणाढ्ये बलान्विते ।
वेलावृद्धिसमायुक्ते कारयेद्धान्यसंग्रहम् ॥
मन्दोदयेऽपि वा राहोः तथैव गुळिकोदये ।
धान्यसङ्ग्रहणं कुर्यात् न रिक्तासु न विष्टिषु ॥
मन्ददृष्टे चरे लग्ने कुर्याद्वा धान्यसङ्ग्रहम् ।

यथोक्तयोगालाभे धान्यसंङ्ग्रहे नक्षत्राण्युक्तानि ज्योतिषार्णवे—

[1] आमणकेऽनुषट्कं च विश्वाहिर्बुध्न्यभात् पृथक् ।
चत्वारि मघमूले च धान्यसङ्ग्रहणे शुभाः ॥
जीवमन्देन्दुशुक्राणां वारवर्गोदयाश्शुभाः ।
भौमार्कवारवर्गाद्या मध्यमा इति कीर्तिताः ॥
स्थिरराशिषु वृद्धिस्स्यात् चरर्क्षे शत्रुभिर्भयम् ।
चरराशिविवर्ज्यस्स्यात् धान्यसंङ्ग्रहणे शुभः ॥
वृषचापयमे शुक्रजीवसौम्या यदोदिताः ।
कन्यकासंभृतं धान्यं गार्भिणी सन्निवेशयेत् ॥
वारनक्षत्रयोर्योगे शुभे गुरुयुतेक्षिते ।
स्थिरोदये च गृह्णीयात् दृष्टं कन्याहितं सुधीः ॥

श्रीपतिः—

रौद्रे पैत्रे वारुणे पौरुहूते
याम्ये सार्पे नैरृते चैव धिष्ण्ये ।
पूर्वाख्येषु त्रिष्वपि श्रेष्ठ उक्तो
मद्यारम्भः कालविद्भिः पुराणैः ॥

[1] आर्याहाकेशषट्केच

मेषे मेषांशगे लग्ने जीवेन्दुज्ञासितेष्वपि
पश्यन्नेकतरो लग्नं गुडवृद्धिकरश्शुभः ॥
कुजजीवौ यदा काले प्रथमांशे विलग्नगौ ।
पत्राणां विक्रयं कुर्यात् तदा ताम्बूलजन्मनाम् ॥

इति । धान्यादीनां क्रयविक्रययोगोऽपि तेनैवोक्तः—

पञ्चम्यां शुक्लपक्षस्य स्वातियोगे विधूदये ।
क्रये च विक्रये सिद्धिर्यात्रा चापि शुभप्रदा ॥

इति । क्रयविक्रये यथोक्तयोगादावेव नक्षत्रादीनि ज्योतिषार्णवे प्रोक्तानि—

उत्तरात्रयरोहिण्यः पौष्णमूलायप्वारुणाः ।
विशाखाचन्द्रभं पैत्रं तिष्यादित्यकरास्तथा ॥
अश्विसौम्ये(न्दु)न्द्रभाग्याश्च शुभदाः क्रयविक्रये ।
विच्छिद्रास्तु विरिक्ता वा तिथयः शुभदा मताः ॥
चन्द्रशुक्रज्ञजीवानां वारवर्गोदयाश्शुभाः ।
गोयुग्मान्त्यालिकुम्भाश्च सिंहश्च शुभदास्तथा ॥
पापास्त्रिलाभषष्ठस्थाः शुभाः केन्द्रत्रिकोणगाः ।
अतिवृद्धिकरा ज्ञेया सार्परन्ध्रे विनाशदाः ॥

इति । कोष्ठागारे धान्यक्षेपकालमाह—

**मात्रंशेऽन्त्ये जीवशशाङ्कान्वितलग्ने कोष्ठागारे नूतनधान्यं निदधीत । मेषे चन्द्रे स्वांशगतेऽङ्के सति धान्यैः पूर्णं कुर्यात् कोष्ठगृहं नास्य विनाशः ॥३३॥**

धान्यादिक्षेपार्थं दार्वादिविहितं गृहं कोष्ठागारमित्युच्यते। पुनर्वसुचतुर्थांशस्थयोः गुरुचन्द्रयोरुदये नूतनधान्यानि कोष्ठागारे निक्षिपेत्। मेषे स्वांशस्थे चन्द्रलग्ने कोष्ठगृहं धान्यैः पूरयेत्। अस्य चोराग्न्यादिभिः नाशो न भविष्यति। अत्र गुरुः—

अदितेस्तु चतुर्थांशे जीवचन्द्रोदयो यदि।
धान्यसंग्रहणं कुर्यात् कोष्ठागारे च निक्षिपेत्॥
स्वनवांशस्थिते चन्द्रे मेषलग्ने प्रपूरयेत्।
कोष्ठागारं धनैर्धान्यैः पूरयेदविनाशकृत्॥

इति। केचिदेवं योजयन्ति—क्वचिद्राशौ स्वनवांशस्थे चन्द्रे मेषलग्ने कोष्ठागारं धान्यैः पूरयेत् इति। उभयमपि ग्राह्यम्॥ कुसूलादिषु धान्यक्षेपकालं तस्माद्धान्यादानकालं चाह—

**शुक्रेन्द्वोरुदये बुधा निदधतां धान्यं कुसूलादिके तत्तस्माच्च समुद्धरन्तु दिवसे मन्दस्य मन्दोदये। तद्बध्नन्तु विलग्नगे भृगुसुते तच्छादयन्तूदये मन्देन्द्वोः पितृरोहिणीजलपतिज्येष्ठासु संयुक्तयोः॥३४॥**

धान्यक्षेपार्थं वंशवेत्रादिशलाकाभिर्निर्मितं गोळाकारं कुसूलमित्युच्यते। कुसूलकोष्ठागारादिषु शुक्रचन्द्रयोरुदये धान्यं निक्षिपेत्। मन्दवारे चन्द्रोदये कुसूलादिभ्यो धान्यमुद्धरेत्। शुक्रोदये कुसूलादिकं बध्नीयात्। मघारोहिणीवारुणज्येष्ठासु स्थितयोः मन्दचन्द्रयोरुदये कुसूलादिकं धान्यपूरितं छादयेत्। तथाच गुरुः—

चन्द्रे च सभृगौ लग्ने स्वहोरायां स्थिरांशके।
जीवदृष्टे गृहे धान्यं निक्षिपेद्गृहदृये शुभम्॥

मन्दवारे शुभर्क्षेषु मन्दलग्नेऽथवा गुरोः ।
धान्यानां तु व्ययं कुर्यात् शेषं वृद्धियुतं भवेत् ॥

अन्येऽपीदृशा योगास्सूचिताः । ते यथा—

स्थिरराशौ स्थिरे चन्द्रे स्थिरराशौ च भार्गवे ।
भार्गवस्योदये कुर्याद्धान्यानां तु व्ययं तथा ॥
एकांशकगतौ स्यातां गुरुचन्द्रौ यदा क्वचित् ।
धान्यानां तु व्ययं कुर्यात् तदा सोऽतिसमृद्धिकृत् ॥
नीचस्थानगते चन्द्रे नीचस्थानगते रवौ ।
धान्यादीनां व्ययं कुर्यात्तच्छेषं नाशु नश्यति ॥

एवं व्ययघोगाभावे तत्काले नक्षत्रादीन्युक्तानि । ज्योतिषार्णवे-

अश्विन्यां च पुनर्वस्वोः पुष्ये च त्र्युत्तरासु च ।
हस्तमैत्रश्रविष्ठासु सौम्यश्रवणपौष्णभे ॥
धान्यानां तु व्ययं कुर्यात् वृद्धिमिच्छन् गुरोरपि ।

इति ।

कृत्तिकारोहिणीरौद्रचित्रा ज्येष्ठा च नैरृतम् ।
स्वातीशतभिषग्याम्या निन्दितास्तद्व्यये सदा ॥
शेषाणि मध्यमान्याहुः धान्यादीनां व्यये बुधाः ।
आदित्यभौमशुक्राणां वारवर्गाश्च निन्दिताः ॥
शेषाणां तु शुभाः प्रोक्ताः कैश्चिदुक्तः प्रशस्यते ।
स्थिरोभयचराश्श्रेष्ठा मध्या निन्द्याः क्रमाद्व्यये ॥
सर्वे नेष्टा रन्ध्रगता ग्रहाश्शेषेषु चोक्तवत् ।

इति ।

प्राजापत्यमघाज्येष्ठाशततारासु युक्तयोः ।
मन्देन्द्वोस्स्थानयोर्लग्ने धान्यप्रच्छादनं शुभम् ॥

इति । पूरणकालश्च तेनैवोक्तः—

सूर्यवारे मघायोगे हस्ते वा नैरृतेऽपि वा ।
कोष्ठागारं तु सम्पूर्य स्थिरलग्ने गुरूदये ॥

इति । संभृतानां धान्यादीनां विक्रयादिष्वन्नप्राशनवत् कालः । तथाच नारदः—

एवं हि कृषिवाणिज्यबीजनिर्वापणादिषु ।
लवने धान्यपूर्वाणामोषधीनामयं विधिः ॥

इत्यन्नप्राशने अतिदिष्टवान् । धान्यकुट्टनकालो गुरुणोक्तः—

वृक्षे(कुशे) स्वांशे यमे लग्ने छित्वा वृक्षान्निपात्य च ।
कुर्वीतोलूखलं चास्मिन् पुनर्योजति(नि) तण्डुलान् ॥

इति ;

**एकांशकस्थौ शशिसैंहिकेयौ लग्ने यदा सूर्यसुतेन दृष्टौ । तदैव धान्यस्य करोतु रक्षां न मूषिकादेर्भवतीह भीतिः ॥ ३५ ॥**

चन्द्रराहू द्वौ क्वचिद्राशावेकांशकगतौ मन्ददृष्टौ यदा लग्नेस्तः तदा तल्लग्ने धान्यस्य मूषिकचुचुन्दर्याद्युपद्रवप्रतिघाताय निर्गुण्डीकीलकादिभिः रक्षां कुर्यात् । मूषिकादिभ्यो भयमिह धान्ये न भवति । तथाच गुरुः—

यदैकांशे विलग्नस्थौ चन्द्राराहू यमेक्षितौ ।
धान्यरक्षां तदा कुर्यान्मूषिकाद्यैर्न बाध्यते ॥

राहावेकस्मिन् लग्नेऽपीदृशो योगः । तथा च गुरुः—

राहौ शुक्रांशगे लग्ने मुखपुच्छविवर्जिते ।
निर्गुण्डीकीलकाः क्षेत्रे स्थाप्यास्ते धान्यरक्षकाः ॥

इति ॥ गृहक्षेत्रादिरक्षार्थं प्राकारादिनिर्माणकालमाह—

**आप्ये वरुणर्क्षे वा कुजवारे लग्नसंस्थिते मन्दे।**
**आदध्याद्द्रुमवप्रप्राकारादीन् गृहस्य रक्षार्थम् ॥ ३६**

पूर्वाषाढावारुणर्क्षयोः कुजवारे मन्दोदये गृहक्षेत्रादिरक्षार्थं द्रुमान् स्थापयेत् । वप्रप्राकारादींश्च कुर्यात् । तथाच गुरुः—

पूर्वाषाढे च वारुण्ये कुजवारे यमोदये ।
प्राकारेणावृतिं कुर्यात् तथा वप्रवृती अपि ॥

अपि च ।

अजैकपाद्विधौ लग्ने प्राकारादिनिबन्धनम् ।
वारुणे कुजवारे तु प्रकारे कण्टवेष्ठनम् ॥
मन्दे विलग्नगे चैव चोरबाधा न विद्यते ।
चन्द्रकेतू यदैकांशे विलग्नं समुपागतौ ॥
निर्गुण्डीकीलकै रक्षां गृहस्यात्र प्रयोजयेत् ।
मन्दे शुक्रांशगे लग्ने नीचराशिग्रहैर्विना ॥
निर्गुण्डीकीलकाः स्थाप्याः गृहद्वारे गृहे सुखम् ।
केतौ शुक्रांशगे लग्ने मुखपुच्छविवर्जिते ॥
खादिरं कीलमास्थाय सर्वेषां हितमावहेत् ।
चन्द्रकेतू यदैकांशे विलग्नं समुपागतौ ॥
निर्गुण्डीकीलकै रक्षां कुर्यात् द्वारेषु पश्यताम् ।

इति । गृहादिरक्षार्थं वप्रप्राकारादिस्थिरकर्माणि योगान्तरं गुरुणोक्तम्—

यदैकांशे विलग्नस्थौ मन्दराहू क्वाचित्तदा ।
स्थिरकार्याणि सर्वाणि स्थित्यै कुर्याद्विचक्षणः ॥

इति । उपसंहरति—

**इति पद्यैरनवद्यैरिह सप्तत्रिंशता कृतो दशमः ।**
**कृषिबीजनिवापादिक्रियाक्रमाध्याय एष संपूर्णः ॥**

आदौ कृष्यर्थं भूप्रवेशः । ततः कृषिकर्म । तदनु बीजावापः अथ कूपखननं, जलनिस्त्रावादि सस्यरक्षा च, अथो धान्यसंग्रहादि धान्यरक्षा चेति क्रमागतक्रियाभिधायी दशमोऽयमध्यायः सप्तत्रिंशता पद्यैः कृत इत्यर्थः ॥

इत्थं मुहूर्तशास्त्रे व्याख्यातः कथितसर्वकृषिकर्मा ।
पूर्णो विद्यामाधवसुतेन दशमोऽयमध्यायः ॥

**इति मुहूर्तदीपिकायां विद्यामाधवीयव्याख्यायां**
**दशमः कृषिबीजावापाध्यायः.**



# सव्याख्याने विद्यामाधवीये स्मृता निबन्धाः.

# सव्याख्याने विद्यामाधवीये स्मृता निबन्धारः

पुटसङ्ख्या.

